9

TRIVANDRUM SANSKRIT SERIES
No. CXXXVIII.
Śrī Citrodayamañjarī
No. XXVII.



THE

# ĀŚVALĀYANAGṚHYAMANTRA-VYAKHYA

OF

Haradattamiśra.

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ,
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum,*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE,

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1938.

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १३८.

श्रीचित्रोदयमञ्जरी

ग्रन्थाङ्कः २७.

---

श्रीहरदत्तमिश्रविरचिता

# आश्वलायनगृह्यमन्त्रव्याख्या ।

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता ।

---

सा च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

---

कोल्लमाब्दाः १११३. क्रैस्ताब्दाः १९३८.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

This commentary on Āśvalāyanagṛhyamantra goes a long way towards the fulfilment of a long-left desideratum in the Vedic world. Śrī Haradattamiśra has won celebrity as the author of Anāvila, a commentary on Āśvalāyanagṛhya. Again he easily tops the long line of men of letters by the publication of his Kāśikāvṛtti. The following couplet

"आश्वलायनगृह्योक्तपाकयज्ञेषु कर्मसु ।
मन्त्रा ये विनियुक्तास्ते व्याख्याताश्चक्रपाणिना ॥"

at the close of the 1st chapter discloses another appellation of the author as Cakrapāṇi. The first three chapters of Āśvalāyanagṛhya deal with religious functions and the fourth with the obsequies. Ṛks, Mantras and Brāhmaṇas regarding Pākayajña etc. are quoted profusely in illustration of the principles enunciated therein. A classification of the Prakaraṇās contained herein is superfluous in spite of its manifold character. An index to the Ṛks and other citations is furnished at the close. This edition is based on the following manuscripts belonging to :—

Messrs:

1. Nārāyaṇan Nīlakaṇṭhan Mūttatu, Pāṭakaśśeri, Ettumānūr.

2. Parameśvaran Nārāyaṇan Bhaṭṭatiri, Tukalaśśeri, Tiruvalla.

3 & 4. Tuppan Tuppan Nampūrippād, Punnorkoṭṭumana, Kunnattunād.

5. Kuñjan Tirumulpād, Cennittala, Mavelikkara. This manuscript is 300 years old.

Preliminary to the publication of the Devaśvāmybhāṣya and other allied compositions, I have great pleasure in presenting this work to the enlightened public.

Trivandrum,
25-11-1113.

K. SĀMBAŚIVA ŚASTRĪ,
*Curator.*

॥ श्रीः ॥

## निवेदना ।

इयम् आश्वलायनगृह्यमन्त्रव्याख्या चिरतरप्रतीक्षिता वैदिकलोकैः । श्रीहरदत्तमिश्राश्चाश्वलायनगृह्यव्याख्याम् अनाविलां विरचय्य विद्वल्लोकस्य सुपरिचिताः । न केवलमनेन पथान्येनापि वृत्तिव्याख्यादिना शास्त्रग्रन्थेन कृत-प्रतिष्ठा अनुष्ठानशिष्टाश्चैते किमपि परमं भूषणं प्रामाणिकेषु प्रथन्ते । साप्य-नाविलास्मदधिकरणादेव प्राक् प्राकाशि । तत्र च क्रिस्त्वब्दीयद्वादशशतक-जीवितामीषां यथावन्निर्धारिता सर्वसम्मता । परन्तु प्रथमाध्यायपरिसमाप्तावत्र कृतौ

"आश्वलायनगृह्योक्तपाकयज्ञेषु कर्मसु ।
मन्त्रा ये विनियुक्तास्ते व्याख्याताश्चक्रपाणिना ॥"

इति दर्शनाद् व्याख्यातृनामधेयमन्यदपि चक्रपाणिरूपमुपलभ्यमानमन्यतरदु-पपदं गमयति । चतुरध्याय्यामाश्वलायनगृह्ये प्रथमया त्रय्या पूर्वकर्मणामन्तिमेन चतुर्थेनाध्यायेनापरकर्मणां च विधयः प्रवर्तन्ते । तत्र सर्वत्र पाकयज्ञादिकर्मो-पयोगिन आर्चा ब्राह्मणाश्च मन्त्रा इह समुद्धृत्य प्रकरणोपयोगादिप्रदर्शनेन व्याख्यायन्ते । अतो गृह्यमन्त्रव्याख्यायाः खण्डशः प्रकरणबाहुल्येऽपीह तादृशः संविभागो नापेक्षितः । ऋचां च समुद्धृतानां प्रदेशाश्च विशिष्येह प्रसाधने समुट्टङ्किताः ॥

अस्य च प्रसिद्धीकरणस्यावलम्बभूता मातृकाः

१. एत्तुमानूर् पाटकश्शेरि नारायणन् नीलकण्ठन् मूत्तु-स्वामिका ।

२. तिरुवल्ला तुकलश्शेरि परमेश्वरन् नारायणन् भट्टतिरिस्वामिका ।

३, ४. कुन्नत्तुनाड्ड पुन्नोर्कोट्टुमन तुप्पन् तुप्पन् नम्पूरिप्पाड्ड-स्वामिके ।

५. मावेलिक्कर चेन्निचल कुञ्ञनुजन् तिरुमुल्पाड्स्वामिका च ।

पञ्चाप्यमूः प्रायस्त्रिशतवत्सरीवृद्धाः ।

नचिरादेतदादिषु ग्रन्थेषु प्रसाधनप्रकाशनयोः कृतदृष्टिरहं देवस्वामि-भाष्यादीन्यपि प्रसिद्धीकृत्य धन्यमात्मानं चिकीर्षुः सद्यस्तत्कृते पूर्वरङ्गायित-मिमं महाजनसमक्षमवतारयामि ॥

अनन्तशयनम्,
२५-११-११३.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

श्रीहरदत्तमिश्रविरचिता

# आश्वलायनगृह्यमन्त्रव्याख्या।

---

## प्रथमोऽध्यायः।

आश्वलायनगृह्योक्तपाकयज्ञेषु कर्मसु।
मन्त्राणां विनियुक्तानां व्याख्यानं क्रियतेऽधुना॥

अत्युक्तानि दुरुक्तानि यान्यनुक्तानि च स्फुटम्।
समादधतु विद्वांसस्तानि सर्वाणि बुद्धिभिः॥

तत्र प्रथमं मन्त्रविनियोगो वक्तव्यः। तत आर्षकथनम्। ततश्छन्दोनिर्देशः। ततो देवताभिधानम्। विनियोगादिचतुष्टयाज्ञाने दोषः स्मर्यते श्रूयते च। तत्र स्मृतिः—

"मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविन्न यः।
याजनाध्यापनादेति छन्दसां यातयामताम्॥
स्थाणुमिच्छति वा गर्ते पात्यते मीयते प्रवा।"

पापीयान् भवतीत्यर्थः। एवं ब्राह्मणमाह तमिति। अथ श्रुतिः--"यो हवा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छेति गर्तं वा पद्यति प्रवा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ती"ति। "अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति श्रेयान् भवति। अयातयामान्यस्य छन्दांसि भवन्ति। तस्मादेव देवतादि मन्त्रे विद्यादि"ति। अतो मन्त्रे[1] मन्त्रे विनियोगादिचतुष्टयं बोद्धव्यम्। तत्र ऋषिज्ञाने[2] दैवतज्ञाने चार्थावगतिरुपयुज्यते। अतश्च मन्त्र[3]विवरणमर्थवत्॥

---

१. 'न्त्र' ग. पाठः. २. 'विदे' क., 'षिज्ञाने चार्था' ग. पाठः. ३. 'न्त्रे' क. पाठः.

G. P. T. 2811. 500. 25-5-1109

तत्र प्रथमं तावत् पाकयज्ञप्रशंसार्थमुदाहृताश्चतस्र ऋचो व्याख्यायन्ते —

यःसमिधायआहुतीयोवेदेनददाशमर्तोअग्नये ।
योनमसास्वध्वरः ॥

(अष्ट० ६. अ० १. सू० १९. ऋ० ५.)

तस्येदर्वन्तोरंहयन्तआशवस्तस्यद्युम्नितमंयशः ।
नतमंहोदेवकृतंकुतश्चननमर्त्यकृतंनशत् ॥

(अष्ट० ६. अ० १. सू० १९. ऋ० ६.)

तत्र यस्समिधा य आहुती इति द्वे । अनयोः सौभरिः काण्व ऋषिः । प्रथमा ककुप् । द्वितीया सतो बृहती । द्वे अप्याग्नेय्यौ । यो मर्तो मनुष्यः । अग्नये समिधा । द्वितीयार्थे तृतीयैषा । समिधम् । ददाश । दानकर्मायम् । ददाति । अध्वरो यज्ञः । स्वध्वरः शोभनोऽध्वरः सोमयाग उच्यते । समिधमेवापि श्रद्दधानोऽग्नावादधद् यो मन्येत, स्वध्वरोऽहं सोमेन यज इत्यर्थः । यच्छ्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तत्र गृह्यकार आह — नमस्तस्मा इति । नमस्तस्मै तदेव भवति । तस्यैवं पश्यतः समिदाधानाद् देवयज्ञो भवतीत्यर्थः । ततः य आहुती यो वेदेनेति चोभयत्र द्वितीयार्थे तृतीया । अन्यामप्याहुतिं जुह्वद् यो मन्येत । स्वध्वरोऽहमिति शेषः पूर्ववदेव द्रष्टव्यः । वेदशब्दश्च स्वाध्याये द्रष्टव्यः । स्वाध्यायमपि योऽग्नये ददाश । स्वाध्यायं कुर्वन् यो मन्येत स्वध्वरोऽहमिति, स्वाध्यायाभावेऽपि यो नमो ददाश अग्नये नमस्कारमपि कुर्वन्नग्नये यो मन्येत स्वध्वरोऽहमिति, तस्य यज्ञो भवतीत्यर्थः । यतो 'यज्ञो वै नमः' इति हि ब्राह्मणं भवति । अतो यो नमस्त इत्याह स यज्ञस्त इत्येव तदाहेति ।

तस्येदर्वन्तः । इदं च तस्य भवति । योऽग्नौ समिदाधानादि करोति । अर्वन्तोऽश्वाः । आशवः क्षिप्रगामिनः । रंहयन्ते गमयन्ति । किम् । सामर्थ्याद् रथम् । तस्याश्वा रथे नियुक्ताः सन्तोऽभिमतं देशं शीघ्रं गमयन्तीत्यर्थः । किञ्च तस्य यशश्च द्युम्नितमं द्युतिमत् , उज्ज्वलं भवतीत्यर्थः । अथवा द्युम्नं धनमन्नं वोच्यते । तदस्यास्तीति द्युम्नि । अतिशयेन द्युम्नि द्युम्नितमम् । तस्य यशोऽति-

१. 'नो दे' क. पाठः

शयेन धनवदन्नवद् वा भवतीत्यर्थः । किञ्च तं मनुष्यम् अंहः पापम् । किं विशिष्टम् । देवकृतं देवानपरिचरतो यद् भवति, तद् देवकृतम् । देवैः कारितमित्यर्थः । तथा मनुष्यकृतं पूजनीयान् मनुष्यानपूजयतो यद् भवति, तन्मनुष्यकृतम् । मनुष्यैः कारितमित्यर्थः । तदुभयविधमंहः । न नशत् । व्याप्तिकर्मायम् । न व्याप्नोति च । कुतः कस्मात् । चनशब्दोऽप्यर्थे । यतः कुतश्चिदपि हेतोः । बुद्धिपूर्वमबुद्धिपूर्वं चाह इत्यर्थः ॥

तदेतत् पश्यन्नृषिरुवाच —

अगो॑रुधायग॒वि॑षे॑द्यु॒क्षाय॒दस्म्यं॒वचः॑ ।

घृ॒तात्स्वादी॑यो॒मधु॑नश्चवोचत ॥

(अष्ट० ६. अ० २. सू० २४. ऋ० २०.)

अगोरुधाय गविष इति । विश्वमना वैयश्व ऋषिः । उष्णिक् छन्दः । इन्द्रो देवता । गां रुणद्धीति गोरुधः । न गोरुधो अगोरुधः । तस्मै अगोरुधाय । गोग्रहणं चात्र गवादिपुरुषार्थोपलक्षणं द्रष्टव्यम् । गवादिपुरुषार्थानां दात्र इत्यर्थः । गविषे । गोशब्दोऽत्र सोमवचनः 'गोपीथाय प्रहूयस' इति यथा । गामिच्छतीति गविट्, तस्मै सोममभिलषत इत्यर्थः । अथवा स्तुतिलक्षणवाग् गौः । स्तुतिमिच्छत इत्यर्थः । अथवा गोशब्देनात्र 'अथाप्यस्यां तद्धितेन कृत्स्नवन्निगमा भवन्ती'ति गव्यं पयो दधि वोच्यते तदन्नं यस्य स गविट् । तस्मै दधिपयोन्नायेत्यर्थः । द्युक्षाय । दिवि क्षीयत इति द्युक्षः । तस्मै द्युनिवासाय । अथवा दीप्तिनिवासाय । तादर्थ्ये एताश्चतुर्थ्यः । एवंगुणविशिष्टस्येन्द्रस्यार्थायेत्यर्थः । वच ऋग्यजुःसामलक्षणम् । दस्म्यमुपक्षपणीयं हृदा तष्टमित्यर्थः । अथवा दर्शनीयं सुप्रियमित्यर्थः । घृतादाज्यात् । मधुनश्च । माद्यते अनेन मधु सोम उच्यते । सोमाच्च स्वादीयः स्वादुतरं वोचत ऋत्विजामयं संप्रैषः । हे मदीया ऋत्विजः ! । अथवा लकारपुरुषवचनव्यत्ययः । अहं वोच इत्यर्थः । एतच्च वच आज्यसोमलक्षणाद् हविषः स्वादुतरमेस्त्वित्यर्थः ॥

आते॑अग्नऋ॒चाह॒विर्हृ॒दात॒ष्टंभ॑रामसि ।

तेते॑भवन्तू॒क्षण॑ऋ॒षभा॒सो॑वशाउत ॥

(अष्ट० ४. अ० ५ सू० १६. ऋ० ४७)

---

१. 'श्रवमि'ख. ग. पाठः. २. 'मित्यर्थः' क. पाठः.

आ ते अग्ने । भरद्वाजो बार्हस्पत्य ऋषिः । अनुष्टुप् छन्दः । अग्निर्देवता । हे अग्ने ! । ते तुभ्यम् ऋचा स्तुत्या । हविः पुरोडाशादि । हृदा हृदयेन । तष्टं, तक्षतिः करोतिकर्मा । कृतं, मनसा सङ्कल्पितमित्यर्थः । निर्धनत्वात् सङ्कल्पमात्रेण कृतमित्यर्थः । आ भरामसि । आहरामः । ते ते एवं सङ्कल्पमात्रकृताः ते तव भवन्तु । उक्षणः उक्षाणः सेचनसमर्था बलीवर्दाः । उक्षपशुकेषु यागेषु । ऋषभासः । सन्धौ य उत्सृष्टः स ऋषभ उच्यते । ऋषभासः ऋषभद्रव्यकेषु यागेषु । वशा उत । उतशब्दः समुच्चये । वन्ध्या वशोच्यते । वशा । वशाद्रव्यकेषु यागेषु । यानि कानिचित् तव यागद्रव्याणि सङ्कल्पमात्रकृतानि, तान्यस्माकं भवन्त्वित्यर्थः ॥

अथ वैश्वदेवहोममन्त्रा बलिहरणपितृयज्ञमन्त्राश्च —

**'सूर्याय स्वाहा' इत्यादयो मन्त्राः याजुषाः ।**

तत्र सूर्याय स्वाहेत्यादयो याजुषाः । एषामृषिर्वामदेवः, कल्पत्वात् । तथाच शौनकः —

"अनुक्तऋषिस्तु यः कश्चित् कल्पेऽथ ब्राह्मणेऽपि वा ।
मन्त्रः पद्योऽथवा गद्यो वामदेव्यं निबोधत ॥"

इति । यजुषां छन्दोज्ञानं नेष्यते । अच्छन्दस्त्वादेव । कथमच्छन्दस्त्वमिति चेत् । श्रुतौ दर्शनात् । 'जामि स्याद्यद्यजुषाद्यं यजुषाप उत्पुनीयात् छन्दसा उत्पुनाति अजामि त्वाये'ति । तस्मात् सर्वेषु यजुःषु छन्दोज्ञानमनङ्गम् । अयं न्यायः सार्वत्रिकः । एवमेव यत्र यत्र मन्त्रः सर्वः पठ्यते कल्पे ब्राह्मणे वा, तत्र सर्वत्र वामदेवार्षत्वं बोद्धव्यम् । सूर्याय स्वाहेत्यादयो मन्त्रा निगदसिद्धाः । स्वाभिधेयदेवताः एकोनत्रिंशद् देवताः ॥

अथाज्योत्पवनमन्त्रः —

**सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।**

'सवितुष्ट्वा प्रसव उत्पुनामी'ति । वामदेवो गौतम ऋषिः । पुर उष्णिक् छन्दः । उत्पूयमानमाज्यमभिधेयं सविता वा । सवितुरभ्यनुज्ञातुः

१. 'भ्यं त्वदर्थ ऋ', २. 'तव एवं' क. पाठः. ३., ४. 'यो' ख. ग. पाठः. ५. 'वः गौतमः कल्पतात' क. पाठः. ६. 'म्यो' ग. पाठः. ७. 'ति श्रु' ख. ग. पाठः.

आदित्यस्य प्रसवेऽभ्यनुज्ञाने सति । सवित्राभ्यनुज्ञातः सन्नित्यर्थः । हे आज्य ! त्वा त्वामुत्पुनामीति । उत्पवनं नाम दृष्टादृष्टार्थः संस्कारः । तदापादयामि । केन । पवित्रेण । जात्यपेक्षयैकवचनम् । पवित्राभ्यामित्यर्थः । किंविशिष्टाभ्याम् । अच्छिद्रेणाच्छिन्नेन अप्रच्छिन्नाग्राभ्यामित्यर्थः । न च केवलाभ्याम् । किं तर्हि । सूर्यस्य रश्मिभिः । कीदृशस्य । वसोः । प्रशस्यनामैतत् । प्रशस्यस्य । अथवा वसुशब्दोऽन्तर्णीतमत्वर्थः । वसुमतः धनवतः । अथवा, 'वस आच्छादन' इत्यस्य क्रियाशब्दोऽयम् । स्वेन ज्योतिषा सर्वस्याच्छादयितुरित्यर्थः । रश्मिभिर्भानुभिः । ते ह्यत्यन्तशुद्धिहेतवः । अदृष्टसाधनं चैतत् ॥

अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥

(अष्ट० ७. अ० २. सू० ६६. ऋ० १९)

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
तमीमहे महागयम् ॥

(अष्ट० ७. अ० २. सू० ६६. ऋ० २०.)

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।
दधद्रयिं मयि पोषम् ॥

(अष्ट० ७ अ० २. सू० ६६. ऋ० २१.)

तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् । अग्न आयूंषि पवस इति तिसृभिः । अस्य तृचस्य शतं वैखानसा ऋषयः । गायत्री छन्दः । अग्निर्देवता । हे अग्ने ! आयूंषि चिरकालजीवितानि । पवसे । पवतिरत्र सामर्थ्याद् दानार्थः । लट् लोडर्थे । पवस्व देहीत्यर्थः । किञ्च, आसुव अभ्यनुजानीहि । ऊर्जं रसं पयआदिकम् इषं चान्नं च । नः अस्मभ्यम् । किञ्च आरे । दूरनामैतत्, दूरे । सप्तमीनिर्देशाद् अपनीयेति वाक्यशेषः । बाधस्व नाशय ।

१. 'स्य की', २. 'रजो' ख. ग पाठः.

दुच्छुनां दुर्भिक्षजातिम् । अनावृष्ट्यादिकृतं दुर्भिक्षं मत्समीपे[1] कदाचिदपि मा भूदित्याशास्महे ॥

अग्निर्ऋषिः द्रष्टा शुभाशुभस्य, लोकपालत्वात् । पवमानः 'पूङ् पवने' । कृत्स्नं जगच्छोधयन् । पाञ्चजन्यः पञ्चभ्यो जनेभ्यो हितः । पञ्चजना देवमनुष्यादयो ब्राह्मणोक्ताः, चत्वारो वा वर्णाः निषादपञ्चमाः । पुरोहितः पुरोहितस्थानीयः । यथा शान्तिकपुष्टिककर्मभिः राजानमापद्भ्यस्त्रायते, तथा यजमानानां हविर्वहनादिव्यापारेण त्रातेत्यर्थः । अथवा पुरोहितशब्दः क्रियावचनः । पूर्वस्यां दिश्याहवनीयात्मना निहितः स्थापित इति पुरोहितः । यं इत्थम्भूतोऽग्निः तमीमहे । याच्ञाकर्मायं, याचामहे । महागयम् । गयशब्दोऽपत्यनाम, धननाम, गृहनाम वा । महदपत्यं महद् धनं महद् गृहं वा । अपत्यमहत्त्वं विद्यैश्वर्यादिभिः । धनमहत्त्वमपरिमाणतः । गृहमहत्त्वमसंबाधत्वेन । अथवा महागयशब्दोऽग्निविशेषणम् । न तु याच्ञाकर्म । अस्मिन् पक्षे याच्ञायाः कर्माध्याहर्तव्यम् । तच्च सामर्थ्यात् पुत्रपश्वन्नादि द्रष्टव्यम् ॥

अग्ने पवस्व । पवस्वेति मध्यमपुरुषयोगादग्ने इति च सम्बुद्धिदर्शनात् प्रत्यक्षीकृतोऽयं मन्त्रः । स्वपा इत्येतदामन्त्रितम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वम् । स्वपाः । अप इति कर्मनाम । सुकर्मा । स त्वम् । हे अग्ने! पवस्व देहि । अस्मे अस्मभ्यम् । वर्चः दीप्तिम् । सुवीर्यं शोभनं वीर्यं च । अथवा वर्च इत्यन्ननाम । अस्मिन् पक्षे सुवीर्यशब्दो वर्चोविशेषणम् । शोभनवीर्यं वर्च इति । किं कुर्वन् । उच्यते । दधत् स्थापयन् । रयिम् । धननामैतत् । धनं हिरण्यादिलक्षणम् । मयि अधिकारिणि पोषं पुष्टिसाधनं च गोमहिषाश्वादिकम् ॥

प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ।

यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् ॥

(अष्ट० ८. अ ७. सू० १२२. ऋ. १०.)



प्रजापते न त्वदेतान्यन्य इति च । हिरण्यगर्भः प्राजापत्य[2] ऋषिः । त्रिष्टुप् छन्दः । प्रजापतिर्देवता । हे प्रजापते! । नशब्दः परिबभूवेत्यनेन

१. 'भिकमन्यत् समीपे' ख. ग. पाठः. २. 'प्रजापतिः ऋ' क. पाठः.

संबध्यते । त्वत् । युष्मत्पञ्चम्येकवचनस्यायमादेशः । त्वत्त इत्यर्थः । अन्यः कश्चित् । एतानि भूतानि । विश्वा विश्वानि सर्वाणि । जातानि उत्पन्नानि । त्वत्त (इति) वाक्यशेषः । यानि भूतानि त्वत्सकाशादुत्पन्नानि तानि न परिबभूव । परिपूर्वो भवतिः परिग्रहे परिरक्षायां वा वर्तते । परिगृह्णाति परिग्रहीतुं शक्नोति परिरक्षितुं वेत्यर्थः । त्वमेव परिगृह्णासि रक्षसि वा । यत ईदृशोऽसि, अतो ब्रूमः । यत्कामा वयं ते तुभ्यं त्वदर्थमित्यर्थः । जुहुमः होमं कुर्मः । तत् काम्यमानं वस्तु नः अस्माकम् अस्तु भवतु सर्वदैवं च वयं स्याम भवेम । पतयः स्वामिनः । रयीणां धनानामित्याशास्महे ॥

**भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवःस्वः स्वाहा ।**

व्याहृतिभिर्वा चतस्र आज्याहुतीर्जुहुयादित्यनुषङ्गः । भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा, भूर्भुवःस्वः स्वाहेति । चतसृणां व्याहृतीनामृषिः प्रजापतिः । पूर्वपरमेष्ठिकल्पजत्वाद् व्याहृतीनां वामदेवार्षत्वे प्राप्ते तदपवादः स्मर्यते भगवता शौनकेन —

"प्रजापते ! व्याहृतयः पूर्वस्य परमेष्ठिनः ।
व्यस्ताश्चैव समस्ताश्च ब्राह्ममक्षरमोमिति ॥"

प्रथमा तृतीया च देवीगायत्र्यौ । द्वितीया दैव्युष्णिक् । समस्ता दैवी बृहती । यजूंषि चैतानि चत्वारि । अग्निवायुसूर्यप्रजापतयः क्रमेण देवताः । भूः स्वाहा । अत्रैकवाक्यताप्रसिद्ध्यर्थं[1] यत्तच्छब्दावध्याहर्तव्यौ । योऽग्निर्भूः । भवतेः क्विबन्तमेतत् पदम् । सर्वत्र भवतीति भूः । तस्मै स्वाहा । स्वाहाशब्दस्य निर्वचनं 'स्वाहेत्येतत् सु आहेति वा, स्वा वागाहेति वा' इत्यादि भगवता यास्केनोक्तं द्रष्टव्यम् । स्वाहुतं हविर्भूयत इत्यर्थः । केचित्तु स्वाहाशब्दं प्रदानवाचिनं मन्यन्ते । तस्मिन् पक्षे हविर्दीयते ददामीति वास्यार्थः । एवं सर्वत्र[2] । भुवः स्वाहा । यो वायुर्भुवः । भवतेर्धातोर्ण्यन्तस्यैतद्रूपम् । कृत्स्नं जगद् भावयतीति भुवः । तस्मै स्वाहेति । स्वः स्वाहा । सूर्यः स्वः । स्व.शब्दस्य 'स्वरादित्यो भवति । सु अरण सु ईरण' इत्यादि यथाभाष्यं निर्वचनं द्रष्टव्यम् । सु अरणं शोभनगमनं, स्वीरणो वा, शोभनप्रेरण इत्यर्थः । तस्मै स्वाहेति । भूर्भुवःस्वःस्वाहेति व्यस्तव्याहृतिव्याख्यानेन समस्तव्याहृतिर्व्याख्याता । सर्वासु

१. 'र्थं । क', २. 'त्र । भवतीति भूः तस्मै स्वाहा' ख, ग, पाठः.

विभक्तिषु व्याहृतीनां तुल्यरूपत्वं द्रष्टव्यम् । अव्ययत्वात् । वाक्यशेषश्च यथाविनियोगं तत्तद्विभक्त्यनुरूपः कार्यः ॥

त्वमर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि ।
अञ्जन्तिमित्रंसुधितंनगोभिर्यद्दम्पतीसमनसाकृणोषि ॥

(अष्ट० ३. अध्या० ८. सू० ३. ऋ० २.)

'त्वमर्यमा भवसि यत् कनीनामिति विवाहे चतुर्थीम्' । वसुश्रुतस्यात्रेयस्य[1] त्रिष्टुप् छन्दः । अग्निर्देवता । हे अग्ने! स्वधावन्! स्वधेत्येतदन्ननाम । हविर्लक्षणेनान्नेन अस्मभ्यं प्रदेयलक्षणेन च । तद्वन्! । यद् यस्मात् कनीनां कन्यकानां त्वमर्यमा भवसि । 'यः खलु वै ददाति सोऽर्यमे'ति श्रुतेरर्यमशब्दो दातृवचनः । अथवा कन्यकानां वरसम्बन्धे शत्रुभूतानां विघ्नानां नियन्तृत्वादर्यमशब्देन अग्निरेवोच्यते । अर्यमा अरीन् नियच्छतीति । यस्मात् त्वं कन्यकानामभीष्टवरदाता भवसि, वरसम्बन्धे विरोधिनिराकर्ता वा भवसीत्यर्थः । यस्माच्च गुह्यं नाम बिभर्षि । गुह्यं संवृतमप्रकाशं वेदैकसमधिगम्यं जातवेदा द्रविणोदा इत्यादिकं धारयसि । यत् यस्माच्च दम्पती जायापती । समनसा समानचित्तौ । कृणोषि करोषि । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्माद् भवन्तमञ्जन्ति म्लक्षयन्ति गोभिः । 'अथाप्यस्यां तद्धितेन कृत्स्नवन्निगमा भवन्ती'त्येवमत्र गोविकार आज्ये गोशब्दो द्रष्टव्यः । गोविकारैराज्यैर्हविर्लक्षणैः । किमिव । मित्रं सुधितं न । यथा लोके मित्रं स्निग्धं सुधितं सुष्ठु हितं गोविकारैः पयआदिभिर्भोजनसाधनैः परिचरन्ति, तद्वत् ॥

भर्त्रे[2] पिण्डान् कृत्वा —

ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद् दृश्यतामिति ।

ऋतमग्ने प्रथमं जज्ञ इत्यनेन मन्त्रेण पिण्डानभिमन्त्रयेत । वामदेव ऋषिः । त्रिष्टुप् छन्दः । 'अक्षराण्येव सर्वत्र निमित्तं बलवत्तरमि'ति वचनाद[3] क्लृप्तिरनियता । मृत्पिण्डा अभिधेयाः । ऋतम् । अर्तेर्गतिकर्मणो निष्ठान्त-



---

१. 'आर्षे त्रि' क. पाठः. २. 'इयं सौत्री ऋक् स्यात् ।', ३. 'ना वादक्लृ' क, ग. पाठः

मेतत् पदम् । सर्वत्र गतत्वादृतशब्देनात्र सामर्थ्यान्मन उच्यते । यथा मनः । अग्रे पूर्वं प्रथमं मुख्यं मनसो मुख्यत्वमन्येषामिन्द्रियाणां तदपेक्षत्वात् । जज्ञे जायत उत्पद्यते । ऋते मनसि सत्यं प्रतिष्ठितम् । विद्यमानवस्तुविषयं वचनं सत्यमित्युच्यते । एतदुक्तं भवति — यथा वाक् च मनश्च विषयं गृह्णीतः, तथा यदर्थसतत्त्वमभि प्रतिजाता इयं कुमारी तदर्थसतत्त्वम् । इयं कुमारीह कर्मणि लोके वा प्रतिपद्यतां संश्रयतु यत्सत्यं परमार्थतत्त्वं तद् दृश्यताम-भिव्यज्यताम् । विवाहोत्तरकालं यथा भवति तथा पिण्डान् गृह्णात्विति समस्तार्थः । अथवा ऋतशब्देन मनस्सत्यतोच्यते । सत्यशब्देन वाक्सत्यतेति । मन्त्रशेषः पूर्ववत् ॥

अभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥

अभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । प्रैषरूपत्वाद् वैश्वामित्रोऽयं निगदः । कन्याभिधेया । हे कन्यके! एषां पिण्डानां मध्ये एकं पिण्डं गृहाणोपादत्स्व ॥

प्राङ्मुख्या आसीनाया 'गृभ्णामि ते सौभागत्वाय हस्तमि'ति हस्तं गृह्णीयात् ।

गृभ्णामिते सौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ।
भगोअर्यमासवितापुरन्धिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥

(अष्ट० ८. अध्याय. ३. वर्ग. २७. ऋ० ३६.)

सूर्यायाः सावित्र्या आर्षं, त्रिष्टुप् छन्दः, वधूरभिधेया । हे वधु! । गृभ्णामि गृह्णामि । ते तव हस्तं सौभगत्वाय सौभाग्यार्थम् । एतज्ज्ञात्वा मया पत्या सह । जरदष्टिः, जरच्छब्देन जरोच्यते, अश्नोतेरष्टिः । जरतो जराया अष्टिः कर्तर्ययं क्तिन् । अष्टिः व्याप्त्री[3] ग्रहीत्री जरदष्टिः । अथवा जरन्ती कीर्यमाणावयवा सती अष्टिः व्याप्त्री मृत्योर्जरदष्टिः । अनेन चिरजीवित्वमाशास्यते । यथा असः भवसि, तथा भवेति वाक्यशेषः । कस्मादेवं ब्रवीषि । यस्माद्, भगः अर्यमा सविता च पुरन्धिः बहुप्रज्ञो बहुकर्मा वा मह्यं वराय त्वा त्वां वधूमदुर्दत्तवन्तः । गार्हपत्याय गृहपतिभावाय गार्हस्थ्यायेत्यर्थः । देवाः पूर्वोक्ता भगादयः ॥

---

१. 'नोमु' ख. पाठः. २. 'र' ख. ग. पाठः. ३. 'सि' ग. पाठः.

त्रिः परिणयन् जपति —

**अमोहमस्मि सा त्वं सात्वमस्यमोहम् । द्यौरहं पृथिवी त्वं सामाहमृक्त्वम् । ताविह विवहावहै प्रजां प्रजनयावहै । संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतम् ॥**

इति । 'अमोऽहमस्मि सा त्वमिति' । कल्पजत्वाद् वामदेवार्षम् । अमोऽहमस्मीत्यादि सामाहमृक्त्वम् इत्यन्ता अनुष्टुप् । ताविह विवहावहा इत्याद्या बृहती । एकं वेदं यजुः । वरवध्वावभिधेयौ । वधूं प्रत्याह वरः — अमोऽहमस्मि । अमशब्देन सामोच्यते । 'अमो नाम सामे'ति श्रुतेः । हे वधु! । सा त्वमसि, साशब्देन सामाश्रयभूता ऋगभिधीयेत । 'सैव नाम ऋगासीदि'ति लिङ्गात् । अहं सामास्मि, त्वमृगसीत्यर्थः । ऋक्सामसंस्तवेन च दम्पत्योरपृथग्भाव आशास्यते । सा त्वमस्यमोऽहमित्यादरार्थः पुनरुपन्यासः । द्यौरहं पृथिवी त्वम् । द्यावापृथिव्यात्मकतया दम्पत्योरितरेतरसंश्लेष आशास्यते । एतदुक्तं भवति — आवां द्यावापृथिव्याविवात्यन्तं संश्लिष्टौ भूयास्वेत्यभिप्रायः । सामाहमृक्त्वम्, अमोऽहमस्मि सा त्वमित्यस्य विवरणमेतत् । सामर्थ्याच्च तदनन्तरमेवं द्रष्टव्यम् । यावित्थंभूतौ स्वः, तावावामिह लोके आविवहावहै आभिमुख्येन विवाहक्रियां निर्वर्तयावेत्यर्थः । व्यूह्य च प्रजां जात्यभिप्रायमेकवचनम् । दशसङ्ख्याकाम् पुत्रानित्यर्थः । प्रजनयावहै । उत्पादयाव इत्यथः । तथाह्याशास्यं 'दशास्यां पुत्रानाधेही'ति मन्त्रलिङ्गात् । सम्प्रियौ । समित्येकीभावे एकप्रियौ । यद्यहं प्रीणामि तत् त्वमपि प्रीणीहीत्यर्थः । रोचिष्णू दीपनशीलौ । सुमनस्यमानौ कल्याणमनस्त्वमाचरन्तौ । संहृष्टमनसावित्यर्थः । जीवेव शरदः शतं शरच्छब्दः संवत्सरपर्यायः । संवत्सरशतं त्वं चाहं च जीवावेत्याशास्महे ॥

वधूमश्मानमारोहयति —

**इममश्मानमारोहाश्मेव त्वं स्थिरा भव ।**
**सहस्व पृतनायतोऽभितिष्ठ पृतन्यतः ॥**

'इममश्मानमारोहे'ति । वामदेवो गौतम ऋषिः । अनुष्टुप् छन्दः । वधूरभिधेया । हे वधु! । इममश्मानम् अग्नेः पाश्चिमे देशे प्रतिष्ठापितमारोह ।

१. 'व तद् इ' क. पाठः.

आरुह्य च अश्मा इव त्वं स्थिरा भव । यथाऽश्मा सुस्थिरः, तद्वत् स्थिरा भव । अश्मवत् स्थैर्येण चारोग्यं लक्ष्यते । अरोगा भवेत्यर्थः । किञ्च सहस्व सहिरभिभवादौ । अभिभवस्व । पृतनायतः । पृतनेति सङ्ग्रामनाम । सङ्ग्राममभीच्छतोऽस्माभिः सह सङ्ग्रामं कर्तुमिच्छतः । अस्मच्छत्रूनित्यर्थः । अभितिष्ठ अभिभूय तिष्ठ । पृतन्यतः 'कव्यध्वरपृतनस्यार्चिलोपः' इति पृतनाशब्दस्याल्लोपो द्रष्टव्यः । पृतनायत इत्ययमेवार्थः । अतः पौनरुक्त्यपरिहारार्थं प्रागभावविषयमेकं प्रध्वंसाभावविषयमपरं द्रष्टव्यम् । एतदुक्तं भवति — अश्मारोहणसंस्कारेणास्मच्छत्रवोऽस्माभिः सह सङ्ग्रामं कुर्वन्तो नश्यन्तु, करिष्यन्तः पलायन्तामिति ॥

लाजहोमे विनियुक्ताः —

अर्यमणं नु देवं कन्या अग्निमयक्षत स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहा ।

'अर्यमणं नु देवमि'त्याद्यास्तिस्रोऽनुष्टुभः । वामदेवार्षाः । अर्यमवरुणपूषदेवत्याः । अर्यमणमिति स इमामित्युत्तरार्धर्चे तच्छब्दश्रवणाद् यच्छब्दोऽध्याहर्तव्यः पूर्वस्मिन्नर्धर्चे । यमर्यमणम् । नु पादपूरणः । देवं दानादिगुणयुक्तम्, अग्निमग्रण्यं, कन्या अयक्षत । एकस्यामेव कन्यायां पूजायां बहुवचनम् । लुङ् च लट्स्थाने । येयं वधूरर्यमणं यजत इत्यर्थः । सोऽर्यमा देवस्तामिमां वधूमितः पितृमातृसकाशात् प्रमुञ्चातु, मुचिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । मोचयतु मत्सकाशं गमयत्वित्यर्थः । अमुतः अमुष्मात् मत्सकाशात् न प्रमुञ्चात्वित्यनुषङ्गः । मत्तोऽनपायिनीं करोत्वित्यर्थः । इतः प्रमोक्षो नाम पित्र्यगोत्रपरित्यागः । अमुतोऽप्रमोक्षो नाम भर्तृगोत्रापरित्यागः । वरुणं नु, पूषणं नु, द्वावप्येतौ मन्त्रौ पूर्वेणैव व्याख्यातौ ॥

अथास्यै शिखे विमुञ्चति —

प्रत्वांमुञ्चामिवरुणस्यपाशाद्येनत्वाबध्नात्सविताुशेवः ।
ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यांदधामि ॥

(अष्ट० ८. अ० ३. व० २४. ऋ० २४.)

---

१. 'स्व पृ' ख. पाठः. २. 'न्तोऽपयान्त्विति प', ३. 'णं स क. पाठः, ४. 'तृ प्र' ख. पाठः. ५. 'को', ६. 'गः वह' ख. ग. पाठः.

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।

यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥

(अष्ट० ८. अ० ३. व० २४. ऋ. २५)

'प्रत्वा मुञ्चामि वरुणस्य पाशादि'ति द्वाभ्याम् । दक्षिणां शिखां पूर्वयोत्तरामुत्तरया । उभयोरपि सूर्या ऋषिः । पूर्वा त्रिष्टुप्, अनुष्टुबुत्तरा । द्वयोरपि वधूरभिधेया । प्र त्वा मुञ्चामि । हे वधु ! । त्वा त्वामहं प्रमुञ्चामि । मुचिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । मोचयामि । कुतः । वरुणस्य पाशात् । येन वरुणस्य पाशेन त्वा त्वामबध्नात् स्वगृहे बद्धवान् । सविता प्रसवितोत्पादयिता, तव पिता । कीदृशः । सुशेवः । शेव इति सुखनाम । सुसुखः तवात्यन्तं सुखयितेत्यर्थः । किञ्च ऋतस्य यज्ञस्य सत्यस्योदकस्य वा । योनौ स्थाने । सुकृतस्य च कर्मणः लोके स्थाने मदीयगृहलक्षणे । अरिष्टाम् अहिंसितां केनचिदपि त्वा त्वां सह पत्या मया दधामि धारयामि । प्रेतो मुञ्चामीति । इतः पितृगृहादिमां वधूं प्रमुञ्चामि अहं प्रमोचयामि । निर्गमयामीत्यर्थः । अमुतः अमुष्मान्मदीयगृहान्न प्रमुञ्चामि न प्रमोचयामि । किं तर्हि । सुबद्धां । सुष्ठु बद्धामनपायिनीम् । अमुतः । सप्तम्यर्थे पञ्चम्येषा । अमुष्मिन् मदीये गृहे करमकरवं करोमीत्यर्थः । उत्तरार्धर्चेनेन्द्रः प्रार्थ्यते । हे इन्द्र ! मीढ्वः । 'मिह सेचने' । वृष्ट्युदकेन कृत्स्नस्य जगतः सेक्ता । अथवा मीढ इति धननाम, तद्वान् मीढ्वान् । तस्य सम्बोधनं, हे धनवन्नित्यर्थः । यथा येन प्रकारेणेयं वधूः सुपुत्रा शोभनापत्या, सुभगा भगशब्दो धननाम सुधना च असति अस्ति भवतीत्यर्थः । तथा तामनुगृहाणेति वाक्यशेषः ॥

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयति —

**इष एकपदूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपदृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः इति ।**

'इष एकपदी'त्यादिभिर्वामदेवार्षाभिः सप्तभिरनुष्टुब्भिः । सप्तानामपि वधूरेवाभिधेया । इष एकपदी । हे वधु! इषे अन्नाय अन्नसिद्धये एकपदी एकपदमभ्युत्क्रान्तं यस्याः, यया वा, सा भव । एकं पदमभ्युत्क्रामयेत्यर्थः । या त्वं मयाभ्युत्क्रामितपदा, सा त्वं मामनुव्रता । व्रतमिति कर्मनाम । अन्वित्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । अनुगमनानुकूल्यं गतं व्रतं यस्याः सा

भव । मयैकचित्ता भवेत्यर्थः । किञ्च पुत्रान् बहून् । दशसङ्ख्याकानित्यभिप्रायः । विन्दावहै लभावहै । ते च पुत्राः सन्तु भवन्तु । जरदष्टयः । जराव्याप्त्या चिरजीवित्वमाशास्यते । वर्षशतं जीविनो भवन्त्वित्यभिप्रायः । ऊर्जे द्विपदी । ऊर्क्शब्दो रसवचनः । रसाय त्वं द्विपदी भव । रससिद्धये द्वितीयं पदम् अभ्युत्क्रामयेत्यर्थः । भव सा मामित्यनुषङ्गः । रायस्पोषाय त्रिपदी धनस्य पुष्ट्यै त्रिपदी । भवेत्याद्यनुषङ्गः पूर्ववत् । मायोभव्याय चतुष्पदी । मय इति सुखनाम । भवनमेव भव्यम् । उभयत्र स्वार्थिकस्तद्धितः । सुखभवनाय सुखस्योत्पत्तये इत्यर्थः । चतुष्पदी, भवेत्याद्यनुषङ्गः पूर्ववत् । प्रजाभ्यः पञ्चपदी । प्रजासिद्ध्यर्थं पञ्चपदी । भवेत्याद्यनुषङ्गः । ऋतुभ्यः षट्पदी । ऋतुशब्देन तत्रस्था भोगा लक्ष्यन्ते । तत्तत्कालीनानामृत्वाश्रयफलानां सिद्ध्यर्थमित्यर्थः । षट्पदी । भवेत्याद्यनुषङ्गः पूर्ववत् । सखा सप्तपदी भव सखा समानाख्याना समानप्रकाशा । मया समानख्यातिरित्यर्थः । सप्तपदी । भवेत्यादिमन्त्रशेषो व्याख्यातः । सप्तैतेऽनुष्टुभो भवाद्यनुषङ्गेण ॥

जीवपत्नी प्रजां विन्देयेति ।

ध्रुवमरुन्धतीं सप्तर्षीनिति दृष्ट्वा वाचं विसृजेत । जीवपत्नी प्रजां विन्देयेति वामदेवार्षम् । यजुरिदम् । विष्णुर्देवता, अग्निर्वा प्रजापतिर्वा । एवमनादिष्टदेवतेषु मन्त्रेषु सर्वत्र देवताकल्पनम् । कुत एतत् । 'तद् येऽनादिष्टदेवता मन्त्राः' इत्युपक्रम्य 'याज्ञदैवतो मन्त्रः' इति भगवता यास्केन सिद्धान्तितत्वात् । याज्ञदैवत इति कोऽर्थः । याज्ञो यज्ञदेवता 'विष्णुर्वै यज्ञ' इति श्रुतेर्विष्णुदैवत इत्यर्थः । 'प्रजापतिर्वै यज्ञ' इति श्रुतेः प्रजापतिर्देवतेति वा । देवताशब्देनाग्निरुच्यते । तद्देवतोऽग्निदेवत इत्यर्थः । स मन्त्रो वैष्णवो वाग्नेयो वा प्राजापत्यो वा भवितुमर्हति इति तस्यार्थः । अलमनेन । प्रकृतानुसृतिः क्रियते । जीवपत्नी । जीवस्य पत्नी जीवतः पत्नी जीवपत्नी । पत्नीशब्दस्य 'पत्युर्नो यज्ञसंयोगे' (४. १. ३३) इति प्रक्रिया द्रष्टव्या । आयुष्मता भवता भर्त्रा सह यज्ञसंयुक्तेत्यर्थः । प्रजां पुत्रपौत्रादिलक्षणां विन्देय लभेय । विष्णोः प्रजापतेरग्नेर्वा प्रसादेनेति वाक्यशेषः । केचिदिमं मन्त्रमाध्यात्मिकं मन्यन्ते । विन्देयेत्युत्तमपुरुषसंयोगात् । तस्मिन् पक्षे वधूरेवाभिधेया ॥

प्रयाण उपपद्यमाने —

पूषात्वेतोनयतुहस्तगृह्याश्विनात्वाप्रवहतांरथेन ।

गृहान्गच्छगृहपत्नीयथासोवशिनीत्वंविदथमावदासि ॥

(अष्ट० ८. अ० ३. व० २५. ऋ० २६.)

'पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत्' । सूर्याया आर्षं, त्रिष्टुप् छन्दः । वधूरभिधेया । हे वधु ! । पूषा त्वा त्वामितः पितृगृहात् पतिगृहं नयतु, बहिर्हस्तं गृह्य हस्ते वा गृहीत्वा । पूष्णा बहिर्नीतां सतीमश्विना अश्विनौ त्वा त्वां रथमारूढां प्रवहतां मदीयगृहं प्रापयताम् । रथेन त्वं पितृगृहात् पतिगृहान्, गच्छ । गत्वा च त्वं गृहपत्नी मदीयानां गृहाणां स्वामिनी यथा असः भवसि । तथा भवेति वाक्यशेषः । वशिनी आत्मवशवर्तिनी सर्वप्रजाविषयमनुरागं कुर्वतीत्यर्थः । अनुरागेण हि सर्वं वशीक्रियते । किञ्च त्वं विदथम् । यज्ञनामैतत् । श्रौतस्मार्तलक्षणं यज्ञमावदासि । लोडर्थेऽयं पञ्चमो लकारः । आभिमुख्येन वद । यज्ञवदनेन चात्र तत्कारणं लक्ष्यते । श्रौतस्मार्तलक्षणानि कर्माणि कुर्वित्यर्थः । एतदुक्तं भवति — मदीयान् गृहान् प्राप्य मया सार्धं श्रौतस्मार्तलक्षणेषु कर्मस्वधिकुर्वित्यर्थः ॥

अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः ।

अत्राजहामयेअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् ॥

(अष्ट० ८. अ० १. व० १४. ऋ० ४.

'अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहयेत् । उत्तरेणोत्क्रमयेत्'[1] ।

"सौचीकोऽग्निः समवदत्सूक्तैर्महदिति त्रिभिः ।
विश्वेदेवैर्मिथोलिङ्गमन्त्यैस्त्रैष्टुभकैः परैः ॥

इति वचनात् अग्नेरार्षम् । त्रिष्टुप् छन्दः । विनियोगवशाद् वधूरभिधेया । संरभध्वमित्यादिमध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । अश्मन्वतीत्येतदनामन्त्रितम् । अतो यत्तच्छब्दाध्याहारेण एकवाक्यता योज्या । या त्वम् अश्मन्वती । 'अश भोजने' इत्यस्याश्मन्छब्दोऽशितद्रव्यवचनः, तद्वती । व्रीहिमुद्गाद्यशनसाधनसम्पन्नेत्यर्थः । सा त्वं रीयते ।

---

१ 'मेत् अग्नेरार्षं' ख ग. पाठः.

गतिकर्मायम् । लट् च लोडर्थे । प्रथमपुरुषश्च मध्यमपुरुषस्य स्थाने । रीयस्व मम गृहं प्रतिगच्छ । तदर्थं च, संरभध्वम् । एकवचनस्य स्थाने बहुवचनम्[1] । संरभस्व आरोह नावामित्यर्थः । आरुह्य च प्रतरत । अत्रापि वचनव्यत्ययः । नदीं प्रतरेत्यर्थः । हे[2] सखायः ! । वचनलिङ्गव्यत्ययः । हे सखीत्यर्थः । अथोत्तरार्धर्चो व्याख्यायते । हे वधु ! अत्रास्यां नद्यां ये असन् भवन्ति । अशेवाः शेव इति सुखनाम, असुखाः । के ते । सामर्थ्यान्मार्गाः आवर्तादिदोषदुष्टाः । यच्छ्रुतेस्तच्छब्दाध्याहारः । तान् मार्गान् वयं जहाम । 'ओ हाक् त्यागे' । बहुवचनं द्विवचनस्य स्थाने । आवां जहाव परित्यजावेत्यर्थः । परित्यज्य च शिवान् सुखान् । तृतीयार्थे च द्वितीया । सुखैः सन्मार्गैः अभिवाज्ञान् । वाजयतिरर्चयतिकर्मा । इयमपि द्वितीया तृतीयार्थ एव । अभ्यर्चितैरभिपूजितैरावर्तादिदोषरहितैरित्यर्थः । उत्तरेम अत्रापि वचनव्यत्ययः । उत्तरेव नदीमित्यर्थः । सहायापेक्षं वा बहुवचनं सर्वत्र ॥

जीवंरुदन्तिविमयन्तेअध्वरेदीर्घामनुप्रसितिंदीधियुर्नरः ।
वामंपितृभ्योयइदंसमेरिरेमयःपतिभ्योजनयःपरिष्वजे ॥

(अष्ट० ७. अ० ८ व.० १९. ऋ० १०)

'जीवं रुदन्ती'ति । रुदत्यां जपेदिति वाक्यशेषः । घोषायाः कक्षीवत्या आर्षम् । जगती छन्दः । विनियोगसामर्थ्याद् वधूमात्रादयोऽभिधेयाः । अर्थक्रमादुत्तरोऽर्धर्चः प्रथमं व्याख्येयः । वामं, स्त्रीलिङ्गस्य स्थाने नपुंसकता । वामां वननीयां सम्भजनीयाम् । इदन्, अत्रापि लिङ्गव्यत्ययः । इमां, काम् । सामर्थ्याद् वधूम्[3] । 'यो वामाश्विने जागते जगावि'ति वचनादाश्विने प्राप्ते विनियोगवशाद् वधूमात्रादयो ये जनयः जनयत्यपत्यमिति जनिर्मातात्रोच्यते । बहुवचनात् पितृभ्रात्रादयो गृह्यन्ते । मातृपितृभ्रात्रादयो बन्धुवर्गा इत्यर्थः । समेरिरे । 'ईर गतौ' । सङ्गमितवन्तः, ऐकमत्येन सम्भूय दत्तवन्त इत्यर्थः । कस्मै । पतिभ्यः । एकस्मिन्नात्मनि बहुवचनम् । पत्ये मह्यं । कीदृशाय । पितृभ्यः । उत्पत्स्यमानापत्यापेक्षया पितृशब्दः । पूर्ववद् बहुवचनमेकस्य स्थाने, पुत्रानुत्पादयिष्यते मह्यमित्यर्थः । अथवा पितृशब्दः क्रियावचनो

१. 'नम् । आ', २. 'ते अ' ख. ग. पाठः ३. 'धूम् । ये जनयः' ख. पाठः.

द्रष्टव्यः, पालयित्रे मह्यमिति पत्ये । किमर्थं समेरिरे इत्युच्यते । मयः परिष्वजे । मय इति सुखनाम । परिष्वजनक्रियाविशेषणं चैतत् । परिष्वज इति तु मत्वर्थीयप्रत्ययान्तमेतत् पदम् । सुखं परिष्वक्तुमित्यर्थः । यच्छब्द-श्रुतेस्तच्छब्दमध्याहृत्य पूर्वार्धर्चो व्याख्यायते । ते मात्रादयः, जीवम्, अत्रापि लिङ्गव्यत्ययः । जीवामित्यर्थः । तथाच तैत्तरीयाणां पाठः 'जीवां रुदन्ती'ति । सुखजीविनीमिमां रुदन्ति । रुदतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । लट् च लोडर्थे । वीत्युपसर्गश्च सामर्थ्यादत्र प्रतिषेधार्थीयः । विरोदयन्तु, मा रूरुदन् इत्यर्थः । किन्तर्हि, मयन्ते, सुखनामसु मयश्शब्दस्य पाठात् सर्वनाम्नां चाख्यातजत्वा-न्मयतिः सुखार्थ इति गम्यते । अत्र सामर्थ्याद् मयतिरन्तर्णीतण्यर्थः । लट् च लोडर्थे । माययन्तु सुखयन्त्वित्यर्थः । किञ्चाध्वरे यज्ञनामैतत् । यज्ञे श्रौतस्मार्तलक्षणे आवाभ्यामधिकर्तव्ये दीर्घां प्रसितिं, 'षिञ् बन्धने' । दीर्घं बन्धनमा शतसंवत्सरात् श्रौतस्मार्तलक्षणकर्मविषयानुष्ठानमित्यर्थः । अनु-दीधियुः, 'ध्यै चिन्तायामि'त्यस्यैतद्रूपम् । आनुपूर्व्येण चिन्तयेयुः । अथवा 'दीधीङ् दीप्तिदेवनयोरि'त्यस्यैतद्रूपम् । अनुदीधियुरनुदीपयेयुः । आनुपूर्व्येण कर्मास्तिक्यं वर्धयेयुरित्यर्थः । नरो मनुष्या मात्रादयः ॥

'विवाहाग्निमग्रतोऽजस्रं नयन्ती'त्यत्र समारोपणाभ्युपगमाद् कल्पान्तरे गृह्याग्नेः[1] समारोपणदर्शनाच्च[2] विवाहाग्नेः समारोपणमभ्युपगच्छन्ति केचित् । अथेदाना समारोपण-मन्त्रा व्याख्यायन्ते । तत्र 'याते अग्ने यज्ञिया तनू'रित्यात्मनि समारो'प्योपावरोहजातवेद, इति लौकिकाग्नावरोप्य जुहुयात् ॥

**या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः सक्षय एहि ॥**

विश्वेदेवा ऋषयः । अतिशक्वरी यजुर्वा । अग्निर्देवता । हे अग्ने । तव स्वभूता या तनूः शरीरं यज्ञिया यज्ञसम्पादिनी । तया तन्वा आ इहि आगच्छ । आगम्य चारोह । आत्मा स्वयमेव । आत्मानं स्वकीयां तनूम् । अच्छशब्दोऽत्राभेरर्थे । स चारोहेत्यनेन सम्बन्धयितव्यः अभ्यारोहेति । किं कुर्वन्, वसूनि धननामैतत् । धनानि नर्या नर्याणि नृभ्यो हितानि । पुरूणि बहूनि । अस्मे सम्प्रदानचतुर्थ्यन्तमेतत्, 'अस्मे प्रयन्धि मघवन्ती'ति यथा ।

---

१. 'ग्नौ' घ. पाठः. २. 'च्च अग्ने' ख. ग पाठः

अस्मभ्यम्। कृण्वन्। क्रियासामान्यवचनः करोतिरिह सामर्थ्यात् क्रियाविशेषे दाने वर्तते। सामर्थ्यं चात्र वसुशब्दग्रहणं सम्प्रदानचतुर्थीश्रवणं च। ददिल्यर्थः। किञ्च यज्ञो भूत्वा यज्ञसाधनो भूत्वा यज्ञं यज्ञसाधनभूतां स्वां योनिं स्वकीयां तनुं मम शरीरलक्षणाम्। अथवा योनिशब्दः कारणवचनः, 'अस्माद्वै त्वमजायथाः' इति लिङ्गात्। स्वोत्पत्तिकारणं मम शरीरमित्यर्थः। आसीद आभिमुख्येन गच्छ आरोहेत्यर्थः। आदरार्थं पुनर्वचनं द्रष्टव्यम्। हे जातवेदः! जातधन! जातप्रज्ञ! वा। भुवः। भवति उत्पद्यत इति भूशब्देन शरीरमुच्यते। मम शरीरादाजायमान आभिमुख्येनोत्पद्यमानः सक्षयः क्षयो निवासः साश्रय इत्यर्थः। एह्यागच्छ कर्मनिर्वर्तको भवेत्यर्थः। अथवा भूशब्देनात्र पृथिव्येवोच्यते। पृथिव्या उत्पद्यमानः पृथिवीमधितिष्ठन्नित्यभिप्रायः। शेषं पूर्ववत्।

उपावरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन्।
आयुःप्रजांरयिमस्मासुधेहिअजस्रोदीदिहिनोदुरोणे॥

विश्वेदेवा ऋषयः। त्रिष्टुप् छन्दः। अग्निर्देवता। हे जातवेदः! जातधन! जातप्रज्ञ! वा अग्ने! उपावरोह। उपेत्ययमुपसर्गः प्रतीत्येतस्य स्थाने। लौकिकमग्निं प्रति, पृथिवीं प्रत्यवरोहेत्यर्थः। अवरुह्य च, पुनः। अत्र वीप्सालोपो द्रष्टव्यः। पुनः पुनरित्यर्थः। त्वं देवेभ्यः तादर्थ्यचतुर्थ्यन्तमेतत्। देवानां कर्माङ्गभूतानामर्थाय हव्यं चर्वाज्यादिहविः वह प्रापय। नोऽस्माकं प्रभूतं प्रजानन् प्रकर्षेण जानन्। किम्। सामर्थ्यात् स्वमधिकारमस्मद्भक्तितां वा। किञ्च आयुर्जीवितं शतसंवत्सरलक्षणम्। प्रजां पुत्रपौत्रादिलक्षणां रयिं धनं च सर्वप्रकारमस्मासु अधिकारिषु। धेहि दधातिर्धारणार्थः। धारय स्थापयेत्यर्थः। दानार्थो वा दधातिः। अस्मिन् पक्षेऽस्मास्विति सप्तमी सम्प्रदानचतुर्थ्यर्थे द्रष्टव्या। आयुः प्रजां रयिमस्मभ्यं देहीत्यर्थः। किञ्च अजस्रः अविच्छिन्नः अनुपशाम्यन्। दीदिहि दीप्यस्व। नः अस्माकं स्वभूते दुरोणे। दुरोण इति गृहनाम। गृहे देवयजनलक्षणे॥

अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः।
तंजानन्नग्नआरोहाथानोवर्धयारयिम्॥

---

१. 'त्यर्थः। शे', २. 'किं वा' ख. ग. पाठः.

'अयं ते योनिर्ऋत्वियः' इति समिधि समारोप्य 'आजुह्वानः' 'उद्बुध्यस्वाग्ने' इति द्वाभ्यां लौकिकेऽग्नौ समिधमभ्याधाय जुहुयादिति । अग्निः ऋषिः देवता च । त्रिष्टुप् छन्दः । समिदरण्योश्च साधारणी व्याख्या । हे अग्ने! ते तव स्वभूतोऽयमरण्याख्य. समिदाख्यो वा काष्ठविशेषो योनिः । योनिशब्द उभयलिङ्गः । स चात्र कारणवचनः स्थानवचनो वा । उत्पत्तिकारणं स्थानं वेत्यर्थः । ऋत्वियः ऋतुकालः । अर्तेर्गतिकर्मणस्तत्प्रभवः । योनिं विशिनष्टि — यतो यस्माद् योनेररण्यादेर्जात उत्पन्नस्त्वमरोचथाः दीप्तवानसि । तं योनिमरण्याख्यं समिधाख्यं वा जानन् । किम् अधिकारमस्मद्भक्ततां वारोह । आरुह्य च, अथानन्तरं नोऽस्माकं स्वभूतं रयिं सर्वप्रकारं रयिं वर्धय प्रवृद्धं कुरु । प्रभूतं धनमस्मभ्यं देहीत्यभिप्रायः ॥

आजुह्वानःसुप्रतीकःपुरस्तादग्नेस्वांयोनिमासीदसाध्या ।
अस्मिन्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥

आजुह्वानः सुप्रतीक इति अग्निर्ऋषिर्देवता च । त्रिष्टुप् छन्दः । आजुह्वानः प्रत्यक्षीकृतोऽयं मन्त्रः । अग्न इति संबुद्धिदर्शनादासीदेति मध्यमपुरुषयोगाच्च । सुप्रतीक इति चानामन्त्रितम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या । हे अग्ने! यस्त्वं सुप्रतीकः । प्रतीकशब्दो मुखवचनः । सुमुखः । स त्वमाजुह्वान आहूयमानः, मयेति वाक्यशेषः । पुरस्तात् पूर्वस्यां दिशि, ममाग्र इत्यर्थः । स्वां योनिं स्वकीयं स्थानमासीदाविश । साध्या । द्वितीयैकवचनस्य 'सुपां सुलुगि'त्याकारो द्रष्टव्यः । द्वितीयार्थे वा प्रथमा । योनिविशेषणं चैतत् । साध्यां साधनीयां योनिमित्यर्थः । किञ्च, अस्मिन् सधस्थे । सामीपिकमिदमधिकरणम् । कूपे गर्गकुलमिति यथा । सधस्थशब्दः स्थानवचनः सह तिष्ठन्त्यत्रेति । अस्मिन् स्थानेऽधि । अधिशब्दः 'अधिपरी अनर्थका'वित्येवं कर्मप्रवचनीयः पादपूरणः । उत्तरस्मिन्नुत्कृष्टे । हे विश्वेदेवाः! सर्वे देवा यजमानश्च सर्वे यूयं सीदत उपविशतेत्यर्थः । एवं व्याख्यायमानेऽस्यार्धर्चस्य वैश्वदेवत्वं प्रसज्येत । तच्चानिष्टम् । आग्नेयत्वं चेष्यते । अतोऽग्नेः प्रसादादिति वाक्यशेषेण भवितव्यम् । एवं वाक्यशेषाध्याहारे विश्वेषां देवा-

१. 'ता । अनुष्टुप्', २. 'स्मिन् हे' ख. ग. पाठः.

नामप्राधान्यम् अग्नेरेव प्राधान्यं भवति । 'शं नो मित्रो वरुणो मामहन्तामि'ति-वत् । यथास्मिन्नर्धर्चे मित्रादीनामप्राधान्यम् । 'सत्वमग्नेस्सौभगत्वस्ये'ति अग्नेः प्रकृतत्वादग्नेरेव प्राधान्यम् । तद्वत् ॥

उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसंसृजेथामयंच ।
पुनःकृण्वंस्त्वापितरंयुवानमन्वातांसी त्वयितन्तुमेतम् ॥

उद्बुध्यस्वाग्ने इति । अग्निर्ऋषिः देवता च । त्रिष्टुप् छन्दः । उद्बुध्यस्व हे अग्ने! उच्चैर्जानीहि । किम् । सामर्थ्यादस्माभिः क्रियमाणं कर्म । प्रतिजागृहि । प्रतिशब्दोऽत्र धात्वर्थानुवादी । लम्बते प्रलम्बत इति यथा । 'जागृ निद्राक्षये' । जागरणे(न) चात्र क्रियमाणे कर्मणि सादरत्वं लक्ष्यते । अस्माभिः क्रियमाणे कर्मणि सादरो भवेत्यर्थः । त्वत्प्रसादादेनं यजमानमिष्टापूर्ते इष्टं श्रौतकर्मफलं, पूर्तं स्मार्तकर्मफलम् । केचित् पूर्तशब्दं पक्वदानवचनमाहुः । तस्मिन्नपि पक्षे तत्फलमेवाभिप्रेयते । उभे इष्टापूर्ते । अथवा इष्टापूर्ते इति तृतीयार्थे प्रथमा द्वितीया वा । संसृजेथामिति तु मध्यम एव पुरुषः । किन्त्वेकवचनस्य स्थाने द्विवचनम् । सृजिश्चात्रान्तर्णीतण्यर्थः । एनं यजमानमिष्टापूर्ताभ्यां संसर्जय संयोजयेत्यर्थः । अयं च यजमानः । पुनःशब्दस्यात्र वीप्सालोपो द्रष्टव्यः । पुनःपुनरित्यर्थः । कृण्वन् कुर्वन् त्वा त्वां पितरं सर्वस्य जगतः पितरं पितृभूतं पातारं वा युवानं तरुणम् । अग्निर्हि पुनः पुनः काष्ठसंयोगाद् युवैव भवति । अत इदमुच्यते पुनः कृण्वंस्त्वा पितरं युवानमिति । अथवा युवानमिति 'यु मिश्रण' इत्यस्य क्रियाशब्दोऽयम् । मिश्रयितारमात्मनः कर्मणा । कर्माङ्गभूतमित्यर्थः । अन्वातांसीत् । अनु आ अतांसीत् । अन्वाङुपसृष्टस्य तनोतेरेतद्रूपम् । लुङ् च वर्तमाने द्रष्टव्यः । अन्वातनोति अनुपूर्वेण चाभिमुख्येन च करोतीत्यर्थः । त्वयि । निमित्त एषा सप्तमी । 'चर्मणि द्वीपिनं हन्ती'ति यथा । त्वदर्थं त्वत्पूजनार्थमित्यर्थः । तन्तुम् । तन्तुशब्दोऽत्र यज्ञवचनः तन्यते विस्तार्यत इति । यज्ञम् एतम् ॥

माविदन्परिपन्थिनोयआसीदन्तिदम्पती ।
सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः ॥

(अष्ट० ८. अ० ३. व० २६. ऋ० १२)

एवं तावत् प्रासङ्गिकमुक्तम्। अथेदानीं प्रकृतमनुसरामः। कल्याणेषु देशवृक्षचतुष्पथेषु 'मा विदन् परिपन्थिनः' इति जपेत्। मा विदन् सूर्याया आर्षम्। अनुष्टुप् छन्दः। अनादिष्टदेवतामन्त्रन्यायेनास्य मन्त्रस्य देवताकल्पनम्। पिशाचादिसञ्ज्ञा वा। ये आसीदन्त्यागच्छन्ति पथि मोषणायाभिभवाय च, ते परिपन्थिनो मा विदन्। 'विद ज्ञाने'। मा ज्ञासिषुः। पथि गच्छन्तौ दम्पती वधूवरौ। किञ्च सुगेभिः सुगमनैः पथिभिः दुर्गं दुर्गमं देशमतीताम् अतीत्य गच्छेतां दम्पती। किञ्चापद्रान्तु। 'द्रा कुत्सितायां गतौ'। अपसारिताः सन्तः कुत्सितं गच्छन्तु पथः सकाशात्। अरातयोऽस्मच्छत्रवः। अस्य मन्त्रस्यानादिष्टदेवतात्वे विष्णोः प्रजापतेरग्नेर्वा प्रसादादिति वाक्यशेषः॥

सुमङ्गलीरियंवधूरिमांसमेतपश्यत।
सौभाग्यमस्यैदत्त्वायाथास्तंविपरेतन॥

(अष्ट० ८. अध्या० ३. व० २३. ऋ० ११)

वासेवासे सुमङ्गलीरियं वधूरिति ईक्षकानीक्षेत। सुमङ्गलीः सूर्याया आर्षम्। अनुष्टुप् छन्दः। दम्पतिदिदृक्षवो जना उच्यन्ते। हल्ङ्यादिलोपाभावः छान्दसत्वात्। सुमङ्गलीः शोभनवस्त्रालङ्कारानुलेपनादिमङ्गला इयं वधूरचिरोढा एवं ज्ञात्वा यूयं हे दिदृक्षुजनाः! समेत सङ्गच्छध्वम्। समेत्य चेमां वधूं सुमङ्गलां पश्यत कौतूहलापनोदनार्थम्। दृष्ट्वा च सौभाग्यम्। भगशब्दो धनवचनः। सौधन्यम्। अथवा भगशब्द उपस्थपर्यायः। सूपस्थत्वमस्यै वध्वै दत्त्वाय दत्त्वा अथानन्तरमस्तं गृहनामैतत्। स्वं स्वं गृहं वि परा इतन। विशब्दो वैविध्ये। विविधं नानाप्रकारं परेतन नशब्दश्चोपजनः। परेत पराङ्मुखा गच्छत यूयम्॥

इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि।
एनापत्यांतन्वं१संसृजस्वाधाजिव्रीविदथमावदाथः॥

(अष्ट० ८. अध्या० ३. व० २५. ऋ० २७)

'इह प्रियं प्रजया ते समृध्यतामि'ति गृहं प्रवेशयेत् । इह प्रियं सूर्याया आर्षम् । जगती छन्दः । गृहं प्रवेश्यमाना वधूरभिधेया । इहास्मिन् पतिगृहे मदीये वेश्मनीत्यर्थः । प्रियं प्रीतिः प्रजया भाविन्या पुत्रपौत्रादिकया ते तव समृध्यतां सम्यग् वर्धताम् । अस्मिन् गृहे । सप्तमीनिर्देशात् स्थितेति वाक्यशेषः । अस्मिन् मदीये गृहेऽवस्थिता गार्हपत्याय गृहपतित्वाय गृहस्य स्वामिनीत्वाय जागृहि क्षीणनिद्रा यत्नवती भव, व्याप्रियस्वेत्यर्थः । एना अनेन मया पत्या । तन्वं शरीरमात्मीयं संसृजस्व संयोजय मां परिष्वजेथा इत्यर्थः । एवमुक्तेन प्रकारेण यौवनमनुनीय अथानन्तरं जिव्री जीर्णौ सन्तौ आवां दम्पती विदथम् । यज्ञनामैतत् । यज्ञम् आवदाथः । लोडर्थे पञ्चमोऽयं लकारः उत्तमस्य च स्थाने मध्यमः । आवदाव । श्रौतस्मार्तकर्मविषयां कथां कीर्तयिष्याव इत्यर्थः ॥

अथ गृहप्रवेशनमन्त्रा व्याख्यायन्ते—

आनः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमाविश शन्नो भव द्विपदे शं चतुष्पदे ॥
अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे ॥
इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
दशास्यां पुत्राना धेहि पतिमेकादशं कृधि ॥
सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥

(अष्ट० ८. अध्या० ३. व० २८. ऋ० ४३—४६)

'आनः प्रजां जनयतु प्रजापति'रिति चतसृभिः प्रत्यृचं जुहोति[3] । आ नः प्रजां सूर्यायाश्चतस्रोऽपि । आद्या जगती । द्वितीया त्रिष्टुप् । तृतीयाचतुर्थ्यावनुष्टुभौ । प्रथमायाः पूर्वार्धर्चस्य प्रजापतिश्चार्यमा च देवता ।

---

१. 'येद । सू', २. 'र्गावयवौ स', ३. 'ति सू' ग. पाठः.

उत्तरार्धर्चस्य वधूरेव । द्वितीयाचतुर्थ्योश्च वधूरेव । तृतीयाया इन्द्रः । आ नः प्रजाम् । 'अस्मदो द्वयोश्चे'ति द्विवचनस्य स्थाने बहुवचनम् । नौ आवयोः प्रजां पुत्रपौत्रादिकाम् आजनयतु मर्यादयोत्पादयतु प्रजापतिः । किञ्च, आ जरसाय आ जराया यावज्जीर्णौ तावत् समनक्तु सङ्गमयतु मैथुनयोगं नयतु अर्यमा देवः । किञ्च हे वधु! अदुर्मङ्गलीरकुत्सितमङ्गला कल्याणमङ्गला सती पतिलोकं मम पत्युर्गृहम् आविश । शं सुखं भव नः अस्माकम्, आवयोरित्यर्थः । द्विपदे मनुष्यादिकाय शमेव, चतुष्पदे पश्वादिकाय च सुखकरी भवेत्यर्थः ॥

अघोरचक्षुरकुटिलचक्षुरभयङ्करदृष्टिः प्रसन्नदृष्टिरित्यर्थः । अपतिघ्नो पत्युर्ममाहन्त्री च वैधव्याप्रापकं कुर्वन्तीत्यर्थः । एधि भव । शिवा सुखा च भव । पशुभ्यो गवादिभ्यः पानीयभक्षणप्रदानेन सुमनाः कल्याणचित्ता भव । सुवर्चाः कल्याणदीप्तिश्च भव । निर्मलदेहेत्यर्थः । किञ्च वीरसूः, वीरशब्दः पुत्रवचनः । वीरानसूयत इति वीरसूः पुंप्रसूतिरित्यर्थः । देवकामा । देवशब्दः पितृमनुष्याणामप्युपलक्षणार्थः । देवपितृमनुष्येषु परिचर्येच्छा यस्याः सा देवकामा । देवपितृमनुष्यपरिचरणपरा च भवेत्यर्थः । स्योना । सुखनामैतत् । सर्वेषां सुखकरी च भव । किञ्च शन्नो भव द्विपदे शं चतुष्पदे इति व्याख्यातः पादः ॥

इमां त्वम् । इन्द्रः प्रार्थ्यते वरेण । इमां वधूं त्वं हे इन्द्र! मीढ्वः । 'मिह सेचने' । वृष्ट्युदकेन कृत्स्नस्य जगतः सेक्तः! । अथवा मीढ्व इति धननाम तद्वान् मीढ्वान् तस्य सम्बोधनमिदं मीढ्व इति । धनवन्नित्यर्थः । सुपुत्रां शोभनपुत्रां सुभगां कल्याणधनां च कृणु कुरु । अस्यां वध्वां दश पुत्रान् दशसङ्ख्यान् पुत्रान् आधेहि आभिमुख्येन मर्यादया वा स्थापय । पतिं भर्तारं मामेकादशं कृधि, आवाभ्यां दशपुत्रान् देहीत्यर्थः ॥

सम्राज्ञी श्वशुरे । वधूर्वरेणोच्यते । हे वधु! सम्राज्ञी । राजतिरैश्वर्यकर्मा सम्यगीश्वरी, स्वाधीनप्रवृत्तिरित्यर्थः । श्वशुरे मम पितरि भव । सम्राज्ञी-श्वश्र्वां मम मातरि । ननान्दरि सम्राज्ञी भव । भ्रातृभार्या भर्तृभगिनी च ननान्द्रोच्येते । मद्भ्रातृभार्याविषये मद्भागिनीविषये चेश्वरी भव । सम्राज्ञी अधिदेवृषु देवरेष्वित्यर्थः । अस्मद्भ्रातृविषये चेश्वरी भव । अधिशब्दः पादपूरणः ॥

---

१. 'रदीनचक्षुरकुटि' ब. प. पाठः.

समञ्जन्तुविश्वेदेवाःसमापोहृदयानिनौ ।
संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥

(अष्ट० ८. अध्या० ३. व० २८. ऋ० ४७)

'समञ्जन्तु विश्वेदेवाः' इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये । सूर्याया आर्षम् । अनुष्टुप् छन्दः । विश्वेदेवा देवता । समञ्जन्तु सङ्गमयन्तु । विश्वेदेवाः नौ आवयोर्हृदयानि हृद्गतानि मनांसि मनोवृत्तीरित्यर्थः । आपश्च समुपसर्गाभ्यासादञ्जन्त्वित्यनुषङ्गः । समञ्जन्तु । मातरिश्वा वायुश्च समनक्तु धाता च समनक्तु । समु देष्ट्री दधातु नौ देष्ट्री नामान्तरिक्षस्थाना वाग्वादितिर्वा इहाभिप्रेता । सा च नौ आवां सन्दधातु सहितौ करोतु । यावज्जीवमपृथग्भूतौ करोत्वित्यर्थः । उकारः पादपूरणः ॥

अथानुगतिमायश्चित्तम् । 'यदि तूपशाम्येत् पत्न्युपवसेदि'त्येके । अपरे तु 'अपिवोत्तरया जुहुयान्नोपवसेदि'त्यापस्तम्बीयाः ।

अयाश्चाग्नेऽस्यनभिशस्तीश्चसत्यमित्त्वमयाअसि ।
अयसामनसाधृतोऽयसाहव्यमूहिषेऽयानोधेहिभेषजम् ॥

स्वाहेत्येकामाहुतिं जुहोति । विश्वेदेवा ऋषयः । स्वराट् पङ्क्तिश्छन्दः । अग्निर्देवता । असि, ऊहिषे, धेहि, इति मध्यमपुरुषयोगात् त्वमिति युष्मत्पदसमन्वयाच्च प्रत्यक्षकृतोऽयं मन्त्रः । अयाः अनभिशस्तीः घृत इति चानामन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या । हे अग्ने! यस्त्वमयाः । अयतेर्गतिकर्मण औणादिकमेतद् रूपम् । सदा गन्तेत्यर्थः । अग्नेर्गन्तृत्वं कथमिति चेद्, दूतत्वश्रुतेः । तथाहि — 'त्वां दूतमग्ने! अमृतं', 'युगे त्वां दूतमरतिं हव्यवाहं', 'दूतो देवानामसि मर्त्यानामि'त्यादिषु बहुषु मन्त्रेषु दूतत्वं श्रूयते । अतो गन्तृत्वमुपपद्यते । हविर्वहनदेवताह्वानार्थं सदा गन्तेत्यभिप्रायः । चकारः समुच्चयार्थीयः । वक्ष्यमाणापेक्षश्च समुच्चयः । असि भवसि । अनभिशस्तीश्च । छान्दसो दीर्घः । कर्मणि चायं क्तिन्प्रत्ययो द्रष्टव्यः । अभिशंस्तिर्गर्हा निन्देत्यनर्थान्तरम् । अनभिशंसनीयश्चासि । यस्त्वमनिन्द्यश्चासि केनापीत्यभिप्रायः । सत्यमित्त्वम्

१. 'च' ग. पाठः. २. 'वाह' ख. ग. पाठः.

इच्छब्द एवार्थे त्वंशब्दात् परो द्रष्टव्यः । सत्यशब्दो जगत्कारणवचनः । तथाहि लक्षणवाक्यं ''सत्यं ज्ञानमनन्तं ब्रह्मे''ति । तथैव सत्यशब्दो भगवता यास्केन निरुक्तः, 'सत्यं कस्मात् । सत्सु तायते सत्प्रभवं वे'ति । त्वमेव सत्यं जगत्कारणमित्यर्थः । कथमग्नेर्जगत्कारणत्वमिति चेदुच्यते । जगत्कारण-कार्यत्वात् । अतः कार्यकारणयोरभेदोपचारनिबन्धनोऽयं व्यपदेशो द्रष्टव्यः । यथा सुवर्णं कुण्डलमिति । अथवा वैश्वानरोऽग्निर्जगत्कारणम् । कथं वैश्वानरस्य जगत्कारणत्वमिति चेदुच्यते । मन्त्रवर्णात् । 'नाहं तन्तुं न विजानाम्योतुं' 'स इत्तन्तुं स विजानात्योतुमि'ति मन्त्रद्वयेन वैश्वानरस्य जगत्कारणत्वं प्रतिपादितम् । वैश्वानरोऽग्निर्जगत्कारणमस्तु । पार्थिवस्याग्ने-र्जगत्कारणत्वे किमायातमिति चेदुच्यते । पार्थिव एवाग्निर्वैश्वानर इत्य-भिप्रायः । तथाहि भगवता यास्केन सिद्धान्तितम्— 'अयमेवाग्निर्वैश्वानरः' इत्यादिना भाष्येण । अतः पार्थिवोऽग्निस्त्वमेव सत्यमिति वक्तुं युक्तम् । अया असि । अयतिरत्र पौनरुक्त्यपरिहारार्थं ज्ञानार्थो द्रष्टव्यः । गतिकर्मणां धातूनां ज्ञानकर्मत्वं शब्दविद्भिरभ्युपगम्यते । ज्ञातासि सर्वज्ञोऽसीत्यर्थः । यश्च त्वमयसा मनसा ज्ञात्रा मनसा ज्ञानपूर्वमित्यर्थः । धृतः आहवनीयादिरूपेण धारितः । अयसा अत्रापि मनसेत्यनुषक्तव्यम् । ज्ञानयुक्तेन मनसा सादरेण मनसेत्यर्थः । हव्यं हवनार्हं चरुपुरोडाशादि हविः । ऊहिषे । 'वह प्रापण' इत्यस्य सम्प्रसारणे कृते लटि मध्यमपुरुषैकवचनम् । वहसीत्यर्थः । स त्वम्, अया । तृती-यैकवचनान्तमेतत् । 'अया ते अग्ने स समिधा विधेमे'तिवत् । अया । कया । साम-र्थ्यादाज्याहुत्या । हेतावियं तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । इमा-माज्याहुतिमुपभोक्तुमित्यर्थः । नः अस्मभ्यं, धेहि । दधातिर्दानार्थः । देहि । भे-षजमनुगतस्याग्नेः सन्धानलक्षणमौषधम् । अग्निविच्छेददोषं नाशयेत्यभिप्रायः ॥

अथौपासनहोममन्त्राः—

'अग्नये स्वाहे'ति सायं जुहुयात् । 'सूर्याय स्वाहे'ति प्रातः । उभयत्र प्रजापतये (पतये ?) स्वाहे'ति द्वितीयो मन्त्रः । एते निगदसिद्धाः ॥

---

१. 'ति । स' क. पाठः. २. 'किमिति' ख. ग. पाठः. ३. 'ति यथा । अ' ख. पाठः.

अथ पार्वणस्थालीपाकः । तत्र ब्रह्मणः परिग्रहपक्षे ब्रह्मा ब्रह्मसदनात् तृणं प्रत्यग्दक्षिणा निरसेत्—

'निरस्तः परावसुरि'ति ।

वामदेवार्षं यजुरिदम् । परावसुरभिधेयः । निरस्तः । 'असु क्षेपणे' निरुपसर्गो बहिःशब्दपर्यायः । निर्गत इति यथा । बहिः क्षिप्तः । अस्मात् स्थानादपगतः । अस्त्विति वाक्यशेषः । परावसुः परावसुर्नामासुरः कश्चित् । स चर्त्विजां स्थानेष्वास्ते । तृणनिरासेन च तन्निरासः क्रियते । तस्मात् तृणे निरस्यमाने परावस्वध्यारोपं कृत्वा निरासः कर्तव्यः ॥

इदमहमर्वावसोः सदने सीदामीत्युपविशेत् ।

वामदेवार्षं यजुरिदम् । अर्वावसुरभिधेयः । अहमिदं सदने । इदमिति सप्तम्या लुक् । अस्मिन् सदने स्थाने । अर्वावसोः अर्वावसुर्नाम कश्चिद् देवविशेषः । स चर्त्विजां स्थानेषु सीदति । अत एवमुच्यते अर्वावसोः सदन इति । सामीपिकं चैतदधिकरणम् । अर्वावसुस्थाने समीप इत्यर्थः । सीदाम्युपविशामि । स्वसमीपमुपविशन्तं मामर्वावसुरनुगृह्णात्वित्यभिप्रायः ॥

दक्षिणतः कुशेषूपविश्य जपति —

बृहस्पतिर्ब्रह्मेति ।

वामदेवस्य गायत्री छन्दः । बृहस्पतिर्देवता । बृहस्पतिः देवपुरोहितः ब्रह्मा नाम ऋत्विग् भूत्वा ब्रह्मसदने ब्रह्मस्थाने आसिष्यते । व्यत्ययेनायं लडर्थे लट् । आस्ते । नाहं मनुष्य इत्यर्थः । एतदुक्तं भवति — बृहस्पतिरेवाहं ब्रह्मत्वं करोमि न मनुष्य इत्यात्मनि बृहस्पत्यध्यारोपः कर्तव्य इति । अतो बृहस्पतिरेवाहं ब्रह्मा भूत्वा ब्रह्मसदन आस इत्यर्थः प्रदर्शितो भवति ॥

बृहस्पते ! यज्ञं गोपाय ।

उत्तरोऽर्धर्चः प्रत्यक्षकृतः । अतो भिन्नं वाक्यम् । हे बृहस्पते ! यज्ञम् । 'तत् करोति तदाचष्टे' (ग० सू० ३-१-२५) इति णिच् । ण्यन्तादपि क्विप् । 'णेरनिटि' (६-४-५१) इति णिलोपः । यज्ञशब्दः कर्तरि द्रष्टव्यः । यज्ञकर्तारं त्वदात्मनावस्थितमित्यर्थः । गोपाय रक्ष ॥

तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीन् निर्वपति पवित्रे अन्तर्धाय —

अमुष्मै त्वा जुष्टं निर्वपामीति ।

वामदेवार्षं यजुः । निरुप्यमाणं हविरभिधेयम् । उद्देश्यदेवता वा । हे हविः ! व्रीहियवादिरूप ! । अमुष्मै । अदश्शब्देनात्र चतुर्थ्यन्तेनोद्देश्यदेवतानामभिधेयमभिप्रेतमग्नये सूर्याय प्रजापतय इत्यादि । त्वा त्वाम् । निर्वपामि । निर्वापो नाम संस्कारो देवतासात्कारलक्षणः । देवतासात्करोमि । देवतायै सङ्कल्पयामीत्यर्थः । कथम् । जुष्टम् । 'जुषी प्रीतिसेवनयोः' । क्रियाविशेषणं चैतत् । यथा देवता प्रीणाति सेवते वा, तथा निर्वपामीत्यर्थः ॥

अथैनान् प्रोक्षति यथानिरुप्तमग्नुष्मै त्वा जुष्टं प्रोक्षामीति प्रोक्षणमन्त्रो निर्वापमन्त्रेण व्याख्यातः ॥

इध्ममभ्याद(दा? धा)ति 'अयं त इध्म' इत्यनेन मन्त्रेण ।

**अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ॥**

वामदेवार्षं यजुरिदम् । अग्निर्जातवेदा देवता, शुद्धो वा । हे जातवेदः ! जातविद्य ! जातधनो वा । अयमिध्मः पञ्चदशदार्वात्मकः काष्ठकलापः । ते तवात्मा शरीरम् । साकाङ्क्षत्वादभ्याधीयत इति वाक्यशेषः । योऽस्माभिरभ्याहितः, तेनाभ्याहितेन इध्यस्व । 'ञि इन्धी दीप्तौ' । दीप्यस्व । वर्धस्व च । बहुज्वालश्च भवेत्यर्थः । अस्मानपीद्ध । णिज्लोपो द्रष्टव्यः । इन्धय दीपय वर्धय च । न केवलान्, किं तर्हि । प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन । सहयोगलक्षण एतास्तृतीयाः । प्रजया पुत्रपौत्रादिकया सह । पशुभिर्गोमहिषाजादिभिः । ब्रह्मवर्चसेन । ब्रह्म वेदः, तज्जन्यं वर्चो ब्रह्मवर्चसं, तेन । एतदुक्तं भवति — वेदाध्ययनेन तदर्थज्ञानेन तदर्थानुष्ठानेन च या श्रीस्तयेत्यर्थः । अन्नाद्येन शालिगोधूमादिलक्षणेन च । समेधय सम्यक् वर्धय । उपक्रमवशात् समिद्धय चेति द्रष्टव्यम् । अथवा प्रजया पशुभिरित्यादि करणे तृतीया । प्रजादिभिरस्मान् संवर्धय चेति ॥

अथ होममन्त्राः —

**'अग्नये स्वाहा सोमाय स्वाहे'**ति आज्यभागमन्त्रौ निगदव्याख्यातौ । **'अग्नये स्वाहा अग्नीषोमाभ्यां स्वाहे'**ति पौर्णमास्यां प्रधानहोममन्त्रौ । **'अग्नये स्वाहा इन्द्राग्निभ्यां स्वाहे'**त्यमावास्यायाम् । एते च निगदव्याख्याताः ।

---

१. 'हा इन्द्राग्नि' ख. ग. पाठः,

स्विष्टकृद्धोममन्त्रः—

यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् ।
अग्निष्टत् स्विष्टकृद् विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे ॥

अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे सर्वान् नः कामान् समर्धय स्वाहा ॥

'यदस्य कर्मणोऽत्यरीरिचमि'ति वामदेवार्षं यजुरिदम् । अग्निः स्विष्टकृद् देवता । अस्य प्रक्रान्तस्य कर्मणः सम्बन्धि यदत्यरीरिचम् अतिरेचितवानस्मि यदधिकं कृतवानित्यर्थः । यद्वा । वाशब्दश्चार्थे । यच्च न्यूनमपरिपूर्णमिह कर्मणि । अकरम् । वकारलोपो द्रष्टव्यः । अकरवं कृतवानस्मि । तद् सर्वमग्निः स्विष्टकृत् । दुरिष्टमपि स्विष्टं करोतीति स्विष्टकृत् । विद्वान् जानन् । किम् । सामर्थ्यात् स्वमधिकारं हविर्वहनादिकमस्मद्भक्ततां वा । स्विष्टं दुरिष्टमपि सु इष्टं सुपूजितं सगुणमित्यर्थः । तथा सुहुतं दुर्हुतमपि सुहुतं यथाशास्त्रं हुतं करोतु । मे मम स्वाहुतं मयानुष्ठितमित्याशासे । इत उत्तरं यच्छब्दाध्याहारेणैकवाक्यता योज्या । योऽग्निरस्माभिराशासितः स्विष्टं सुहुतं करोत्विति, तस्मा अग्नये स्विष्टकृते सुहुतहुते । दुर्हुतमपि सुहुतं जुहोतीति करोतीति सुहुतहुत्, तस्मै । यागहोमकर्तृत्वमग्नेरुपपन्नं, होतृत्वात् । सर्वप्रायश्चित्ताहुतीनां सर्वस्य न्यूनातिरिक्तस्य कर्मणः प्रायश्चित्तार्थाहुतिः सर्वप्रायश्चित्ताहुतिः । प्रायो विनाशः, चित्तं सन्धानं, विनष्टस्य पुनः सन्धायिका आहुतिरित्यर्थः । तासां सर्वप्रायश्चित्ताहुतीनाम् । कामानाम् । काम्यत इति कामः कर्मफलमभिप्रेतम् । कर्मफलानां चेत्यर्थः । समर्धयित्रे । समर्धनं नाम सगुणीकरणं, सगुणीकर्त्र इत्यर्थः । सम्प्रदानचतुर्थ्य एताः, न तादर्थ्यचतुर्थ्यः । अतो मन्त्रान्तेन स्वाहाकारेण सम्बन्धः कार्यः । कामानां समर्धयित्रे स्वाहेति मन्त्रशेषः प्रत्यक्षकृतः । अतो यत्तच्छब्दाध्याहारेण भाव्यमेकवाक्यतायै । योऽयमस्माभिरित्थं प्रार्थ्यते, स त्वं नोऽस्माकं स्वभूतान् सर्वान् कामान् सर्वाः फलाभिलाषा इत्यर्थः । समर्धय सम्यग् वर्धय[2] । प्रवृद्धान् सुसम्पूर्णान् कुर्वित्यर्थः ॥

---

१. 'तः सन् स्वि' ख. ग. पाठः. २. 'से' क. पाठः.

सर्वप्रायश्चित्तहोममन्त्राः—

अयाश्चाग्नेऽस्यनभिशस्तीश्चसत्यमित्त्वमया असि ।

अयासावयसाकृतोऽयासन्हव्यमूहिषेऽयानोधेहिभेषजंस्वाहा ॥

'अयाश्चाग्नेऽसि' वामदेवार्षः स्वराट्, पङ्क्तिश्छन्दः । अग्निर्देवता । पूर्वार्धर्चोऽग्न्यनुगतिप्रायश्चित्तहोममन्त्रेण व्याख्यातः । उत्तरस्तु व्याख्यायते—यश्च त्वमयासा । छान्दसो दीर्घः । अयसा । अयश्शब्दो हिरण्यनाम । सादृश्याद् वयोविशेषणं च । हिरण्यसदृशेन । हिरण्यसादृश्यं चोज्ज्वलत्वममृतत्वं च । तथाच श्रूयते — 'अमृतं वाज्यम् अमृतं हिरण्यमि'ति । हिरण्यवदुज्ज्वलेनामृतत्वहेतुना चेत्यर्थः । केन । वयसा । अन्ननामैतत् । आज्याहुतिलक्षणं चात्रान्नमभिप्रेतम् । आज्याहुतिलक्षणेनान्नेन । कृतो निर्मितः, वर्धित इत्यर्थः । यश्च त्वम् अया सन् । विसर्जनीयलोपो द्रष्टव्यः । अयाः सन् । तथाच कौषीतकिनां पाठः—'अयाः सन् हव्यमूहिषे' इति । ज्ञाता सन् । किम् । सामर्थ्यात् स्वमधिकारमसङ्गक्तता वावबुध्यमानः सन्नित्यर्थः । हव्यं हवनार्हं चरुपुरोडाशादि हविः ऊहिषे वहसि । स त्वम् । अया । तृतीयैकवचनान्तमेतत् । 'अया ते अग्ने समिधा विधेम' इति यथा । अनया । कया । सामर्थ्यादाज्याहुत्या । हेतौ तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । इमामाज्याहुतिमुपभोक्तुमित्यर्थः । नोऽस्मभ्यम् । धेहि देहि । भेषजं[2] वैगुण्ये[3] समाधानलक्षणमौषधम् । पुरुषापराधकृतं वैगुण्यं नाशयेत्यभिप्रायः ॥

"अतो देवा अवन्तु नः" इति द्वाभ्याम् ।

अतोदेवाअवन्तुनोयतोविष्णुर्विचक्रमे ।

पृथिव्याःसप्तधामभिः ॥

(अष्ट० १ अध्या० २. व० ७, ऋ० १६)

उभयोर्मेधातिथिः काण्व ऋषिः । गायत्री छन्दः । विष्णुर्देवता । अतो विष्णुर्भगवान् वासुदेवो विचक्रमे विक्रान्तवान् । किम् । सप्तधामभिः । द्वितीयार्थे तृतीया । सप्त धामानि । धामशब्दोऽत्र स्थानवचनः । भूरादीनि सत्यान्तानि स्थानानि । कुत आरभ्य । पृथिव्याः । आरभ्येति वाक्यशेषः ।

---

१. 'य' क. पाठः. २. 'जं कर्मवै, ३. 'ण्यमाधा' ग. पाठः. ४. 'वा तृतीयार्थे स' ख. ग. पाठः.

एतदुक्तं भवति — यो विष्णुर्भगवान् वासुदेवो बलिबन्धनकाले सुरैः समयं कृत्वा त्रिभिरात्मीयैः पदैः पृथिव्यादीन् सत्यान्तान् लोकान् विक्रान्तवान्, स विष्णुर्वैगुण्यजनिताद् दोषादस्मान् रक्षत्विति । तस्मै स्वाहा । अथवा, सप्तधामानि सप्तच्छन्दांसि गायत्र्यादीनि जगत्यन्तानि वेदितव्यानि । अस्मिन् पक्षे सप्तेति तृतीयाबहुवचनस्य लुग् द्रष्टव्यः । सप्तभिर्धामभिः । तृतीयानिर्देशात् स्तूयमान इति वाक्यशेषः । पृथिव्या इति च द्वितीयार्थे पञ्चमी षष्ठी वा । जात्यभिप्रायं चैकवचनम् । किं पृथिवीव्यक्तयो बह्व्यः । ओमित्युच्यते । 'यदिन्द्राग्नी अवमस्यां पृथिव्यां', 'यदिन्द्राग्नी परमस्यां पृथिव्यामि'ति च मन्त्रवर्णात् पृथिवीबहुत्वं प्रतीमः । तथा द्वितीयस्यां पृथिव्यां तृतीयस्यां पृथिव्यामिति च तिस्रः पृथिवीः । त्रीन् लोकान् विचक्रम इत्यर्थः । एवं हि पौराणिका आहुः — बलिमखे वर्तमाने विष्णुर्वामनरूपमास्थाय यज्ञवाटं गत्वा तत्रस्थः त्रैलोक्यं त्रिभिः पदैः प्रक्रान्तवानिति । अत उपपन्नतरं सप्तभिः छन्दोभिः स्तूयमानो विचक्रम इति । य इत्थंभूतो विष्णुस्तस्मै स्वाहेति ॥

इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ।
समूह्ळमस्य पांसुरे ॥

(अष्ट० १. अध्या० २. व० ७. ऋ० १७)

"इदं विष्णुः" । इदमिति सर्वस्य प्रतिनिर्देशः । सर्वमिदं त्रैलोक्यं विष्णुर्जगत्कारणं परमात्मा वासुदेवो बलिबन्धनकाले बलियज्ञवाटे स्थित्वा विचक्रमे विक्रान्तवान् । केन प्रकारेण । त्रेधा स्थानभेदेन त्रिप्रकारम् । निदधे निहितवान् । पदमात्मीयं पदं त्रिषु स्थानेषु कृतवानित्यर्थः । पृथिव्यामन्तरिक्षे दिवि चेत्येके । समारोहणे विष्णुपदे गयशिरसि चेत्यन्ये । तच्च त्रिविधमपि समूह्ळम्[3] । 'वह प्रापण' इत्यस्य सम्पूर्वस्यैतद्रूपम् । सम्यगूढं प्रापितं सम्यक् प्रतिष्ठापितमित्यर्थः । अस्य विष्णोः स्वभूतं पदं पांसुरे । पांसवो यस्मिन् देशे सन्ति स पांसुरः । रो मत्वर्थीयः । लुप्तोपमं चैतद् द्रष्टव्यम् । पांसुर इव । यथा पांसुमति देशे सुप्रतिष्ठापितं पदं भवेत्, तद्वदित्यर्थः । य इत्थम्भूतो विष्णुस्तस्मै स्वाहेति ॥

भूः स्वाहेत्याद्या व्याहृतयो व्याख्याताः ॥

---

१. 'वन्यां पृ' क. पाठः. २. 'प', ३. 'ळम्' ख. ग. पाठः.

हुत्वा संस्थाजपेनोपस्थानम् । संस्थाजपो नाम — "ओञ्च मे स्वरश्च मे" इत्ययं मन्त्रः ।

ओंचमेस्वरश्चमेयज्ञोपंचतेनमश्च ।

यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥

वामदेव ऋषिः । उपरिष्टाद् बृहती छन्दः । अग्निर्देवता । हे यज्ञ ! यज्ञसाधनत्वाद् यज्ञशब्देनात्र तत्कर्मसम्बन्ध्यग्निरुच्यते । हे भगवन्नग्ने ! यज्ञसाधनभूत ! । ओं च । ओंशब्देनात्र प्रणवादिविकारविकृतं क्रतुविनियुक्तं मन्त्रजातमभिप्रेतम् । तेन च । तत्साध्यं कर्म । क्रतुविनियोगविकृतमन्त्रसाध्यं कर्मेत्यर्थः । चकारः समुच्चयार्थः । वक्ष्यमाणापेक्षश्च समुच्चयः । मे मम स्वभूतं, मयानुष्ठितमित्यर्थः । स्वरश्च । स्वरशब्देनात्र त्रैस्वर्येण यथासमाम्नायमविकारेण प्रयुक्तं मन्त्रजातमभिप्रेतम् । अत्रापि चकारः समुच्चयार्थः । पूर्वापेक्षश्च समुच्चयः । मे मम स्वभूतं मयानुष्ठितमित्यर्थः । अत्र पदान्वयसामर्थ्याद् यच्छब्दाध्याहारः कर्तव्यः । यत् कर्म विकृताविकृतमन्त्रसाध्यं विगुणं मयानुष्ठितं, तद्गतदोषापनुनुत्सया ते तुभ्यं त्वदर्थम् । उपशब्देनार्थसामर्थ्यादुपस्थानमुच्यते । उपस्थानं च नमस्कारश्च । क्रियत इति वाक्यशेषः । तत्रोपस्थाननमस्कारयोर्विषयभेदमाह — यत् ते तव सम्बन्धि कर्म न्यूनमपरिपूर्णं मयानुष्ठितं, तस्मै । तादर्थ्ये चतुर्थी । तादर्थ्यं च नाशः, मशकेभ्यो धूम इति यथा । तन्नाशाय । न्यूनकृतदोषनाशायेत्यर्थः । ते तुभ्यम् उपस्थानं, क्रियत इति वाक्यशेषः । यच्च ते तव सम्बन्धि कर्मातिरिक्तं मयानुष्ठितं, तस्मै तन्नाशाय अतिरेकदोषनाशायेत्यर्थः । ते तुभ्यं नमः । क्रियत इति वाक्यशेषः । एतदुक्तं भवति — यच्छ्रौतस्मार्तलक्षणं कर्म प्रणवादिविकारविकृतमन्त्रसाध्यमविकृतमन्त्रसाध्यं च न्यूनातिरेकदोषं मयानुष्ठितं, तद्गतन्यूनातिरेकदोषनिर्घातार्थमुपस्थानं च नमश्च क्रियते । व्यवस्थया न्यूनकृतदोषनिर्घातार्थमुपस्थानम् । अतिरेकदोषनिर्घातार्थं नमस्कार इति ॥

अथ पशुकल्पमन्त्रा व्याख्यायन्ते । तत्राज्याहुतिहोममन्त्रौ — 'अग्निं दूतमिति द्वाभ्यां हुत्वे'ति ।

अग्निंदूतंवृणीमहेहोतारंविश्ववेदसम् ।

अस्ययज्ञस्यसुक्रतुम् ॥

(अष्ट० १. अध्या० १. व० २२. ऋ० १)

१. 'चातुरुत्पादयते' ख. ग. पाठः. २. 'म् उप च । उ' क. पाठः. ३. 'नात्र था', ४. 'र्थे एषा च' ख. ग. पाठः.

अग्निमग्निंहवीमभिःसदाहवन्तविश्पतिम् ।

हव्यवाहंपुरुप्रियम् ॥

(अष्ट० १. अध्या० १. व० २२. ऋ०२)

द्वयोरपि मेधातिथिः काण्व ऋषिः । गायत्र्यौ । अग्निर्देवता । अग्निं दूतम् । सन्देशेन यः प्रेष्यते, स दूत इत्युच्यते । अग्निं दूतं देवान् प्रति सन्देशेन गन्तारम् । वृणीमहे । वरणमभ्यर्थना । अभ्यर्थयामहे । न केवलं दूतमेव, किं तर्हि । होतारं च । तथाच श्रुतिः —'अग्निर्वै देवानां होतासीदि'ति । तेन ह्यधिष्ठितो मानुषो होता हौत्रं कर्तुं शक्नोति, नानधिष्ठितः । क्रियाशब्दो होतृशब्दः । आह्वातारं च देवानाम् । कीदृशम् । विश्ववेदसम् । वेद इति धननाम, प्रज्ञानाम वा । सर्वधनं सर्वप्रज्ञं वा । कस्य होतारम् । अस्य प्रक्रान्तस्य यज्ञस्य । सुक्रतुं सुकर्माणं सुप्रज्ञं वा[1] । यत इत्थंभूतोऽग्निः तस्मै स्वाहेति वाक्यशेषः । अग्निमग्निम् । यावान् कश्चिदग्निः, तं सर्वमग्निम् । हवीमभिः आह्वानैः । सदा सर्वदा । हवन्त आह्वयन्ति, यष्टार इति शेषः । विश्पतिं मनुष्याणां स्वामिनम् । हव्यवाहं हविषां वोढारम् । पुरुप्रियं बहूनामिष्टम् । य इत्थम्भूतोऽग्निस्तस्मै स्वाहेति वाक्यशेषः ॥

'सपलाशयार्द्रशाखया पश्चादुपस्पृशेदमुष्मै त्वा जुष्टमुपाकरोमी'ति । वामदेवार्षं यजुरिदम् । पशुरभिधेया । पशुर्देवता वा । अमुष्मै त्वा जुष्टमिति पदत्रयं हविर्निर्वापमन्त्रेण व्याख्यातम्[2] । उपाकरोमि । उपाङ्पूर्वः करोतिरिहोपस्पर्शनार्थः । शाखयोपस्पृशामीत्यर्थः । प्रोक्षणमन्त्रोऽनेन व्याख्यातः । अन्यत्[3] सर्वं निगदसिद्धम् ॥

अथ चैत्ययज्ञमन्त्राः । 'यद्यु वै विदेशस्थं पलाशदूतेन यत्र वेत्थ वनस्पत इत्येतयर्चा द्वौ पिण्डौ कृत्वा वीवधेऽभ्यंाधाय दूताय प्रयच्छेत्' ।

यत्रवेत्थवनस्पतेदेवानांगुह्यानामानि ।

तत्रंहव्यानिगामय ॥

(अष्ट० ३. अध्या० ८. व० २१. ऋ० १०)

वसुश्रुत आत्रेय ऋषिः । गायत्री छन्दः । पलाशदूतो[4] देवता ।

---

१. 'वा स्वाहे' क. पाठः. २. 'नैव व्या' घ. पाठः. ३. 'त् नि' ग. पाठः.
४. 'शो दे' ख. ग. पाठः.

पलाशदूते च हविर्वहनाद्यग्निधर्मारोपो[1] द्रष्टव्यः । वनस्पतिशब्देनापि अग्निरेवो-च्यते । तथैव भगवतो यास्कस्य वचनं[2] —'को वनस्पतिर्यूप इति । कात्थक्यो-ऽग्निरिति शाकपूणिरि'ति । एतदपि वचो वनस्पतिशब्दवाच्यस्य देवान् प्रति हविर्वहनदर्शनादिति मन्तव्यम् । कस्मिन् मन्त्रे दर्शनमिति चेत् । 'वनस्पते रशनयानियूये'त्यस्मिन् । हे वनस्पते! भगवन्नग्ने! यत्र देशे । सप्तमीनिर्देशात् स्थितानामिति वाक्यशेषः । देवानां नामानि । कीदृशानि । गुह्या गुह्यानि गूढानि अवैदिकैरज्ञातानि यविष्ठो वृत्रहा पूषा अर्यमा अंश इत्यादीनि । वेत्थ जानासि । नामज्ञानेन चात्र नामवतामेव देवानां ज्ञानं लक्ष्यते । यत्र देशे स्थितान् देवान् जानासीत्यर्थः । तत्र देशे । हव्यानि हवींषि गमय प्रापय । तान् देवान् प्रति हविः प्रापयेत्यर्थः ॥

इमं तस्मै बलिं हरेति चैनं ब्रूयात् ।

वामदेवर्षो निगदोऽयम् । दूतोऽभिधेयः । हे दूत! इमं बलिं तस्मै चैत्याय देवाय । कस्मा इति चेत्, यो मया प्रार्थितोऽस्मिन् कामे प्राप्ते त्वामनेन हविषा यक्ष्य इति, तस्मै हर प्रापय गमय प्रयच्छेत्यर्थः ॥

अयं तुभ्यमिति यो दूताय ।

वामदेवार्षं यजुरिदम्[3] । दूत एवाभिधेयः । हे दूत! अयं पिण्डस्तुभ्य-मस्माभिः प्रदीयत इति वाक्यशेषः ॥

'नाव्या चेन्नद्यन्तरा प्लवरूपमपि किञ्चिदनेन तरितव्यमि'त्यनेन मन्त्रेण । वामदेवार्षं यजुः । दूत एवाभिधेयः । हे दूत! अनेन प्लवेन तरितव्यं नद्या उत्तरणं कर्तव्यं, भवतेति वाक्यशेषः ॥

अथ पुंसवनानवलोभनयोर्मन्त्रः —

किं पिबसि किं पिबसीति पृष्टा पुंसवनं पुंसवनमिति त्रिः प्रति-जानीयात् ।

एतद्यजुर्द्वयं प्रश्नप्रतिवचनरूपम् । वामदेवार्षम् । अन्तर्वत्नीदैवतः प्रश्नः । भर्तृदैवतः प्रतिवचनः । हे अन्तर्वत्नि! किं कस्यापादकं, स्त्रीत्वापादक-मुत पुंस्त्वापादकमिति प्रश्नार्थः । पिबसि । एतदुक्तं भवति—त्वया पीयमान-

१. 'र्मध्यारो', २. 'नं तद् को', ३. 'जुरिदम् । दू' ख. ग. पाठः

मिदं वस्तु गर्भस्य स्त्रीत्वकारणमाहोस्वित् पुंस्त्वकारणमिति । पुंसवनम् । पुमांसमनेन सूयत इति करणे ल्युट् । आहितस्य गर्भस्य पुंस्त्वापादकमित्यर्थः । पिबामीति वाक्यशेषः ॥

अथवास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति, प्रजावज्जीवपुत्राभ्यां हैके ।

आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिम् ।
आवीरोअत्रजायतांपुत्रस्तेदशमास्यः ॥

'आ ते गर्भ' इति पञ्चर्चमानुष्टुभं सूक्तं प्रजावान् प्राजापत्यो ददर्श । प्रथमाद्वितीये अन्तर्वत्नीदैवते । तृतीयायाः पूर्वार्धर्चोऽन्तर्वत्नीदैवतः, उत्तरस्तु वैश्वदेवः । चतुर्थ्यन्तर्वत्नीदैवत्या । पञ्चमी वायव्या । हे अन्तर्वत्नि! ते तव स्वभूतां योनिं गर्भाशयस्थानम् । गर्भः । कीदृशः । पुमान् भविष्यन् । आ एतु आगच्छतु प्रविशतु । किमिव । बाण इवेषुधिं, तद्वत् । यथा बाणः इषुधिम् । अत्र तव योनौ । सप्तमीनिर्देशात् प्रविष्ट इति वाक्यशेषः । गर्भो दशमास्यः । दशमासेषु त्वदुदरे परिवृद्धः सन् । जायतामुत्पद्यताम् । वीरः पुत्रः शत्रुनिरसनसमर्थः । स्वचोदितकर्मानुष्ठानदक्षो वा । अथवात्रेति सप्तमी पञ्चम्यर्थे । अस्मिन् पक्षे जायतामित्यनेन सम्बन्धोऽस्माद् योनेर्जायतामिति ॥

करोमितेप्राजापत्यमागर्भोयोनिमेतुते ।
अनूनःपूर्णोजायतामनन्धोऽश्रोणोऽपिशाचधीतः ॥

हे अन्तर्वत्नि ! ते तव मम च । प्रदर्शनार्थत्वात् तेग्रहणस्य आवयोरित्यर्थः । प्राजापत्यं प्रजायाः पातृत्वं करोमि । गर्भश्च तव योनिमा एतु प्रविशतु । प्रसववेलायां स गर्भोऽनूनः अन्यूनाङ्गः, पूर्णः अनतिरिक्ताङ्गश्चेत्यर्थः । जायतामुत्पद्यताम् । अनन्धः चक्षुरिन्द्रिययुक्तः । अश्रोणः श्रोणशब्दो बधिरपर्यायः । 'प्रान्धं श्रोणञ्चक्षस एतवेकृथः' इति यथा । अबधिरः समग्रश्रोत्रेन्द्रिय इत्यर्थः । अपिशाचधीतः । धीत इति 'धेट् पाने' इत्यस्य 'ध्यै चिन्तायामि'त्यस्य वा रूपम् । अपिशाचधीतः । पिशाचैः अधीतः अपीतः अभक्षितः अहिंसित इत्यर्थः । अथवा पिशाचैरचिन्तितोऽस्मृत इत्यर्थः ॥

पमांस्तेपुत्रोऽनादितंपुमाननुजायताम् ।
[१]तेभद्राणिबीजान्यृषभाजनयन्तिनः ॥

१. 'प्रान्धं श्रेण' क पाठः.

हे अन्तर्वत्नि! ते तव त्वचो वा पुमान् पुत्रः पुरुमनाः पुत्रः समाजायमानः। अनादि। नदतेः स्तुतिकर्मणश्चिण्प्रत्ययान्तमेतद्रूपम्। अस्तावि स्तूयतामित्यर्थः। तं च पुमांसं जायमानं पुमानेवानुजायताम्। किञ्च, यानि बीजानि शुक्लशोणितलक्षणानि भद्राणि भजनीयानि। भन्दनीयानि वा। यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। तानि बीजानि। ऋषभाः कामानां वर्षितारः प्रधाना वा। के ते। सामर्थ्याद् विश्वे देवाः। जनयन्ति। लोडर्थे लट्। जनयन्तु उत्पादयन्तु। नः 'अस्मदो द्वयोश्च' (१-२-५९) इति द्विवचनस्य स्थाने बहुवचनम्। आवयोः स्वभूतानीत्यर्थः॥

तानिभद्राणिबीजान्यृषभाजनयन्तिनो।
तैस्त्वंपुत्रान्विन्दस्वसाप्रसूर्धेनुकाभव॥

तानि। इह व्याख्यातोऽयमर्धर्चः पूर्वेण। अयं तु विशेषः— तैस्त्वमित्युत्तरार्धर्चे तच्छब्दश्रवणात् पूर्वार्धर्चे तानीति तच्छब्दो यच्छब्दार्थे। तानि भद्राणि। यानि भद्राणीत्यर्थः। पूर्वार्धर्चेन प्रार्थितस्यार्थस्यानुवादोऽयम्। तैरुक्तलक्षणैर्बीजैस्त्वं पुत्रान् विन्दस्व लभस्व। सा त्वं प्रसूः प्रकृष्टसूः प्रकृष्टापत्योत्पादिका भव। धेनुका च। 'धेट् पाने'। पानयोग्यस्तना च। बहुक्षीरा चेत्यर्थः। भव॥

कामः(स? प्र)मृध्यतांमह्यमपराजितमेवमे।
यंकामंकामयेदेवतंमेवायोसमर्धय॥

कामः पुत्रविषयाभिलाषः। प्रमृध्यताम्। मृधिः सङ्ग्रामार्थोऽन्यत्र। इह तु पूर्वसामर्थ्यात् संपत्त्यर्थः। सम्पद्यतामित्यर्थः। मह्यमपराजितमेव मे। भावे निष्ठा। एवशब्दश्चार्थे। शत्रुभिरपराजयश्च मे ममैव भवतु। हे वायो। भगवन्! देव! दानादिगुणयुक्त! (यं) कामं पुत्रपौत्रादिलक्षणं कर्मफलम्। कामये प्रार्थये। तं कामं समर्धय सम्पादय। आवाभ्यां देहीत्यभिप्रायः॥

अग्निरैतुप्रथमोदेवतानांसोऽस्यैप्रजांमुञ्चतुमृत्युपाशात्।
तदयंराजावरुणोऽनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात्॥

अग्निरैत्विति। पञ्चर्चमुत्तरं सूक्तम्। आङ्गिरसो जीवपुत्रोऽपश्यत्। प्रथमापञ्चम्यौ त्रिष्टुभौ। द्वितीया जगती। तृतीयातिजगती। चतुर्थ्यनुष्टुप्। प्रथमाग्निवारुणी। द्वितीयाचतुर्थ्यावाग्नेय्यौ। तृतीयापञ्चम्यावन्तर्वत्नीदेवत्ये।

१. 'यमानमित्य' ग. पाठः. २. 'चशब्दार्थे' ख. ग. पाठः.

अग्निरैतु आगच्छतु कर्माङ्गभावाय । कीदृशः । प्रथमो मुख्यः देवतानामिन्द्राद्यानाम् । एत्य च सोऽग्निः अस्यै अस्याः । षष्ठ्यर्थे चतुर्थी । अस्या अन्तर्वल्न्याः प्रजां पुत्रपौत्रादिलक्षणां मुञ्चतु मोचयतु । कुतः । मृत्युपाशाद् गर्भव्यसनलक्षणात् । यदिदं मया प्रार्थ्यते, तदयमपि राजा वरुणोऽनुमन्यताम् अनुजानातु । यथा चेयं स्त्री पौत्रमघं पुत्रनिमित्तमघं दुःखम्, प्रतीति वाक्यशेषः । न रोदात् न रोदिति, तथाच संपादयत्विति वाक्यशेषः ॥

**इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ।**
**अशून्योपस्थाजीवतामस्तुमातापौत्रमानन्दमभिप्रबुध्यतामियम् ॥**

इमामन्तर्वत्नीम् । अग्निस्त्रायतां रक्षतु गर्भानवलेभनेन । गार्हपत्यः । गृहा दाराः, पतिर्वरः, तत्संयोगनिमित्तेनैौपासनाग्निरित्यर्थः । किञ्च, प्रजामस्यै अस्याः नयतु गमयतु । दीर्घमायुः शतसंवत्सरलक्षणं जीवनम् । किञ्चाग्निप्रसादादेवेयमशून्योपस्थाँ अरिक्तोपस्था प्रजासंयुक्ता । का । जीवतामायुष्मतां मे पुत्राणां माता निर्मात्री उत्पादयित्री अस्तु भूयात् । किञ्चाग्निप्रसादादेव पौत्रं पुत्रनिमित्तमानन्दं हर्षम् अभिप्रमृध्यताम् । मृधिरत्र सामर्थ्याद् गत्यर्थः । आभिमुख्येन प्राप्नुयादित्यर्थः । इयं गर्भिणी स्त्री ॥

**मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदत्यःसंविशन्तु ।**
**मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यन्तीप्रजां सुमनस्यमाना ॥**

मा ते गृहे । हे अन्तर्वत्नि ! ते तव स्वभूते गृहे वेश्मनि । निशि मध्यरात्रे । घोषः शब्दो रोदनलक्षणः मा उत्थात् मोत्थिष्ठतु । रोदनध्वनिर्नोत्पद्यतामित्यर्थः । तथा रुदत्यो रोदनं कुर्वत्यः स्त्रियः त्वत् त्वत्तोऽन्यत्र त्वत्समीपाद् देशान्तर इत्यर्थः । संविशन्तु सह प्रविशन्तु । किञ्च त्वं त्वमपि विकेशी विमुक्तकेशी सती उरो भुजमध्यमात्मीय वक्ष इत्यर्थः । मावधिष्ठाः मावधीः । केशान् विकीर्योरस्ताडननिमित्तं दुःखं कदाचिदपि मा भूदित्यर्थः । अपरेऽपरथा पाठं कुर्वन्ति—'मा त्वं विकेशिनमावधीष्टे'ति । तस्मिन् पक्षे एवमर्थयोजना— विकेशिनम् । छान्दसः पुल्लिङ्गनिर्देशः । द्वितीया च प्रथमार्थे ।

१. 'त्रल' ख. ग. पाठः. २. 'त्त औपासनम्रि' ख. पाठः, ३. 'स्था प्र' क. पाठः.

हे अन्तर्वत्नि! ते तव त्वत्तो वा पुमान् पुत्रः पुरुमनाः पुत्रः समाजायमानः। अनादि। नदतेः स्तुतिकर्मणश्चिणुप्रत्ययान्तमेतद्रूपम्। अस्ताविस्तूयतामित्यर्थः। तं च पुमांसं जायमानं पुमानेवानुजायताम्। किञ्च, यानि बीजानि शुक्लशोणितलक्षणानि भद्राणि भजनीयानि। भन्दनीयानि वा। यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। तानि बीजानि। ऋषभाः कामानां वर्षितारः प्रधाना वा। के ते। सामर्थ्याद् विश्वे देवाः। जनयन्ति। लोडर्थे लट्। जनयन्तु उत्पादयन्तु। नः 'अस्मदो द्वयोश्च' (१-२-५९) इति द्विवचनस्य स्थाने बहुवचनम्। आवयोः स्वभूतानीत्यर्थः॥

तानिभद्राणिबीजान्यृषभाजनयन्तिनो।
तैस्त्वंपुत्रान्विन्दस्वसाप्रसूर्धेनुकाभव॥

तानि। इह व्याख्यातोऽयमर्धर्चः पूर्वेण। अयं तु विशेषः— तैस्त्वमित्युत्तरार्धर्चे तच्छब्दश्रवणात् पूर्वार्धर्चे तानीति तच्छब्दो यच्छब्दार्थे। तानि भद्राणि। यानि भद्राणीत्यर्थः। पूर्वार्धर्चेन प्रार्थितस्यार्थस्यानुवादोऽयम्। तैरुक्तलक्षणैर्बीजैस्त्वं पुत्रान् विन्दस्व लभस्व। सा त्वं प्रसूः प्रकृष्टसूः प्रकृष्टापत्योत्पादिका भव। धेनुका च। 'धेट् पाने'। पानयोग्यस्तना च। बहुक्षीरा चेत्यर्थः। भव॥

कामः(स ? प्र)मृध्यतांमह्यमपराजितमेवमे।
यंकामंकामयेदेवतंमेवायोसमर्धय॥

कामः पुत्रविषयाभिलाषः। प्रमृध्यताम्। मृधिः सङ्ग्रामार्थोऽन्यत्र। इह तु पूर्वसामर्थ्यात् संपत्त्यर्थः। सम्पद्यतामित्यर्थः। मह्यमपराजितमेव मे। भावे निष्ठा। एवशब्दश्चार्थे[2]। शत्रुभिरपराजयश्च मे ममैव भवतु। हे वायो। भगवन्! देव! दानादिगुणयुक्त! (यं) कामं पुत्रपौत्रादिलक्षणं कर्मफलम्। कामये प्रार्थये। तं कामं समर्धय सम्पादय। आवाभ्यां देहीत्यभिप्रायः॥

अग्निरैतुप्रथमोदेवतानांसोऽस्यैप्रजांमुञ्चतुमृत्युपाशात्।
तदयंराजावरुणोऽनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात्॥

अग्निरैत्विति। पञ्चर्चमुत्तरं सूक्तम्। आङ्गिरसो जीवपुत्रोऽपश्यत्। प्रथमापञ्चम्यौ त्रिष्टुभौ। द्वितीया जगती। तृतीयातिजगती। चतुर्थ्यनुष्टुप्। प्रथमाग्निवारुणी। द्वितीयाचतुर्थ्यावाग्नेय्यौ। तृतीयापञ्चम्यावन्तर्वत्नीदेवत्ये।

---

१. 'जमानमित्य' ग. पाठः. २. 'चशब्दार्थे' ख. ग. पाठः.

अग्निरैतु आगच्छतु कर्माङ्गभावाय । कीदृशः । प्रथमो मुख्यः देवतानामिन्द्राद्यानाम् । एत्य च सोऽग्निः अस्यै अस्याः । षष्ठ्यर्थे चतुर्थी । अस्या अन्तर्वत्न्याः प्रजां पुत्रपौत्रादिलक्षणां मुञ्चतु मोचयतु । कुतः । मृत्युपाशाद् गर्भव्यसनलक्षणात् । यदिदं मया प्रार्थ्यते, तदयमपि राजा वरुणोऽनुमन्यताम् अनुजानातु । यथा चेयं स्त्री पौत्रमघं पुत्रनिमित्तमघं दुःखम्, प्रतीति वाक्यशेषः । न रोदात् न रोदिति, तथाच संपादयत्विति वाक्यशेषः ॥

**इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ।**
**अशून्योपस्थाजीवतामस्तुमातापौत्रमानन्दमभिप्रबुध्यतामियम् ॥**

इमामन्तर्वत्नीम् । अग्निस्त्रायतां रक्षतु गर्भानवलोभनेन । गार्हपत्यः । गृहा दाराः, पतिर्वरः, तत्संयोगनिमित्तमौपासनाग्निरित्यर्थः । किञ्च, प्रजामस्यै अस्याः नयतु गमयतु । दीर्घमायुः शतसंवत्सरलक्षणं जीवनम् । किञ्चाग्निप्रसादादेवेयमशून्योपस्था[१] अरिक्तोपस्था प्रजासंयुक्ता । का । जीवतामायुष्मतां मे पुत्राणां माता निर्मात्री उत्पादयित्री अस्तु भूयात् । किञ्चाग्निप्रसादादेव पौत्रं पुत्रनिमित्तमानन्दं हर्षम् अभिप्रबुध्यताम् । बुधिरत्र सामर्थ्याद् गत्यर्थः । आभिमुख्येन प्राप्नुयादित्यर्थः । इयं गर्भिणी स्त्री ॥

**मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदत्यःसंविशन्तु ।**
**मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यन्तीप्रजां सुमनस्यमाना ॥**

मा ते गृहे । हे अन्तर्वत्नि ! ते तव स्वभूते गृहे वेश्मनि । निशि मध्यरात्रे । घोषः शब्दो रोदनलक्षणः मा उत्थात् मोत्थिष्ठतु । रोदनध्वनिर्नोत्पद्यतामित्यर्थः । तथा रुदत्यो रोदनं कुर्वत्यः स्त्रियः त्वत् त्वत्तोऽन्यत्र त्वत्समीपाद् देशान्तर इत्यर्थः । संविशन्तु सह प्रविशन्तु । किञ्च त्वं त्वमपि विकेशी विमुक्तकेशी सती उरो भुजमध्यमात्मीय वक्ष इत्यर्थः । मावधिष्ठाः मावधीः । केशान् विकीर्योरस्ताडननिमित्तं दुःखं कदाचिदपि मा भूदित्यर्थः । अपरेऽपरथा पाठं कुर्वन्ति—'मा त्वं विकेशिनमावधीष्ठे'ति । तस्मिन् पक्षे एवमर्थयोजना— विकेशिनम् । छान्दसः पुल्लिङ्गनिर्देशः । द्वितीया च प्रथमार्थे ।

---

१. 'त्रल' ख. ग. पाठः. २. 'त्त औपासनमि' ख. पाठः. ३. 'स्था प्र' क. पाठः.

क्रियाविशेषणं चैतत् । विकेशी मावधीष्ट । वचनव्यत्ययः । मावाधिष्ठा इत्यर्थः । अस्मिन् पक्ष उर इति वाक्यशेषः । आत्मानमिति वा । किञ्च जीवपत्नी । बहुव्रीहिसमासान्तमेतत् पदम् । जीवः पतिरस्याः सा जीवपत्नी । अथवा षष्ठी-समासान्तमेतत् । जीवतो मम पत्नी यज्ञसंयुक्ता । 'पत्युर्नो यज्ञसंयोगे' (४-१-३३) इति स्मृतेः । जीवता सता मया सार्धं यज्ञेऽधिकृता सतीत्यर्थः । पति-लोके । लोकशब्दः स्थानवचनः । पत्युर्मम गृह इत्यर्थः । विराज विविधं दी-प्यस्व । पश्यन्ती प्रजां पुत्रपौत्रादिलक्षणां, सुमनस्यमाना शोभनमनस्त्वमाचरन्ती कल्याणमनस्केत्यर्थः ॥

अप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघम् ।
शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुञ्चामिपाशम् ॥

अप्रजस्तामनपत्यत्वम् । पौत्रमृत्युं पुत्रस्येदं पौत्रं मृत्युं मरणं पुत्रनाश-मित्यर्थः । पाप्मानम् । पापं वाचिकं पापं, बुद्धिपूर्वं वा । उत वा । उतशब्दो-ऽप्यर्थे । वाशब्दश्चार्थे । अपिचाघं कायिकं पापं बुद्धिपूर्वं वा कृतम् । शीर्ष्णः शिरसः । स्रजमिव भुक्तपूर्वां मालामिव । उन्मुच्य आच्छिद्य द्विषद्भ्यः । तादर्थ्ये एषा चतुर्थी । तादर्थ्यं च नाशः । मशकेभ्यो धूम इति यथा । शत्रूणां नाशार्थमित्यर्थः । प्रतिमुञ्चामि प्रतिमोक्ष्यामि । पाशम् । 'पश बन्धन' इत्य-स्यैतद्रूपम् । पाशयतेर्वा । शत्रूणां बन्धकमित्यर्थः ॥

देवकृतंब्रह्मणंकल्पमानंतेनहन्मियोनिषदःपिशाचान् ।
क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमायुस्तवजीवन्तुपुत्राः ॥

देवकृतं देवार्थं कृतं देवतृप्त्यर्थं कृतमुपक्रान्तमित्यर्थः । ब्रह्मणम्[1] । बृहतेर्वृद्धिकर्मण एतद्रूपम्[2] । प्रवृद्धं, समग्रमित्यर्थः । कल्पमानम् । 'कृपू सामर्थ्ये' इत्यस्य कर्मणि छान्दसो यग्लोपो द्रष्टव्यः । कल्प्यमानं समर्थ्यमानं, सगुणमनुष्ठीयमानमित्यर्थः । किं तत् । सामर्थ्याद् यदिदमनवलोभनलक्षणं कर्म । तेनानेन कर्मणा हन्मि नाशयामि । योनिषदः योनौ गर्भाशये सीदन्तीति योनिषदः । तान् पिशाचान् गर्भध्वंसनकरान् कुमारग्रहान् । कीदृशान् । क्रव्यादो मांसादान् । मृत्यून् गर्भाणां मारयितॄन् । हत्वा अधरान् भूतले शयानान्, निर्वीर्यानित्यर्थः । पातयामि । एवं सगुणेऽस्मिन्

१ 'ब्रा' ख. पाठः, २. 'बृहस्पते' ख. ग. पाठः.

कर्मण्यनुष्ठिते हे अन्तर्वत्नि! दीर्घमायुः सुचिरं कालं शतसंवत्सरलक्षणम । तव पुत्रा आवयोः पुत्रा इत्यभिप्रायः । जीवन्तु प्राणान् धारयन्तु ॥

हृदयदेशमस्या आलभेत 'यत्ते सुसीम' इति ।

यत्तेसुसीमेहृदयेहितमन्तःप्रजापतौ ।
मन्येऽहंमांतद्विद्वांसंमाहंपौत्रमघंनियाम् ॥

वामदेवार्षम् । अनुष्टुप् छन्दः, अन्तर्वत्नीदेवता । हे अन्तर्वत्नि ! यत् ते तव । स्वभूते हृदये हृदयसमीपे कुक्षावित्यर्थः । कीदृशे । सुसीमे शोभनमर्यादे निर्व्यसन इत्यर्थः । हितं निहितं मया । किं तत् । साम-र्थ्याच्छुक्रम् । अन्तःप्रजापतौ । लुप्तोपममेतत् । प्रजापतिमध्य इव सुक्षेत्र इत्यर्थः । अथवान्तःशब्दो हृदय इत्यनेन समानाधिकरणः तेन शब्देन सम्ब-ध्यते । प्रजापतिशब्दश्च क्रियावचनपत्यभिधानो हितमित्यनेन सम्बध्यते । सप्तमी च तृतीयार्थे । कोऽर्थः । तवान्तर्हृदये सुसीमे मया प्रजानां पालयित्रा पत्या निहितं यच्छुक्रमिति । तच्छुक्रमहं मां विद्वांसमेव मन्ये, मदङ्गेभ्यः सम्भूतत्वात् । तथाच मन्त्रवर्णः 'अङ्गादङ्गात् सम्भवसी'ति । अतः पौत्रमघं पुत्रनिमित्तदुःखम् । अहं मा नियां मा गां मा प्राप्नुयामित्याशासे ॥

चतुर्थे गर्भमासे सीमन्तोन्नयनमिति प्रकृत्य समन्वारब्धायां 'धाता ददातु दाशुष' इति द्वाभ्याम् । जुहुयादित्यध्याहारः ।

धाताददातुदाशुषेप्राचींजीवातुमक्षिताम् ।
वयंदेवस्यधीमहिसुमतिंवाजिनीवतः ॥

धाता ददातु । वामदेवार्षम् । अनुष्टुप् छन्दः । धाता देवता । धाता मध्यस्थानो देवः ददातु । दाशुषे । व्यत्ययेनायं वर्तमाने क्वसुर्द्रष्टव्यः । हवींषि ददते यजमानाय मह्यम् । किं ददातु, प्राचीं प्रागभवित्रीं प्रवृद्धामित्यर्थः । कां पुनः ताम् । जीवातुं जीवनकर्म जीविकामित्यर्थः । कीदृशीम् । अक्षितां क्षयव-र्जितामविच्छिन्नामित्यर्थः । तस्मादेवं ब्रूमः—यस्माद् वयं देवस्य दानादिगुण-युक्तस्य तस्य धातुर्धीमहि ध्यायामः । ध्यानेनात्र तत्पूर्वकं करणं लक्ष्यते । कुर्म इत्यर्थः । किम् । सुमतिम् । मन्यतेरर्चतिकर्मत्वान्मतिः स्तुतिरिहाभिप्रेता । शोभनां स्तुतिम् । कीदृशस्य वाजिनीवतः । वाजो हविर्लक्षणम् । तद्वती वाजिनी यागसन्ततिः, तद्वान् वाजिनीवान्, तस्य[1] ॥

१. 'तः ॥ धाता' क. पाठः.

धाताप्रजानामुतरायईशेधातेदंविश्वंभुवनंजजान ।
धाताकृष्टीरनिमिषाभिचष्टेधात्रइद्धव्यंघृतवज्जुहोत ॥

धाता प्रजानाम् । वामदेवस्य । त्रिष्टुप् छन्दः । धाता देवता । अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यो धाता प्रजानाम् । प्रजायन्त इति प्रजा मनुष्यादिप्राणिनः इहाभिप्रेयन्ते । स्थावराणामप्युपलक्षणं प्रजाग्रहणं द्रष्टव्यम् । कृत्स्नस्य चराचरस्य जगत इत्यर्थः । उतेत्यप्यर्थे । रायः मम धनस्य च ईशे ईष्टे । धाता धातैव । इदं विश्वं सर्वं भुवनं जजान वृष्ट्याद्यनुप्रदानेन जनितवान् । धाता धातैव । कृष्टीः । कृष्टय इति मनुष्यनाम । मनुष्यादिप्राणिजातीः । अनिमिषा अनिमेषेण अनुपरमेण सततमित्यर्थः । अभिचष्टे अभिपश्यति, लोकपालत्वात् । तस्मै[1] धात्रे लोकपालाय । इत् पादपूरणः । हव्यं हविः । पुरोडाशलक्षणम् आज्यलक्षणं वा । घृतवत् । यदि पुरोडाशलक्षणम्, उपस्तरणाभिघारणे घृतेन । तद्वत् । अथाज्यलक्षणं, क्षरणवद्, विलीनमित्यर्थः । जुहोत । ऋत्विजामयं सम्प्रैषः पुरोडाशपक्षे । यद्याज्यं, पुरुषवचनलकारव्यत्ययः जुहोमीति ॥

राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ।
सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यम् ॥

(अष्ट० २. अध्या० ७. व० १५. ऋ० ४)

राकामहम् । आङ्गिरसो भार्गवो वा गृत्समद ऋषिः । जगती छन्दः । राका देवता । राकां मध्यस्थानां कालविशेषलक्षणाम् । अधिदेवतां वा । अहं गृत्समदः । सुहवां सुह्वानां शोभनस्तुतिकाम् । सुष्टुती । अत्र तृतीयैकवचनस्य पूर्वसवर्णः । सुष्टुत्या शोभनया स्तुत्या । हुवे । ह्वयतेर्लेटि आत्मनेपदोत्तमपुरुषैकवचने 'बहुलं छन्दसि' (६-१-३४) इति सम्प्रसारणे शपश्च लुकि कृते सत्येतद्रूपम्[2] । ह्वयामीत्यर्थः । सा चाहूयमाना शृणोतु, आह्वानमिति शेषः । नोऽस्माकं स्वभूतम् । कीदृशी । सुभगा सुधना । श्रुत्वा च बोधतु बुध्यताम् । त्मना आत्मनैव यदस्माकं कर्तव्यम् । किं पुनस्तदुच्यते । सीव्यतु सन्तनोतु । अपः । कर्मनामैतत् । प्रजोत्पत्तिलक्षणम् । सूच्या पुत्रपौत्रादिसन्ततिलक्षणया । अच्छिद्यमानया सन्ततया । ददातु वीरम् । वीरशब्दः पुत्रवचनः ।

१. 'स्मै धात्रे इत्' क. पाठः. २. 'ते एतद्' ख. ग. पाठः.

'धत्तं रयिं सहवीरमि'ति यथा । शूरं पुत्रम् । कीदृशम् । शतदायम् । शतमिति बहुनाम । बहूनां दातारमर्थिभ्य इत्यर्थः । उक्थ्यम् । प्रशस्यनामैतत् । प्रशस्यं वक्तव्यं प्रशस्यमित्यर्थः ॥

यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ।

ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणा ॥

(अष्ट० २. अध्या० ७. व० १५. ऋ० ५)

यास्ते राके । गार्त्समदीयम् । जगती (छन्दः) । राका देवता । हे राके ! यास्ते तव च स्वभूताः सुमतयः शोभनमतयः अनुग्रहात्मिका बुद्धयः । सुपेशसः । पेश इति रूपनाम । सुरूपाः । याभिः सुमतिभिर्ददासि प्रयच्छसि दाशुषे यजमानाय वसूनि धनानि । ताभिः सुमतिभिर्युक्ता त्वं नोऽस्मभ्यम् । सहस्रपोषम् । सहस्रमिति बहुनाम । पोषं पुष्यत्यनेनेति पुष्टिहेतुर्धनधान्यादिः । तं रराणा ददती दातुमित्यर्थः । अद्य इदानीमेव सुमनाः शोभनमनस्का । अस्मान् प्रति प्रीयमाणा सतीत्यर्थः । हे सुभगे ! शोभनधने ! । उपागहि अस्मत्समीपमागच्छ ॥

नेजमेषपरापतसुपुत्रःपुनरापत ।

अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान् ॥

उत्तरसूक्तं 'नेजमेषे'ति त्र्यृचमानुष्टुभं नैजमेषः प्रजापत्यो ददर्श । प्रथमा नेजमेषदेवत्या द्वितीयान्तर्वत्नीदेवत्या । तृतीया विष्णुदेवत्या । नेजमेष ! परापत भाविना पुत्रेण दुष्पुत्रश्चेत् मत्तः पराङ्मुखो गच्छ । अपसरेत्यर्थः । अथवा भाविना पुत्रेण सुपुत्रश्चेत् त्वं पुनरापत पुनः पुनर्मां प्रत्यागच्छ । सुपुत्रदानायागत्य अस्यै अन्तर्वत्न्यै मे मम पुत्रकामायै अपत्यार्थिन्यै गर्भमाधेहि आस्थापय यः पुमान् गर्भः तम् ॥

यथेयंपृथिवीमह्युत्तानागर्भमादधे ।

एवंत्वंगर्भमाधेहिदशमेमासिसूतवे ॥

यथेयं पृथिवी मही महती उत्ताना अनधोमुखी अतिर्यङ्मुखी वा समस्थला वृष्ट्युदकस्य सङ्ग्रहीत्री नावस्रावयित्री गर्भमोषधिवनस्पत्यादिलक्षणमादधे वर्षास्ववश्यमाधत्ते, एवं त्वं गर्भमवश्यमाधेहि आत्मनि धारय दशमे मासि सूतवे पुत्रमुत्पादयितुम् ॥



---

१. 'कैव दे' ख. ग. पाठः.

विष्णोश्रेष्ठेनरूपेणास्यांनार्यांकविन्याम् ।
पुमांसंपुत्रामधेहिदशमेमासिसूतवे ॥

हे विष्णो ! सकलजगद्व्याप्त ! वासुदेव ! । श्रेष्ठेनातिशयेन प्रशस्येन प्रधानेन रूपेणाकारेण । युक्तमिति शेषः । अस्यां नार्यां स्त्रियाम् । कविन्याम् । 'कमु कान्तावि'त्यस्य वर्णागमविपर्यासादिना कविनीशब्दो द्रष्टव्यः । कामिन्यां सन्दर्शनार्हायामृतुमत्यामित्यर्थः । पुमांसं पुत्रम् । पुमांसमिति पुत्रविशेषणम् । 'पुमान् पुरुमना भवति । पुंसतेर्वे'ति निर्वचनात् पुरुमनसं पुत्रमित्यर्थः । आधेहि आभिमुख्येन स्थापय । दशमे मासि सूतवे प्रसवे प्रसवकाल एवोत्पादयितुमित्यर्थः ॥

'प्रजापते नत्वदेतान्यन्य' इति च व्याख्यातैषा चतुर्थे खण्डे ।

अथास्यै युग्मेनेति प्रकृत्य सीमन्तं व्यूहति भूर्भुवः स्वरोमिति त्रिश्वतुर्वा ।

भूर्भुवः स्वरोम् ।

वामदेवार्षं यजुरिदम् । परमात्मा देवता । भूः । सर्वत्र भवतीति भूः । भुवः । सर्वं जगद् भावयतीति भुवः । सुष्ठु प्रेरयत्यन्तर्यामिरूपेणेति स्वः । ओं अनुज्ञाता सर्वस्य । अथवा ओतं प्रोतं जगद् यस्मिन् स ओम् । इत्थंभूतः परमात्मा, कर्म समर्धयत्विति वाक्यशेषः । अथवाग्निवायुसूर्यपरमात्मानो देवता॥

वीणागाथिनौ संशास्ति सोमं राजानं सङ्गायतामिति ।

निगदोऽयं वामदेवार्षः । वीणागाथिनावभिधेयौ । हे वीणागाथिनौ ! सोमं राजानं स्वामिनम् । केषाम् । ओषधीनाम् । कुत एतत् । 'सोम ओषधीनामधिपतिरि'ति मन्त्रवर्णात् । 'या ओषधीः सोमराज्ञीरि'ति च । सङ्गायतम् । सम् इत्येकीभावे, सह गायतं सम्यग् वा गायतमित्यर्थः ॥

तौ वोत्तरस्यामृचि गायतः—

सोमो नो राजावतु मानुषीः प्रजा निविष्टचक्रा असौ ॥

वामदेवार्षः । द्विपदं छन्दः । सोमो देवता । सोमो नो राजा अस्माकं स्वभूताः प्रजा मानुषीर्मनुष्यसम्बन्धिनीः । मनुष्यग्रहणं प्रदर्शनार्थं, मनुष्यादिप्रजा इत्यर्थः । निविष्टचक्राः । प्रजाविशेषणमेतत् । निविशतिरत्रान्तर्हितण्यर्थः । चक्रशब्दः समूहवचनः । ब्राह्मणचक्रं क्षत्रियचक्रमिति यथा ।



१. 'इमा काम्यकर्म', २. 'र्थम् । नि' ख. ग. पाठः.

नद्यास्तीरे निवेशितसमूहाः सङ्घीभूय निविष्टा इत्यर्थः । असौ । अदश्शब्दस्य स्थाने नदीति नाम प्रथमया निर्देष्टव्यम् । यां नदीं समाश्रिता अधिकारिणः । यथा गङ्गा कावेरी सरस्वती यमुनेति । अवत्वित्यनुषक्तव्यः । स्वतीरनिवासिनीः प्रजाः गङ्गा रक्षत्विति ॥

कुमारस्य जातकर्म । कुमारं जातं हिरण्येन प्राशयेत् 'प्र ते ददामी'त्यनेन ।

**प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् ।**
**आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन् ॥**

वामदेवार्षम् । त्रिष्टुप् । कुमारोऽभिधेयः । विश्वेदेवा वा । हे कुमार! ते तुभ्यं प्रददामि । किम् । मधुनो घृतस्य वा । उभयत्र द्वितीयार्थे षष्ठी । वाशब्दश्चार्थे । मधु च घृतं च । इदं रसद्वयं हिरण्यनिकाषयुक्तम् । सवित्राभ्यनुज्ञात्रा देवेन प्रसूतमभ्यनुज्ञातम् । मघोनाम् । निर्धारण एषा षष्ठी । बहुवचननिर्देशाच्च मघवदादयो देवाः सर्वे लक्ष्यन्ते । मघवदादीनां देवानां मध्ये सवित्रेति सम्बन्धः । त्वं चेदं प्राश्य आयुष्मान् । भूया इति वाक्यशेषः । कथम् । गुप्तो रक्षितः सन्[२] । देवताभिः सवित्राद्याभिः । शतं शरदः शत संवत्सरान् । जीव अस्मिन् लोके पार्थिवे लोक इत्यर्थः ॥

कर्णयोरुपनिधाय मेधाजननं जपति 'मेधां ते देवः सविते'ति ।

**मेधां ते देवः सविता मेधां देवी सरस्वती ।**
**मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥**

वामदेवस्यानुष्टुप् । वैश्वदेवी । मेधाम् । सकृच्छ्रुतग्रन्थधारणाशक्तिर्मेधेत्युच्यते, ताम् । हे कुमार ! ते तुभ्यं देवः सविता । आधत्तामित्युपरिष्टाच्छ्रूयमाणमाख्यातमेकवचनीभूतमत्रानुषक्तव्यम् । आदधातु । दधातिर्दानार्थः । आभिमुख्येन ददात्वित्यर्थः । मेधां मेधामेव देवी दानादिगुणयुक्ता सरस्वती वाचोऽधिष्ठात्री नदी वा । आदधात्वित्यनुषङ्गः । मेधमेधामेव ते तुभ्यमाधत्तामाभिमुख्येन दत्ताम् । कौ । अश्विनौ देवौ । कीदृशौ । पुष्करस्रजौ कमलग्रथितमालालङ्कृतौ ॥

अंसावभिमृशति—'अश्मा भव परशुर्भवे'ति ।

**अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।**
**वेदो वै पुत्रनामासि स जीव शरदः शतम् ॥**

---

१. 'प्र' ख. पाठ. २. 'के इत्यर्थः' क. पाठः.

वामदेवस्यानुष्टुप् । कुमारोऽभिधेयः । हे कुमार ! अश्मा भव । लुप्तोपममेतत् । अश्मेव भवात्यन्तदृढगात्रो भवेत्यर्थः । परशुर्भव । इदमपि लुप्तोपमम् । परशुरिव शत्रूणां छेत्ता भवेत्यर्थः । अथवा परशुशब्दः क्रियावचनः । परशब्दात् शदेश्च धातोश्छान्दसमेतद् रूपम् । परशब्दः शत्रुपर्यायः । शदिश्च शातनार्थः । शातनं च नाशनं, शत्रूणां नाशयितेत्यर्थः । किञ्च, हिरण्यम् । अस्तृतम् । 'स्तृ हिंसायाम् । अहिंसितं, लुप्तोपममेतत् । अहिंसितं हिरण्यमिवेति । हिरण्यसादृश्येनाविनाशित्वमाशास्यते । तथाच श्रूयते—'अमृतं वाज्यम् अमृतं हिरण्यमि'ति । हिरण्यमिवाविनाशी भवेत्यर्थः । अथवा हिरण्यास्तृतशब्दावपि क्रियाशब्दावेव । तथा सति लिङ्गव्यत्ययो द्रष्टव्यः । हिरण्यो[1] हितरमणो हृदयरमणो वा । अस्तृतोऽहिंसितः केनचिद् भवेति । किञ्च, वेदो वै । वैशब्दः पादपूरणः । वेद इति धननाम । विन्दतेर्लाभार्थस्यासुन्प्रत्ययान्तमेतद् रूपम् । पुत्रनाम । वेदोविशेषणमेतत् । पुत्र इति नाम यस्य तत् पुत्रनाम । तदसि मातापित्रोरैहिकामुष्मिकपुरुषार्थसाधनभूतं पुत्रसंज्ञधनमसि त्वमित्यर्थः । यस्त्वमीदृशोऽसि, स त्वं शरदः शतं जीव संवत्सरशतं जीवेत्यर्थः ॥

अंसाभिमर्शन एवोत्तरे अप्यृचौ ।

इन्द्र॒श्रेष्ठा॑नि॒द्रवि॑णानि॒धेहि॒चित्तिं॒दक्ष॑स्यसुभग॒त्वम॒स्मे ।
पोषं॑र॒यीणा॒मरि॑ष्टिंत॒नूनां॑स्वा॒द्मानं॑वा॒चःसु॑दिन॒त्वमह्ना॑म् ॥

(अष्ट० २. अध्या० ६. व० २८. ऋ० ३)

'इन्द्रश्रेष्ठानी'ति गृत्समदार्षम् । त्रिष्टुप् छन्दः । इन्द्रो देवता । हे इन्द्र ! श्रेष्ठानि अतिशयेन प्रशस्यानि । द्रविणानि[2] । धननामैतत् । धनानि । अस्मे अस्मासु धेहि स्थापय । अस्मभ्यं धनानि देहीत्यर्थः । किञ्च चित्तिम् । 'चिती संज्ञाने' । दक्षस्य । दक्षशब्दः परमात्मवचनः । 'दक्ष वृद्धावि'त्यस्य । 'श्रेयांसं दक्षं मनसा जगृभ्यादि'ति यथा । सर्वस्माद् वृद्धो ह्यसौ, जगतः कारणत्वात् । तद्विषयामवगतिम् । आत्मज्ञानमित्यर्थः । अस्मे धेहीत्यनुषङ्गः । सुभगत्वं कल्याणधनत्वं च धेहीति । किञ्च, पोषं रयीणां धनानामुपर्युपरि पुष्टिं च । अरिष्टिं तनूनाम् । बहुवचनं करचरणाद्यवयवापेक्षम् । अरिष्टिमरे-

---

१. 'णो वा' ख. ग. पाठः. २. 'नि धनानि' क. पाठः

षणमहिंसनमनाशनमित्यर्थः । तेन चारोग्यं लक्ष्यते । शरीरस्यारोग्यं च । स्वाद्मानं वाचः वाचः स्वादुत्वं, सुवाक्त्वमित्यर्थः । सुदिनत्वमह्नाम् । अहर्ग्रहणं रात्रेरपि प्रदर्शनार्थं द्रष्टव्यम् । अहोरात्राणां सुखत्वं च सर्वत्रास्मे धेहीति सम्बन्धः ॥

**अस्मेप्रयन्धिमघवन्नृजीषिन्निन्द्ररायोविश्ववारस्यभूरेः ।**

**अस्मेशतंशरदोजीवसेधाअस्मेवीराञ्छश्वतइन्द्रशिप्रिन् ॥**

(अष्ट० ३. अध्या० २. व० २०. ऋ० १०)

'अस्मे प्रयन्धि' घोरस्याङ्गिरसस्यार्षम् । त्रिष्टुप् । ऐन्द्री । हे इन्द्र ! मघवन् ! धनवन् ! ऋजीषिन् । यत् तत् पूयमानस्य सोमस्यातिरिच्यते तद् ऋजी-षम् । तद्वानृजीषी । तद्वत्ता चेन्द्रस्य तदीयो ह[2]यो भाग इति कृत्वा, ऋजीषैद-[3]क्षाहर्यश्चेत्यर्थः(?) । शिप्रिन् ! । शिप्रे हनू नासिके वा शिरःपट्टको वा । प्रशंसायां च मत्वर्थीयप्रत्ययः । प्रशस्तहनो ! प्रशस्तनासिक ! प्रशस्तशिरःपट्टक ! इति वा । अस्मे अस्मभ्यम् । प्रयन्धि प्रयच्छ । रायः धनस्य । विश्ववारस्य सर्वैर्वरणीयस्य । भूरेः । बहुनामैतत् । बहुनः, प्रभूतस्येत्यर्थः । षष्ठीश्रुतेरंशमिति वाक्यशेषः । किञ्च, अस्मे अस्मभ्यमेव । शतं शरदः शतं संवत्सरान् । धाः धेहि । शतसंवत्सरमायुष्यमस्मभ्यं देहीत्यभिप्रायः । किमर्थम् । जीवसे जीवितुं जीवनायेत्यर्थः । किञ्चास्मे अस्मभ्यमेव । वीरान् । वीरशब्दः पुत्रवचनः । 'धत्तं रयिं सहवीरं वचस्यवे' इति तैत्तिरीये दर्शनात् । पुत्रान् । शश्वतः । बहुनामैतत् । बहून् । दशसंख्यानित्यर्थः । तच्च दशत्वं 'दशास्यां पुत्रानाधेहि' इति पुत्रदशत्वदर्शनाल्लिङ्गात् ॥

प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति । प्रवासप्रसङ्गात् प्रवासादागतिनिमित्ता मन्त्रा व्याख्यायन्ते यथा सूत्रे—गृहानीक्षेताप्यनाहिताग्निः 'गृहा मा बिभीते'ति ।

**गृहामाबिभीतोपवस्वस्त्येवास्मासुचप्रजायध्वंमाचवोगोपतीरि-षत् ॥**

वामदेवार्षम् । प्रश्लिष्टपाठाद् यजुरिदम् । गायत्री यवमध्या वा । गृहा अभिधेयाः । हे गृहाः ! मा बिभीत भयं माकार्ष्ट । मद्वियोगजनितं

---

१. 'पी' ख. ग. पाठः २. 'यौ', ३. 'षं भक्षयं' क. पाठः. ४. 'त्यर्थः', ५. 'भीतोपवमिति' ख. ग. पाठः.

वामदेवस्यानुष्टुप् । कुमारोऽभिधेयः । हे कुमार! अश्मा भव । लुप्तोपममेतत् । अश्मेव भवात्यन्तदृढगात्रो भवेत्यर्थः । परशुर्भव । इदमपि लुप्तोपमम् । परशुरिव शत्रूणां छेत्ता भवेत्यर्थः । अथवा परशुशब्दः क्रियावचनः । परशब्दात् शदेश्च धातोश्छान्दसमेतद् रूपम् । परशब्दः शत्रुपर्यायः । शदिश्च शातनार्थः । शातनं च नाशनं, शत्रूणां नाशयितेत्यर्थः । किञ्च, हिरण्यम् । अस्तृतम् । 'स्तृ हिंसायाम् । अहिंसितं, लुप्तोपममेतत् । अहिंसितं हिरण्यमिवेति । हिरण्यसादृश्येनाविनाशित्वमाशास्यते । तथाच श्रूयते—'अमृतं वाज्यम् अमृतं हिरण्यमि'ति । हिरण्यमिवाविनाशी भवेत्यर्थः । अथवा हिरण्यास्तृतशब्दावपि क्रियाशब्दावेव । तथा सति लिङ्गव्यत्ययो द्रष्टव्यः । हिरण्यो[1] हितरमणो हृदयरमणो वा । अस्तृतोऽहिंसितः केनचिद् भवेति । किञ्च, वेदो वै । वैशब्दः पादपूरणः । वेद इति धननाम । विन्दतेर्लाभार्थस्यासुन्प्रत्ययान्तमेतद् रूपम् । पुत्रनाम । वेदोविशेषणमेतत् । पुत्र इति नाम यस्य तत् पुत्रनाम । तदसि मातापित्रोरैहिकामुष्मिकपुरुषार्थसाधनभूतं पुत्रसंज्ञधनमसि त्वमित्यर्थः । यस्त्वमीदृशोऽसि, स त्वं शरदः शतं जीव संवत्सरशतं जीवेत्यर्थः ॥

अंसाभिमर्शन एवोत्तरे अप्यृचौ ।

इन्द्र॒श्रेष्ठा॑नि॒ द्रवि॑णानि धेहि॒ चित्तिं॒ दक्ष॑स्य सुभग॒त्वम॒स्मे ।
पोषं॑ र॒यी॒णामरि॑ष्टिं त॒नूनां॑ स्वा॒द्मानं॑ वा॒चः सु॑दिन॒त्वमह्ना॑म् ॥

(अष्ट० २. अध्या० ६. व० २८. ऋ० १)

'इन्द्रश्रेष्ठानी'ति गृत्समदार्षम् । त्रिष्टुप् छन्दः । इन्द्रो देवता । हे इन्द्र! श्रेष्ठानि अतिशयेन प्रशस्यानि । द्रविणानि[2] । धननामैतत् । धनानि । अस्मे अस्मासु धेहि स्थापय । अस्मभ्यं धनानि देहीत्यर्थः । किञ्च चित्तिम् । 'चिती संज्ञाने' । दक्षस्य । दक्षशब्दः परमात्मवचनः । 'दक्ष वृद्धावि'त्यस्य । 'श्रेयांसं दक्षं मनसा जगृभ्यादि'ति यथा । सर्वस्माद् वृद्धो ह्यसौ, जगतः कारणत्वात् । तद्विषयामवगतिम् । आत्मज्ञानमित्यर्थः । अस्मे धेहीत्यनुषङ्गः । सुभगत्वं कल्याणधनत्वं च धेहीति । किञ्च, पोषं रयीणां धनानामुपर्युपरि पुष्टिं च । अरिष्टिं तनूनाम् । बहुवचनं करचरणाद्यवयवापेक्षम् । अरिष्टिमरे-

---

१. 'णो वा' ख. ग. पाठः. २. 'नि धनानि' क. पाठः.

षणमहिंसनमनाशनमित्यर्थः । तेन चारोग्यं लक्ष्यते । शरीरस्यारोग्यं च । स्वाद्मानं वाचः वाचः स्वादुत्वं, सुवाक्त्वमित्यर्थः । सुदिनत्वमह्नाम् । अहर्ग्रहणं रात्रेरपि प्रदर्शनार्थं द्रष्टव्यम् । अहोरात्राणां सुखत्वं च सर्वत्रास्मे धेहीति सम्बन्धः ॥

अस्मेप्रयन्धिमघवन्नृजीषिन्निन्द्ररायोविश्ववारस्यभूरेः ।

अस्मेशतंशरदोजीवसेधाअस्मेवीराञ्छश्वतइन्द्रशिप्रिन् ॥

(अष्ट० ३. अध्या० २. व० २०. ऋ० १०)

'अस्मे प्रयन्धि' घोरस्याङ्गिरसस्यार्षम् । त्रिष्टुप् । ऐन्द्री । हे इन्द्र ! मघवन् ! धनवन् ! ऋजीषिन् । यत् तत् पूयमानस्य सोमस्यातिरिच्यते तद् ऋजीषम् । तद्वानृजीषी । तद्वत्ता चेन्द्रस्य तदीयो हर्यो[२] भाग इति कृत्वा, ऋजीषैद-क्षाहर्यश्चेत्यर्थः(?) । शिप्रिन् ! । शिप्रे हनू नासिके वा शिरःपट्टको वा । प्रशंसायां च मत्वर्थीयप्रत्ययः । प्रशस्तहनो ! प्रशस्तनासिक ! प्रशस्तशिरःपट्टक ! इति वा । अस्मे अस्मभ्यम् । प्रयन्धि प्रयच्छ । रायः धनस्य । विश्ववारस्य सर्वैर्वरणीयस्य । भूरेः । बहुनामैतत् । बहुनः, प्रभूतस्येत्यर्थः । षष्ठीश्रुतेरंशमिति वाक्यशेषः । किञ्च, अस्मे अस्मभ्यमेव । शतं शरदः शतं संवत्सरान् । धाः धेहि । शतसंवत्सरमायुष्यमस्मभ्यं देहीत्यभिप्रायः । किमर्थम् । जीवसे जीवितुं जीवनायेत्यर्थः । किञ्चास्मे अस्मभ्यमेव । वीरान् । वीरशब्दः पुत्रवचनः । 'धत्तं रयिं सहवीरं वचस्यवे' इति तैत्तिरीये दर्शनात् । पुत्रान् । शश्वतः । बहुनामैतत् । बह्वन् । दशसंख्यानित्यर्थः । तच्च दशत्वं 'दशास्यां पुत्रानाधेहि' इति पुत्रदशत्वदर्शनाल्लिङ्गात् ॥

प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति । प्रवासप्रसङ्गात् प्रवासादागतिनिमित्ता मन्त्रा व्याख्यायन्ते यथा सूत्रे—गृहानीक्षेताप्यनाहिताग्निः 'गृहा मा बिभीते'ति ।

गृहामाबिभीतोपवस्वस्त्येवास्मासुचप्रजायध्वंमाचवोगोपतीरिषत् ॥

वामदेवार्षम् । प्रश्लिष्टपाठाद् यजुरिदम् । गायत्री वायवमध्या वा । गृहा अभिधेयाः । हे गृहाः ! मा बिभीत भयं माकार्ष्ट । मद्वियोगजनितं

१. 'पी' ख. ग. पाठः ३. 'र्यौ', २. 'षं भक्षयं' क. पाठः. ४. 'त्यर्थः', ५. 'भीतोपवामिति' ख. ग. पाठः.

भयं परित्यजतेत्यर्थः । उः पदपूरणः । पव । पवतिरत्र सामर्थ्यात् क्षरणार्थः । 'पवस्व सोमधारये'ति यथा । व्यत्ययेनैकवचनं बहुवचनस्य स्थाने द्रष्टव्यम् । णेर्लोपश्चात्र द्रष्टव्यः । पावयत क्षारयतेत्यर्थः। किम्। सामर्थ्याद् व्रीह्याद्युपभोगान् । स्वस्ति एव । एवकारश्चार्थः। अविनाशं च । अस्मासु । चकारः पदपूरणः, एवार्थे वा। चतुर्थ्यर्थे वा सप्तमीयम्। 'नमःस्वस्तिस्वाहा —'(२-३-१६) इति भगवतः पाणिनेः स्मरणात् । अस्मभ्यमेव । प्रजायध्वम् । जानरत्र सामर्थ्यादन्तर्णीतण्यर्थः[1] । जनयत, दत्तेत्यर्थः । किञ्च, वो युष्माकम् । प्रसादेनेति वाक्यशेषः । गोपतिः । गोग्रहणमत्र प्रदर्शनार्थम् । गोमहिषाजाविकादीनां पतिः सन्नहमित्यर्थः । मा च रिषत् । चशब्द एवार्थे । रिषतिर्हिंसाकर्मा । व्यत्ययेनायं प्रथमा उत्तमस्य स्थाने । मैव रिषं, युष्माकं प्रसादेनैव कामैर्न विनाशिषमित्यर्थः । अथवा गोपतिः सन् युष्मान् मा हिंसीत् ॥

गृहान् प्रपद्येत 'गृहानहं सुमनस' इति ।

गृहानहंसुमनसःप्रपद्येवीरघ्नोवीरवतःसुवीरान् ।
इरांवहतोघृतमुक्षमाणास्तेष्वहंसुमनाःसंविशानि ॥

वामदेवार्षं त्रिष्टुप् । गृहा एवाभिधेयाः । गृहानहं सुमनसः । गृहा एव सुमनस इत्युच्यन्ते । तात्स्थ्यादत्र ताच्छब्द्यम् । मञ्चक्रोशनवत् । कल्याणमनस्कप्राणिभिरधिष्ठितान् गृहानित्यर्थः । प्रपद्ये प्रविशामि । किंविशिष्टान् । अवीरघ्नः । वीरशब्दः पुत्रवचनः । तद्ग्रहणं च प्रदर्शनार्थम् । पुत्रादीनामहन्तॄनित्यर्थः ।वीरवत उत्पाद्यैस्तद्वतः । पुत्राणामुत्पादयितॄनित्यर्थः । सुवीरान् । वीरशब्दोऽयं दासभृत्यादिपरिचारकवचनः । शोभनदासभृत्यादिपरिचारकमनुष्योपेतानित्यर्थः । किञ्च, इरां वहतः । इरेत्यन्ननाम । सर्वप्रकारमन्नं बिभ्रतः । नानाविधान्नोपेतानित्यर्थः । किञ्च, घृतमुक्षमाणाः । घृतग्रहणं प्रदर्शनार्थम् । प्रथमा द्वितीयार्थे । 'उक्ष सेचने' । घृतदधिक्षीरतक्रादि सिञ्चतः क्षरतः । क्षरणेन चात्र तेषां प्राभूत्यमभिप्रेतम् । प्रभूतघृतानित्यर्थः । प्रपद्य च तेषु गृहेषु अहं सुमनाः कल्याणचित्तः । संविशानि, संवेशनमुपवेशनं, सुखमुपविशानि सुखमास इत्याशास इत्यर्थः ॥

---

१. 'र्थः । किञ्च' ख. ग. पाठः.

गृहानुवीक्षणमन्त्रः[1] —

**शिवं शग्मं शंयोः शंयोरिति त्रिरन्वीक्षमाणः ।**

वामदेवार्षं यजुः[2] । गृहा एवाभिधेयाः । शिवं शग्मम् । द्वे अप्येते सुखनामनी । 'अभ्यासे भूयांसमर्थं मन्यन्त' इति यास्कवचनात् सुखभूयस्त्वं प्रतिपाद्यते द्वाभ्याम्[3] । अत्यन्तं सुखमित्यर्थः । गृहाः प्रयच्छन्त्विति वाक्यशेषः । अथवा कालभेदेन पौनरुक्त्यम् । ऐहिकं सुखमामुष्मिकं चेत्यर्थः । शंयोः शंयोः । रोगादीनामुत्पन्नानां शमनं शम् । उत्पित्सूनां भयादीनां रोगादीनां यापनं पृथग्भावनं योः । यौतेः पृथग्भावार्थत्वात् । अभ्यासस्य पूर्ववत् प्रयोजनं द्रष्टव्यम् । गृहाः प्रयच्छन्त्विति पूर्ववद् वाक्यशेषः । गृहाणां प्रसादादस्त्विति । अथवा शंयोरिति प्रथमं षष्ठ्यन्तमधिकारिविशेषणम् । शं सुखम् इच्छतीति शंयुः । तस्य शंयोः सुखकामस्य मम शंयोश्च स्यातामिति । अथ प्रकृतमनुसरामः ॥

प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति 'अङ्गादङ्गात् सम्भवसी'ति[6] मूर्धनि त्रिरवघ्राय ।

**अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे ।**
**आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥**

वामदेवस्यानुष्टुप् । कुमारोऽभिधेयः । स जीव शरदः शतमिति उत्तरस्मिन्नर्धर्चे तच्छब्दश्रवणात् पूर्वस्मिन्नर्धर्चे यच्छब्दोऽध्याहार्यः । हे कुमार ! यस्त्वमङ्गादङ्गात् । सर्वाङ्गपरिमहार्थं वीप्सावचनम् । सर्वेभ्योऽङ्गेभ्य इत्यर्थः । सम्भवसि शुक्रशोणितरूपेणोत्पद्यसे । हृदयादधि । अधिशब्दः पादपूरणः । चार्थे वा[7] । हृदयाच्च, हृत्स्थाद् बुद्धितत्त्वाबित्यर्थः । जायसे प्रादुर्भवसि । एवं ब्रुवन् कारणस्य बोधस्य कार्येऽनुवृत्तिं दर्शयति । य एवम्, अत आत्मा वै अहमेव पुत्रनामासि[8] भवसि । स त्वं जीव शरदः शतं संवत्सरशतमित्यर्थः ॥

षष्ठे मास्यन्नप्राशनम् । दधिमधुघृतमिश्राणां प्राशयेद् 'अन्नपतेऽन्नस्य नो देही'ति ।

**अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।**
**प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥**

---

१. 'न्त्रः । वाम' क. पाठः. २. 'जुरिदम् । गृ', ३. 'मभ्यस्तं सु' ख. ग. पाठः. ४. 'उत्पन्नानां', ५. 'षः । अथवा' ख ग. पाठः. ६. 'त् । वाम', ७. 'वा । हृत्स्थात्', ८. 'सि हृदयाच्च भ' क. पाठः.

वामदेवार्षम् । उपरिष्टाद् बृहती । अग्निर्देवता । अन्नपतिशब्दस्याग्न्यभिधानत्वात् । कुत एतत् । 'अन्नादो वा एषोऽन्नपतिर्यदग्निरि'ति श्रुतेः । हे अग्ने! अन्नपते! अन्नस्वामिन्! । अन्नस्य । द्वितीयार्थे षष्ठी । अन्नम् । नोऽस्मभ्यं देहि । कीदृशमन्नम् । अनमीवस्य । अत्रापि द्वितीयार्थे षष्ठी । अनमीवमरोगं, रोगस्यानुत्पादकमित्यर्थः । शुष्मिणः । शुष्म इति बलनाम । तद्वच्छुष्मि । बलकरमित्यर्थः । किञ्च, प्रदातारन् अन्नस्य प्रदातृभूतं माम् । मतारिषः । प्रपूर्वस्तरतिर्वृद्ध्यर्थः । प्रवर्धय । ऊर्जं रसं रसभूतमन्नं नोऽस्माकं स्वभूताय द्विपदे पुत्रपौत्रादिमनुष्याय चतुष्पदे गवादिकाय च धेहि देहीति ॥

तृतीये वर्षे चौलं यथाकुलधर्मं वेति । तत्र शीतोष्णा अपः समानीय ।

'उष्णेन वायवुदकेनेही'ति ॥

वामदेवार्षं यजुः । वायुर्देवता । हे वायो! उष्णेनोदकेन शीतेन च । सहयोगलक्षणा तृतीयैषा । शीतोष्णाभिरद्भिः सहेहि आगच्छ । उष्णाभिरद्भिः शीता अपः संसर्जयन्नागच्छेरत्यभिप्रायः ॥

प्रदक्षिणं शिरस्त्रिरुन्दति —

'अदितिः केशान् वपत्वाप उन्दन्तु वर्चसे' इति ।

वामदेवार्षी द्विपदेयं षोडशाक्षरा । अदितिरापश्च देवता । अदितिर्मध्यमस्थाना देवमाता वा । केशान् वपतु । वपिरत्रान्तर्णीतण्यर्थः । वापयतु । केशवपनमनुगृह्णात्वित्यर्थः । आपश्चेमाः संसृष्टा उन्दन्तु शिरः क्लेदयन्त्वित्यर्थः । किमर्थम् । वर्चसे दीप्तये । दीप्त्यर्थं प्रजाया इत्यर्थः ॥

कुशपिञ्जूलनिधाने मन्त्रः —

'ओषधे! त्रायस्वैनमि'ति ।

वामदेवार्षं यजुः । कुशपिञ्जूला ओषधिर्देवता । हे ओषधे! कुशपिञ्जूलात्मिके! त्रायस्व रक्षैनं[1] कुमारम् ॥

क्षुरसंयोजनमन्त्रः —

'स्वधिते मैनं हिंसीरि'ति ।

वामदेवार्षं यजुः । क्षुरदेवत्यम् । हे स्वधिते! । स्वधितिशब्द आयुधवचनोऽन्यत्र । इह तु छेदनसाधनत्वसामान्यात् क्षुरे वर्तते । हे क्षुर! एनं

१. 'क्षस्वैनं' ख. ग. पाठः.

कुमारम् । मा हिंसीरिति । तीक्ष्णत्वात् क्षुरस्य तत्स्पर्शने हिंसा प्राप्नोतीति तदभाव आशास्यते ॥

केशप्रच्छेदनमन्त्रः —

**येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।**
**तेन ब्रह्माणो वपतेदमस्यायुष्मान् जरदष्टिर्यथासत् ॥**

'येनावपत् सविता क्षुरेणे'ति वामदेवार्षम् । त्रिष्टुप् । सदस्या ब्राह्मणा अभिधेयाः । येन क्षुरेणावपत उप्तवान् छिन्नवानित्यर्थः । सविता आदित्यः । सोमस्य राज्ञः वरुणस्य च । केशानिति शेषः । राजसूयादिषु क्रतुषु । किंविशिष्टः । विद्वान् जानन् । किम् । सामर्थ्यात् स्वमधिकारं, लोकपालत्वात् शुभाशुभं वा प्राणिनाम् । तेन क्षुरेण । हे ब्रह्माणो ब्राह्मणाः! सदस्याः! । वपत । वपिरत्रान्तर्णीतण्यर्थः । वापयत । क्रियमाणं वपनमनुज्ञापयतेत्यर्थः । इदं शिरः । तात्स्थ्यादत्र ताच्छब्द्यम् । शिरःस्थानिमान् केशानित्यर्थः । अस्य कुमारस्य । कथं वापयामः । उच्यते । आयुष्मान् वर्षशतं जीवी । जरदष्टिः । जरा जीर्यते (इति) वार्धक्यमिहाभिप्रेतम् । अष्टिरिति 'अशू व्याप्तावि'त्यस्य कर्तरि क्तिन्प्रत्यये रूपम् । जराया अष्टिर्जरदष्टिः, जराया व्याप्तेत्यर्थः । यथा असद् भवेत् । एतदुक्तं भवति —अयं कुमारो मयोप्यमानकेशो वृद्धवयाः शतसंवत्सरजीवी यथा स्यात्, तथा वापयतानुजानीत हे ब्राह्मणाः! इति । तथाच प्रसिद्धिरायुष्यकर्मेति ॥

द्वितीयप्रच्छेदनमन्त्रः —

**येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् ।**
**तेन ते आयुषे वपामि सुश्लोक्याय स्वस्तये ॥**

'येन धाता बृहस्पतेरि'ति वामदेवार्षम् । अनुष्टुप् । कुमारोऽभिधेयः । येन क्षुरेण । धाता नामादित्यानामन्यतमः । बृहस्पतेरिन्द्रस्य च । केशानिति शेषः । आयुषे चिरजीवित्वाय । अवपद् उप्तवान् । तेनैव क्षुरेण हे कुमार! ते तव । केशानिति शेषः । वपामीति । किमर्थम् । आयुषे वर्षशतजीवनाय । सुश्लोक्याय । श्लोक इति वाङ्नाम । शोभनश्लोकः सुश्लोकः । तद्भावः सुश्लोक्यम् । किं तत् । सामर्थ्याद् यशः । यशसे च । स्वस्त्येऽनुग्रहाय च ॥

---

१. 'न्म', २. 'षे अविनाशाय च' क. पाठः.

तृतीयप्रच्छेदनमन्त्रः —

येन भूयश्च रात्र्यां ज्योक् च पश्याति सूर्यम् ।
तेन ते आयुषे वपामि सुश्लोक्याय स्वस्तये ॥

'येन भूयश्चे'ति वामदेवार्षम् । अनुष्टुप् । कुमारोऽभिधेयः । येन क्षुरेण । उप्यमान इति शेषः । भूयः । वीप्सालोपो द्रष्टव्यः । भूयोभूय इत्यर्थः । चकारो रात्र्यामित्यस्मात् परो द्रष्टव्यः । स च समुच्चयार्थः । रात्र्यां च पश्याति । लडर्थः पञ्चमो लकारः । पश्यति । किम् । सामर्थ्यान्नक्षत्रादीनि ज्योतींषि । रात्र्यामिति व(च)नादहनि चेत्यध्याहारः । अहनि च । ज्योक् । चिरपर्यायोऽयम् । सुचिरं कालं सूर्यं पश्यति । एतदुक्तं भवति — येन क्षुरेणोप्यमानकेशो दीर्घकालं रात्र्यां नक्षत्रादीनि ज्योतींषि पश्यति, अहनि च सूर्यमिति । एतेन।विकलेन्द्रियबहुत्वापादकतया क्षुरस्तुतिरुच्यते । तेन त इत्यादिरुक्तार्थः ॥

क्षुरतेजो निमृजेद् 'यत् क्षुरेणे'ति ।

यत् क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् ।
शुन्धि शिरो मास्यायुः प्रमोषीः ॥

ऋषिः वामदेवः । दर्शिनीविराट् छन्दः । क्षुरधाराभिधेया । यत् यदा क्षुरेण त्वया । मर्चयता । अपठितोऽपि सामर्थ्यान्मर्चयतिर्वधकर्मा द्रष्टव्यः । 'यो नो अग्ने अररिवा अघायुररातीवा मर्चयति द्वयेने'ति यथा । तीक्ष्णत्वाद् वधहेतुभूतेन । सुपेशसा । पेश इति रूपनाम । सुरूपेण कर्मारपरिमार्जितेनेत्यर्थः । वप्ता नापितः । वपसि । प्रथमपुरुषस्य स्थाने मध्यमपुरुषः । वपति । केशान् । यदेति वचनात् तदेत्यध्याहार्यम् । तदा । शुन्धि शोधय । निष्केशं कुर्वित्यर्थः । शिरः अस्य कुमारस्य । आयुर्जीवितं मा प्रमोषीः मा हार्षीरित्यर्थः । तीक्ष्णत्वादायुषः प्रमोषशङ्कया तदभावः प्रार्थ्यते ॥

नापितं शिष्याच्छीतोष्णाभि[3]रद्भिरिति ।

शीतोष्णाभिरद्भिरवर्थ कुर्वाणोऽक्षण्वन् कुशली केशान् कुरु ।

वामदेवार्षं यजुः । नापितोऽभिधेयः । हे नापित ! शीतोष्णाभिरद्भिः शीताभिरुष्णाभि[4]श्च संसृष्टाभिरित्यर्थः । अवर्थमुदकप्रयोजनमुन्दनादि कुर्वाणः

---

१. 'मेकार', २. 'मः । व', ३. 'भिरिति', ४. भिः स्पृष्टाभिरित्यर्थः ।' ख. ग. पाठः.

कुर्वन् । अक्षण्वन् । 'क्षणु हिंसायाम्' । अहिंसन्, क्षतमकुर्वन्नित्यर्थः । कुशलीकुरु । कुशलीकरणं नाम वपनम् । 'कुशलीकृतशिरसमि'ति लिङ्गात् । केशान् वपेत्यर्थः ॥

गोदानमन्त्रा नि गदंसिद्धा व्याख्याताश्च ॥

अथेदानीं क्रमप्राप्ता उपनयनमन्त्रा व्याख्यायन्ते । तत्र माणवकस्याञ्जल्यवक्षारण-मन्त्रः —

**तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।**
**श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥**

'तत्सवितुर्वृणीमह' इति । श्यावाश्व आत्रेय ऋषिः । अनुष्टुप् छन्दः । सविता देवता । यदुदकं सर्वाणि भूतानि उपजीवन्ति, तत् सवितुः सम्बन्धि । तन्मण्डल आहितमित्यभिप्रायः । कीदृशम् । भोजनम् । अन्ननामैतत् । तत्कारणत्वात् तद्व्यपदेशः । अन्नकारणम् । श्रेष्ठमतिशयेन प्रशस्यम् । सर्वधातमं सर्वेषां भूतानामतिशयेन धारयितृतमम् । तुरम् । तुर्वतेर्हिंसार्थस्यैतद् रूपम् । तुर्वितृ हिंसितृ । व्याध्यादीनां नाशकरमित्यर्थः । कीदृशस्य सवितुः । देवस्य दानादिगुणयुक्तस्य । भगस्य भजनीयस्य, सर्वैः प्राणिभिः सेव्यस्य । वयम् । वृणीमहे । 'वृङ् सम्भक्तौ' । सम्भजामहे । सम्भजनं चात्र पृथिव्या सम्बन्धः । पृथिव्या सम्बन्धयामः, पृथिव्यामवक्षारयाम इत्यर्थः । अवक्षार्य, धीमहि । 'ध्यै चिन्तायाम्' । चिन्तयामः । किम् । सामर्थ्यान्माणवकनिःश्रेयसम् ॥

हस्तग्रहणमन्त्रः —

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ ।**

'देवस्य त्वे'ति । वामदेवस्य यजुः । माणवकोऽभिधेयः । हे माणवक ! देवस्य दानादिगुणयुक्तस्य सवितुरादित्यस्य । प्रसवेऽभ्यनुज्ञाते सति, सवित्राभ्यनुज्ञातोऽहमित्यर्थः । त्वा । षष्ठ्यर्थ एषा द्वितीया । तव स्वभूतं हस्तं गृह्णामि । केन । उच्यते । अश्विनोर्बाहुभ्याम् । बाहुशब्देनात्र तत्संबद्धौ हस्तौ लक्ष्येते । हस्ताभ्याम् । नच केवलाभ्यां, किं तर्हि । पूष्णो हस्ताभ्यां नतु मदीयाभ्याम् । एतदुक्तं भवति — हस्तग्रहणवेलायामाचार्येणात्मन्याश्विपूषाध्यारोपः कर्तव्य

---

१. 'दध्या', २. 'त्यर्थः ।', ३. 'कमि' ख. ग. पाठः. ४. 'मक्ष्यायुर्धी' क. पाठः. ५. 'मः । सा', ६. 'यहस्ताभ्यां' ख. ग. पाठः.

इति । असौ । सर्वत्रादःप्रयोगे नामग्रहणं वेदितव्यम् । इह तु सामर्थ्यात् सम्बुद्धयन्तं द्रष्टव्यम् । यथा हे चक्रपाणे! इति ॥

हस्तग्रहणे द्वितीयो मन्त्रः —

**सविता ते हस्तमग्रभीदसौ ।**

'सविता त' इति । वामदेवार्षं यजुः । माणवको[1]ऽभिधेयः । हे माणवक! ते तव हस्तं सवितादित्योऽग्रभीत् अग्रहीत् । लडर्थे लुङ् । गृह्णाति । नाहम् । एतदुक्तं भवति — अत्रापि पूर्ववदाचार्येण सवित्रध्यारोपः कर्तव्य इति । असौ देवदत्तः ॥

हस्तग्रहणे तृतीयो मन्त्रः —

**अग्निराचार्यस्तवासौ ।**

'अग्निराचार्य' इति[2] । पूर्ववदृष्यादयः । हे माणवक! अग्निराचार्यस्तव, नाहम् । पूर्ववदध्यारोपः । हस्तं गृह्णामीति वाक्यशेषः[3] । असौ यज्ञदत्तः ॥

आदित्यमीक्षयेद् 'देव सवितरि'ति —

**देव सवितरेष ते ब्रह्मचारी तं गोपाय स मा मृत ।**

वामदेवः । यजुः । द्विपदा वा । सविता देवता । हे देव! दानादिगुणयुक्त! सवितः! सर्वस्य प्रसवितः आदित्य! एष ब्रह्मचारी ते तव स्वभूतः । त्वमेवास्याचार्यो नाहमित्यर्थः । अतस्तमिमं गोपाय रक्षस्व । स च त्वया रक्ष्यमाणः मा मृत मा म्रियेत, मा विनङ्क्षीदित्यर्थः ॥

परिदानमन्त्रः —

**कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामि ।**

'कस्य ब्रह्मचार्यसी'ति । वामदेवार्षम् । माणवकोऽभिधेयः । हे माणवक! कस्य प्रजापतेः । ब्रह्मचारी । ब्रह्मचारिशब्देन प्रथमाश्रमोऽभिधीयते । सोऽसि । किंविशिष्टस्य प्रजापतेः । प्राणस्य कृत्स्नस्य जगतः प्राणभूतस्य । तथाच भगवान् यास्कः — 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति । कः । कशब्द

---

१. 'क एवाभि' ख. पाठः. २. 'ति वामदेवार्षम् । माणवक एवाभिधेयः हे', ३. 'षः आ' ख. ग. पाठः.

एकः प्रजापतेरभिधानार्थः । अपरस्तु तद्विशेषणार्थः । कथं विशिनष्टि । कमिति सुखनाम । निरतिशयसुखः प्रजापतिरित्यर्थः । त्वा त्वामुपनयते आचार्यकुलं प्रापयति, नाहम् । प्रजापत्यध्यारोपार्थमिदं वचनम् । किञ्च काय त्वा प्रजापतये त्वा त्वां परिददामि । परिदानं नाम रक्षणार्थं दानम् । त्वां प्रजापतये ददामीत्यर्थः ॥

'युवा सुवासाः परिवीत आगादि'त्यर्धर्चेनैनं प्रदक्षिणमावर्तयेत् ।

युवा॑सु॒वासा॒ःपरि॑वीत॒आगा॒त्सउ॒श्रेया॑न्भवति॒जाय॑मानः ॥

विश्वामित्रस्य त्रिष्टुप् । माणवकोऽभिधेयः । स उ श्रेयानिति तच्छब्दश्रवणाद् यच्छब्दोऽध्याहार्यः । यो माणवको युवा । 'यु मिश्रणे' । मिश्रणमनुष्ठानम् । अनुष्ठातेत्यर्थः । केषाम् । सामर्थ्याद् ब्रह्मचारिधर्माणां समिदाधानभिक्षाचर्यादीनाम् । सुवासाः शोभनवासाः शुद्धवस्त्र इत्यर्थः । परिवीतः परिवेष्टितः । केन । सामर्थ्यात् कृष्णाजिनादिना । आगात् आगच्छति, प्राप्नोति । ब्रह्मचर्यमिति शेषः । उशब्दः पदपूरणः । सोऽयं माणवकः श्रेयान् श्रेष्ठो विद्यया भवति । लोडर्थे लट् । भवतु । जायमानो ब्रह्मचारित्वेनोत्पद्यमानः । तथाच स्मर्यते — 'तेषां मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धनम्' इति ॥

तस्याध्यंसौ पाणी हृत्वा हृदयदेशमालभेतोत्तरेण ।

तंधीरा॑सःक॒वय॒उन्न॑यन्ति॒स्वा॒ध्यो॑३मन॑सादे॒वय॑न्तः ।

(अष्ट० ३. अध्या० १. व० ३. ऋ० ४)

तं प्रकृतं माणवकं, धीरासः । धीरिति प्रज्ञानाम । रो मत्वर्थीयः । प्रज्ञावन्तः । कवयः । मेधाविनामैतत् । मेधाविनः तत्त्वदर्शिनः । उन्नयन्ति लोडर्थे लट् । ऊर्ध्वं नयन्तु उत्कृष्टतां गमयन्त्वित्यर्थः । किंविशिष्टाः कवयः । स्वाध्यः शोभनाध्यानाः । कल्याणचित्ता इत्यर्थः । मनसा, देवयन्तो देवान् यष्टुमिच्छन्तः । श्रौतस्मार्तकर्मनिरतमानसा इत्यर्थः ॥

अथ समिदाधानमन्त्रः —

अग्नये समिधमाहार्षं बृहते जातवेदसे ।
तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहा ॥

'अग्नये समिधमाहार्षमि'ति । वामदेवार्षम् । सुरिगनुष्टुप् छन्दः ।



१. 'मि रक्षणार्थं त्वां प्र' ख. ग. पाठः. २. 'धमिति', ३ 'पृ अ' क. पाठः.

अग्निर्देवता । अग्नये यां समिधमाहार्षमाहृतवानस्मि । आहरामि वा । किंविशिष्टायाग्नये । बृहते महते जातवेदसे जातप्रज्ञानाय, जातधनाय वा । तया समिधा त्वं हे अग्ने! वर्धस्व ब्रह्मणा वेदेन वयं, वर्धिषीमहीति वाक्यशेषः । स्वाहा इति प्रदानार्थः ॥

अग्निमुपस्पृश्य मुखं निमार्ष्टि त्रि'स्तेजसा मा समनज्मी'ति ।

**तेजसा मा समनज्मि ।**

वामदेवार्षं यजुः । अनादिष्टदेवतत्वादग्निर्देवता । तेजसाग्नेः[2] स्वभूतेन तेजसा मा मां, समनज्मि । अञ्जिर्गत्यर्थोऽन्तर्णीतण्यर्थः । सङ्गमयामि संयोजयामि । अग्नेः प्रसादात् तदीयेन तेजसा मामपि तेजस्विनं करोमीत्यर्थः ॥

मयि मेधामित्यादयः षडग्न्युपस्थानमन्त्राः ।

**मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । यत् ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् । यत् ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् । यत् ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ।**

वामदेवार्षाः षोडशाक्षराः द्विपदाः । यजूंषि वा । षण्णामप्यग्निर्देवता । आदितस्त्रयः परोक्षकृताः । उत्तरे त्रयः प्रत्यक्षकृताः । मयि ब्रह्मचारिणि मेधां ग्रन्थधारणप्रज्ञाम् । दधात्विति मन्त्रान्ते श्रूयमाणेनाख्यातेन सम्बन्धः । दधातिश्च धारणार्थः । धारणं च स्थापनम् । मां मेधाविनं करोत्वित्यभिप्रायः । न चैतावदेव । किं तर्हि । मयि प्रजां पुत्रपौत्रादिलक्षणाम् । दधात्वित्यनुषङ्गः । प्रजावन्तं मां करोत्वित्यर्थः । प्रजाशासनेन च गृहस्थाश्रमाशंसा गम्यते । किञ्च मयि तेजः दीप्तिं दधातु । कोऽसौ । अग्निः । मयि मेधां मयि प्रजामिति गतम् । मन्त्रभेदात् पौनरुक्त्यमदोषः । मयि, इन्द्रः । इन्द्रशब्देनात्राग्निरेवोच्यते । अग्न्युपस्थाने विनियोगात् 'ऐन्द्र्या गार्हपत्यमि'तिवत् । तथा कृत्वा इन्दतेरैश्वर्यकर्मण इन्द्रोऽग्निः । एषः सर्वेषां भूतानामीश्वरः । इन्द्रियं धननामैतत् । तथाच स्मर्यते — 'अग्नेरपत्यं प्रथमं सुवर्णमि'ति । 'धनमिच्छेद्धुताशनादि'ति च । दधातु । मयि मेधां मयि प्रजामिति गतम् । मयि, सूर्यः । अत्रापि सूर्यशब्दो योगादग्नौ वर्तते । तमसां स्वीकरणात् सूर्योऽग्निः । भ्राजो दीप्तिं दधातु । यत्

१. 'अुरिदम्'।, २. 'मि अग्नेः' ख. ग. पाठः.

ते । हे अग्ने! यत् ते तव स्वभूतं तेजो दीप्तिस्तेन तेजसाहं तेजस्वी भूयासमित्याशासे । त्वदीयेन तेजसा मामपि तेजस्विनं कुर्वित्यभिप्रायः । उत्तरौ मन्त्रावनेनैव व्याख्यातौ । हरोवर्चश्शब्दयोस्तेजोऽभिधानत्वात् ॥

जान्वाच्योपसङ्गृह्य ब्रूयादधीहि भोः —

सावित्रीं भो अनुब्रूहीति ।

वामदेवार्षं यजुरिदम् । आचार्योऽभिधेयः । हे भोः! भवन्! आचार्य! सावित्रीं सवितृदेवत्यामृचं तत्सवितुर्वरेण्यमित्येताम् । कुत एतत् । निरुपाधिकप्रयोगे तस्या एव प्रसिद्धेः । अनुब्रूहि । अनुगृह्योपदिशेत्यर्थः ॥

तस्य वाससा पाणिभ्यां च पाणी सङ्गृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति ।

तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।

विश्वामित्रो गाथिपुत्र ऋषिः । निचृद् गायत्रीच्छन्दः । सविता देवता । यच्छब्दसम्बन्धादुत्तरोऽर्धर्चः प्रथमं व्याख्यायते — यः सविता सर्वस्य प्रसविता, उदयास्तमयाभ्यां सर्वप्रवृत्तेरभ्यनुज्ञातेत्यर्थः । धियः धीरिति कर्मनाम, प्रज्ञानाम वा । श्रौतस्मार्तकर्मविषयाः प्रज्ञाः, तानि वा कर्माणि प्रतीति वाक्यशेषः । नोऽस्मान् । प्रचोदयात् । लडर्थेऽयं पञ्चमो लकारः । प्रचोदयति प्रेरयति । अस्मान् श्रौतस्मार्तलक्षणेषु कर्मस्वधिकारयतीत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दः षष्ठ्यन्तः प्रथमेऽर्धर्चेऽध्याहार्यः । तस्य सवितुः स्वभूतम् । अत्रापि तदिति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यद् भर्गः । 'भ्रस्जो पाक' इत्यस्मादसुन्प्रत्ययान्तस्यैतद् रूपम् । पापानां भर्जनहेतुत्वाद् भर्गशब्देन मण्डलमिहाभिप्रेयते । किंविशिष्टम् । वरेण्यं वरणीयम् । मुमुक्षुभिः प्रार्थनीयमित्यर्थः । देवस्य दानादिगुणयुक्तस्य । तन्मण्डलं धीमहि चिन्तयामः, उपास्महे इत्यर्थः । अथवा पूर्वस्मिन्नर्धर्चे सवितृदेवशब्दौ षष्ठ्यन्तौ व्यत्ययेन द्वितीयान्तौ द्रष्टव्यौ । तदिति च सवितुर्विशेषणत्वेन पुँल्लिङ्गो द्रष्टव्यः । तं सवितारं वरेण्यं भर्गः पापानां भर्जयितारं दानादिगुणयुक्तमुपास्महे इत्यर्थः । होमे तु यदा विनियुज्यते, तदैवं योजना—उत्तरोऽर्धर्चः पूर्ववत् । सवितृदेवशब्दौ षष्ठ्यन्तौ चतुर्थ्यन्तौ

---

१. 'पूर्वं व्या' ख. ग. पाठः.

द्रष्टव्यौ । ध्यायतिः सामर्थ्याज्जुहोत्यर्थः । भर्गश्शब्दश्च हविर्वचनः, भृज्यते पाकादिना संस्क्रियत इति । वरेण्यशब्दस्तद्विशेषणम् । तदिति चतुर्थ्यन्तं सवितृविशेषणं द्रष्टव्यम् । कोऽर्थः । यो देवः सवितास्मान् श्रौतस्मार्तकर्मविषयासु प्रज्ञासु तेषु वा प्रवर्तयति, तस्मै सवित्रे दानादिगुणयुक्ताय वरेण्यं हविर्जुहुम इति । उदकाभिमन्त्रणे तु, ध्यायतिरभिमन्त्रणार्थः । वरेण्यभर्गश्शब्दौ उदकाभिधायकौ । तत्सवितृदेवशब्दाश्च सामर्थ्यात् चतुर्थ्यन्ता द्रष्टव्याः । उत्तरोऽर्धर्चः सर्वसाधारणयोजनः । तस्मै सवित्रे देवाय वरेण्यं भर्जनं रक्षसां नाशनम् । किं तत् । सामर्थ्यादुदकं, प्रक्षेप्तुमिति वाक्यशेषः । धीमह्यभिमन्त्रयामहे । जलपाने तु ध्यायतिः पानार्थः । षष्ठी च सम्बन्धलक्षणे वेदितव्या । तच्छब्दश्च सवितृसमानाधिकरणः । वरेण्यभर्गश्शब्दावुदकवचनावेव । तस्य सवितुर्देवस्य स्वभूतं वरेण्यमुदकम् । कुत एतद् गम्यते तदीयमुदकमिति । तथाच स्मर्यते श्रूयते च—'आदित्याज्जायते वृष्टिरि'ति स्मृतिः । 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षती'ति श्रुतिः । धीमहि पिबाम इत्यर्थः । एवं सर्वत्र सर्वेषु मन्त्रेषु विनियोगानुरूपमर्थयोजना कार्या ॥

हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति 'मम व्रत' इति ।

मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु ।
मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥

प्राजापत्यो ह्यय ऋषिः । त्रिष्टुप् । माणवकोऽभिधेयः । हे माणवक! मम स्वभूते, व्रते । कर्मनामैतत् । कर्मण्याचारलक्षणे । हृदयं, तात्स्थ्यात्तात्च्छब्द्यम् । हृद्गतं मन इत्यर्थः । अथवा क्रियाशब्दोऽयं हृदयमिति । ते तव स्वभूतं दधामि धारयामि, मन्मनोवृत्त्यनुसारिरूपमानसं त्वां करोमीत्यर्थः । किञ्च मम चित्तमनु चित्तं ते । चित्तं, चेततेर्ज्ञानमिहाभिप्रेतम् । अनुः सादृश्ये । 'अन्वर्जुनं योद्धार' इति यथा । मम ज्ञानसदृशं ते तव चित्तं ज्ञानमस्तु । किञ्च मम वाचं शब्दम् । एकव्रतः, एकमेवापृथग्भूतं कर्म यस्य सः एकव्रतः । स भूत्वेति शेषः । जुषस्व सेवस्व । एतदुक्तं भवति—यच्च मनसा ध्यायामि, यच्च जानामि, यच्च वदामि, तदेवानुतिष्ठ । मा विरोत्सीरिति । एवम्भूतं त्वां बृहस्पतिर्देवपुरोहितो नियुनक्तु । निपूर्वो युजिरत्र सामर्थ्याद् दानार्थः । ददातु मह्यम् । अथवा युजिः स्वार्थ एवान्तर्णीतण्यर्थः । नीत्युपसर्गः समित्येतस्य स्थाने । मह्यमिति च तृतीयार्थे चतुर्थी । मया संयोजयत्वित्यर्थः ॥

ब्रह्मचर्यमादिशेत् —

ब्रह्मचार्यस्यपोऽशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति ॥

वामदेवार्षम् । उष्णिक् । प्रश्लिष्टपाठात् यजुर्वा । माणवकोऽभिधेयः । हे माणवक! ब्रह्मचारी । ब्रह्म चरतीति ब्रह्मचारी । ब्रह्म वेदस्तस्य चरणं ब्रह्मचरणं, वेदाध्ययनमित्यर्थः । तत्कारी ब्रह्मचारी, वेदाध्ययनार्ह इत्यर्थः । असि भवसि । अनेनाश्रमप्राप्तिर्लक्ष्यते । ब्रह्मचार्याश्रमं प्राप्तवानसीत्यर्थः । अत एवाप उदकानि अशान पिब । अपामशनेनाचमनं लक्ष्यते । भक्षणादिषु प्राप्तेषु आचम्यैव भक्षयेत्यर्थः । कर्म आश्रमधर्मलक्षणमुक्तमुदकुम्भसमित्पुष्प-कुशाहरणादि कुरु । दिवा अहनि मा स्वाप्सीः निद्रां मा कृथाः । आचार्याधीन आचार्योक्तकारी, न स्वतन्त्र इत्यर्थः । वेदमधीष्व वेदाक्षराणि स्वीकुरु । आचार्याधीनो वेदमधीष्वेत्येवं ब्रुवतोऽयमभिप्रायः— मदधीनोऽधीष्व मम विरोधे सति मयानुज्ञाताधीनोऽधीष्वेति । एतदुक्तं भवति — आचार्येणाध्ययने क्रियमाणे तस्याध्यापनविरोधे सति तदनुज्ञातेनैव पुरुषान्तरेणाध्ययनं कर्तव्यं, न येनकेनचिदिति ॥

अनुप्रवचनीयभिक्षाचरणमन्त्रौ निगदव्याख्यातौ ॥

अथानुप्रवचनीयहोममन्त्राः । आचार्यः समन्वारब्धे जुहुयात् 'सदसस्पतिमद्भुत-मि'ति ।[1]

सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ।[2]

सनिंमेधामयासिषम् ॥

(अष्ट० १. अध्या० १. व० ३५. ऋ० ६.)

मेधातिथिः काण्व ऋषिः । गायत्री छन्दः । सदसस्पतिर्देवता । सदसस्पतिम् । अद्भुतम् । महन्नामैतत् । महान्तम् । प्रियमिष्टम् इन्द्रस्य तदायत्तत्वात् सर्वयज्ञानां काम्यं प्रार्थयितव्यम् । सर्वैः स्तोतृभिर्यष्टृभिश्च । सनिम् । 'षणु दाने'[4] । धनदानम् । मेधां ग्रन्थधारणप्रज्ञां च अयासिषम् । ईमहे यामीति याच्ञाकर्मसु पाठाद् यातिर्याच्ञाकर्मा । याचे ॥

---

१. 'ना', २. 'मम्मिमद्भुतं' ख. ग. पाठः. ३. 'भृ' क. पाठः. ४. 'मे सन्निधानम्' ख. ग. पाठः.

सावित्र्या द्वितीयम् ।

सावित्री[1] व्याख्याता । शिष्टा मन्त्रा निगदव्याख्याताः ॥

'चरितव्रताय मेधाजननं करोती'ति प्रकृत्य 'प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति 'सुश्रवः सुश्रवा असी'ति ।

**सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवं सुश्रवसं कुरु । यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ।**

कुर्वित्यन्तमेको मन्त्रः । तत ऊर्ध्वमपरो मन्त्रः । द्वावपि वामदेवार्षौ । अक्षरसंख्यया चानुष्टुभौ । पादक्लृप्त्यनवगमादेकं वा यजुः । पलाशोऽभिधेयः । हे सुश्रवः! 'देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाश्रृणोत्[2] सुश्रवा वै नामे'ति श्रुतिदर्शनात् सुश्रवा इति सुश्रवश्शब्दः पलाशवचनो द्रष्टव्यः । तस्य संबोधनं सुश्रवः इति । शोभनस्य ब्रह्मवेदस्य श्रोतरित्यर्थः । सुश्रवा असि भवसि यथा त्वं हे सुश्रवः! सुश्रवा असि, एवं मां हे सुश्रवः! सुश्रवसं शोभनस्य[4] वेदशब्दस्य श्रोतारं कुरु । अत्र बहुकृत्वः संबोधनमादरार्थमिति मन्तव्यम् । किञ्च यथा त्वं देवानां संबन्धिनो यज्ञस्य, निधिपः । निधीयत इति निधिः । यज्ञफलमुच्यते । तस्य पाता रक्षिता निधिपः । यज्ञनिर्वर्तकतया यज्ञफलदातेत्यर्थः । कथं पलाशस्य यज्ञनिर्वर्तकत्वमिति चेत् । उच्यते । तथाहि श्रूयते — 'तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । पर्णमच्छिद्यत । तत् पर्णोऽभवदि'ति पलाशोत्पत्तिः सोमादवगम्यते । सोमो हि यज्ञनिर्वर्तकः पलाशकारणम् । अतः कारणधर्मेण कार्यभूतपलाशः स्तूयते यज्ञस्य निधिप इति असि भवसि । एवमहं मनुष्याणां त्रैवर्णिकानां संबन्धिनो वेदस्य निधिपः । अत्र निधिशब्देन वेदार्थज्ञानमुच्यते वेदेषु निधीयत इति । तस्य पाता रक्षिता निधिपः । त्वत्प्रसादाद् वेदमधीत्य वेदार्थं श्रोता च[5] भूयासमित्याशासे ॥

'तत्सवितुर्वृणीमह' इति सावित्रीम् ।

तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्[4] ।
श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥

१. 'त्र्युपनयने व्या', २. 'देवा वै ब्रह्मपदमवदन्तः । तत् पर्ण इवाश्रृणोत्' ३. 'पद', ४. भोजनस्य', ५. 'श्रेज्ञाता च' ख. ग. पाठः.

आत्रेयः श्यावाश्व ऋषिः । अनुष्टुप् । सावित्री । तदिति तच्छ्रुतेर्यच्छब्दोऽध्याहार्यः । यन्मण्डलं सर्वे प्राणिनः संभजन्ते, तत् । सवितुः सर्वस्य प्रसवितुरादित्यस्य स्वभूतम् । किं तत् । सामर्थ्यान्मण्डलम् । वृणीमहे । 'वृङ् संभक्तौ' । संभजामहे । वयम् । कीदृशस्य सवितुः । देवस्य दानादिगुणयुक्तस्य । कीदृशं मण्डलम् । भोजनं, भुजिरत्र पालनार्थः[1] । सर्वप्राणिनां पालयितृ । अथवा भुजिरभ्यवहारार्थ एव । भुज्यते उपजीव्यते हि तच्चराचरेण । किञ्च, श्रेष्ठं अतिशयेन प्रशस्यं च सर्वधातमं सर्वेषां प्राणिनामतिशयेन धारयितृ च । अथवा सर्वं इत्युदकनाम । दधातिर्दानार्थः । वृष्ट्युदकस्यातिशयेन दातृ च । तुरं तुर्वतिर्हिंसाकर्मा तुर्वितृ हिंसितृ च तमसाम् । भगस्य भजनीयस्य सवितुः । किं सकृदेव संभजामहे, न । किं तर्हि । धीमहि । सततं चिन्तयामः मण्डलोपासनेन । अत्र तदन्तर्गतपुरुषोपासनं विवक्षितम् । सवितृमण्डलमध्यवर्तिनं हिरण्मयं पुरुषम् । उपास्महे इत्यर्थः । अस्या ऋचो होमे विनियोगे भोजनशब्देन हविरभिप्रेयते देवतया भुज्यत इति । वृणीमहे इत्यनेन च हविस्संस्कार उच्यते । सवितुरिति सम्प्रदानचतुर्थ्यर्थे षष्ठी द्रष्टव्या । धीमहीति च ध्यानेनात्र होमः प्रतिपाद्यते । एतदुक्तं भवति — यद् देवतार्हं हविस्तद्भोजनं देवतोपयोगार्हमित्यर्थः । श्रेष्ठमतिशयेन प्रशस्यं, सर्वधातमं देवताप्रीतिद्वारेण सर्वस्य जगतोऽतिशयेन धारयितृ, तुरम् अनर्थस्य हिंसितृ, त्वरयितृ वा कर्मफलागमे । वृणीमहे संस्कुर्म इत्यर्थः । संस्कृत्य च सवित्रे देवाय दानादिगुणयुक्ताय भगाय भजनीयाय धीमहि जुहुम इत्यर्थः ॥

'एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातमि'तीह गृह्ये व्रतादेशनविधानात् सूत्रे च 'एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमं चारयित्वा व्रतमनुयुज्याऽनुक्रोशीने प्रब्रूयादुत्तरमहर्महानाम्नीरम्प्रे'[2][3] इति महानाम्न्यादीनां प्रवचनविधानात् तेषां प्रवचनप्रकृतिभूतस्य महानाम्नीव्रतस्य मन्त्रा इहाकृष्य व्याख्यायन्ते "अन्वारब्धे जुहुयादग्नावग्निरिति—

**अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।**

---

१. 'र्वैमित्यु', २. 'महरिति महा' ख. ग. पाठः, ३. 'म्न्यस्य म' क. पाठः.

**तस्मै जुहोमि हविषा घृतेन मा देवानां मोमुहद्भागधेयं**
**मो अस्माकं मोमुहद्भागधेयं स्वाहा ॥**

वामदेवार्षम्[1] । अतिजगती शाक्वरी वा छन्दः । अग्निर्देवता । तस्मै जुहोमीत्युत्तरार्धर्चे तच्छब्दश्रवणात् पूर्वस्मिन्नर्धर्चे यच्छब्दोऽध्याहार्यः । योऽग्निर्निर्मन्थ्यात्मा । अग्नावाहवनीयात्मनि प्रविष्टः संचरति । कीदृशः । ऋषीणां पुत्रः । ऋषिशब्देनात्र ऋत्विज उच्यन्ते, कर्मणां द्रष्टृत्वात् । तथाहि भगवान् यास्कः — 'ऋषिर्दर्शनादि'ति । अध्वर्य्वादीनामृत्विजां पुत्रः । तैर्मथ्यमाने यस्माज्जायते तस्मात् तत्पुत्रव्यपदेशः । अधिराजः । अधीत्युपरिभावे । 'राजृ दीप्तौ' । अधिकदीप्तः[2] । अथवा राजतिरैश्वर्यकर्मा । सर्वेषामीश्वर इत्यर्थः । अस्मिन् पक्षेऽधीत्युपसर्गो धात्वर्थानुवादी । लम्बते प्रलम्बते इति यथा । तथाचोक्तं —

"धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
तमेव विशिनष्टयन्य उपसर्गगतिस्त्रिधा ॥"

इति । एषः । अध्याहृतेन यच्छब्देनास्य सम्बन्धो य एष इति । तस्मै अग्नये । तादर्थ्ये एषा चतुर्थी । अग्न्यर्थं जुहोमि होमं निर्वर्तयामि । केन । हविषा चरुलक्षणेन । घृतेन घृतवता । उपस्तीर्णाभिघारितेनेत्यर्थः । अथवा तस्मा इति सम्प्रदानचतुर्थी । अस्मिन् पक्षे जुहोतिरपि दानार्थः । हविषा घृतेनेति च तृतीयां[3] द्वितीयार्थे । तस्मा अग्नये घृतसंयुक्तं हविर्ददामीत्यर्थः । किञ्च देवानामन्येषामपि भागधेयम् । भागश्चासौ धेयश्चेति भागधेयः । भागशब्देनात्र हविरभिप्रेयते, देवैर्भज्यते सेव्यत इति । धातिर्दानार्थः[4] । भागशब्दस्य पूर्वनिपातश्छान्दसः । धेयभागं हविरित्यर्थः । अथवा भागशब्दोंऽशवचन एव । हविषोंऽशं देयम् । अस्मिन् पक्षे नपुंसकलिङ्गनिर्देशश्छान्दसः । अग्नौ प्रक्षिप्तं सदिति वाक्यशेषः । मोमुहत् । मिश्रणेन मोहं मा गमत् यथायथं देवता गच्छत्वित्यभिप्रायः । मो । उकारश्चार्थे । मा चास्माकं भागधेयं कर्मफललक्षणं मोमुहत् मोहं मा गमत् । यथायथं तद् गच्छत्वित्यभिप्रायः । अनेन प्रकारेण कर्मफलमाधिकारिकमिति दर्शितं भवति । अन्यथा चेदन्यस्य फलमन्यस्यापि

१. 'वामदेवः अति जगति शक्वरी वा । अग्निर्देवता', २. 'दीप्तिरित्यर्थः' क. पाठः. ३. 'ये', ४. 'धयतिर्दा' ख. ग. पाठः.

भवेत् । आधिकारिकत्वे तु य एवाधिकारी, तस्यैवाधिकारनियोगस्य सिद्धये फलमाक्षिपतीत्यसङ्करः सिध्यति अग्नेः प्रददादिति वाक्यशेषाध्याहाराद् अग्नेः प्राधान्यम्[1] । स्वाहेति प्रदानार्थो निपातः ॥

या तिरश्ची निपद्यतेऽहं विधरिणी इति ।
तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा ॥

'यातिरश्चीति' वामदेवर्षिः, अनुष्टुप् छन्दः संराधनी नाम देवता । नैरुक्तपक्षे संराधनी माध्यमिका वाक् । वृष्टिप्रदानद्वारेण सर्वं जगत् संराधयतीति । देवपक्षे[2] देवतान्तरम् । सा च स्त्री । या त्वं संराधनी तिरश्ची तिर्यग्गामिनी निपद्यते । मध्यमस्य स्थाने प्रथमपुरुषः । तथाच तैत्तिरीयाणां पाठः । निपद्यसे शेषे । केनाभिप्रायेण । उच्यते । अहं विधरिणीति । विपूर्वो धरतिर्निवारणार्थः । निवारयन्ती । निवारणं च सामर्थ्याद् रक्षःपिशाचादीनाम् । एतदुक्तं भवति — कर्मसाधनार्थं कर्मविरोधिनां रक्षःपिशाचादीनामप्रवेशाय द्वारदेशे रक्षेत्यर्थः । तां त्वा त्वां घृतस्य धारयोपस्तरणाभिधारणलक्षणया युक्तेन हविषेति शेषः । यजे पूजयामि संराधनीं देवतामहम् । स्वाहेति प्रदानार्थः ॥

यस्मै त्वा काम कामाय वयं सम्राड् यजामहे ।
तमस्मभ्यं कामं दत्त्वाथेदं त्वं घृतं पिब स्वाहा ॥

'यस्मै त्वा' वामदेवार्षम्, अनुष्टुप् छन्दः, कामो देवता । कामश्च नैरुक्तपक्षे पार्थिवोऽग्निर्मध्यमो वा । ऐतिहासिकपक्षे मन्मथः । हे काम! यस्मै कामाय । काम्यते इति कामः फलमुच्यते । यस्मै फलाय त्वा त्वां वयं सम्राट् हे सम्राट्! कामविशेषणमेतत् । सम्यग् दीप्त! दीपयितर्वा विषयरागस्य । यजामहे पूजयामः । हविषेति वाक्यशेषः । तं कामं तत्फलमस्मभ्यं दत्त्वा । अथानन्तरमिदं घृतं घृतसंयुक्तं हविरित्यर्थः । त्वं पिब भक्षय । स्वाहेत्युक्तार्थः ॥

अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ स्वाहा ॥

'अयं नोऽग्निः' । अयमग्निर्नोऽस्मभ्यं, वरिवः । धननामैतत् । धनम् । कृणोत्विति । न इति सम्प्रदानचतुर्थीश्रवणाद् वरिव इति च सम्प्रदेयश्रवणात्

१. 'ति अग्नेः प्राधान्यम्' क. पाठः. २. 'भेदपक्षे' ख. ग. पाठ,

करोतिरिह क्रियासामान्यवचनः क्रियाविशेषे दाने वर्तते । करोतु ददात्वित्यर्थः । अयमेवाग्निः मृधः । मृधं करोति मृधयतीति 'तत् करोति तदाचष्ट' इति णिच् । ण्यन्तात् क्विप् । क्विपो लोपे द्वितीयाबहुवचनान्तमेतद्रूपम् । मृधः सङ्ग्रामकारिणः शत्रूनित्यर्थः । प्रभिन्दन् प्रकर्षेण विदारयन् । ज्वालाभिर्निर्दहन्नित्यर्थः । पुरः अस्माकमग्रत एतु गच्छतु । अयम् अयमेवाग्निः शत्रूनस्मदीयान् जयतु । जर्हृषाणः अत्यर्थं हृष्यन् लीलयैवेत्यर्थः । अयमेवाग्निः । वाजम् । अन्ननामैतत् । अन्नं शत्रूणां स्वभूतं जयतु । वाजसातौ । सङ्ग्रामनामैतत् सङ्ग्रामे । स्वाहेति गतार्थः ॥

**'असूयन्त्यै चानुमत्यै च स्वाहा' ।**

वामदेवार्षं यजुरिदम् । असूयन्ती चानुमतिश्च देवते । अनुमतिर्मध्यमस्थाना स्त्री । असूयन्त्यपि तत्साहचर्यात् तत्स्थानैवेति नैरुक्तसिद्धान्तः । उभयं देवतान्तरम् ऐतिहासिकपक्षे । ताभ्यां स्वाहुतमस्तु ॥

**'प्रदात्रे स्वाहा' ।**

वामदेवार्षं यजुः, प्रदाता देवता । प्रदाता मध्यमस्थानेन्द्रः । देवतान्तरं वैतन्नामकम् । तस्मै स्वाहुतमस्तु ॥

व्याहृतयो व्याख्याताः ॥

**''हुत्वाहैतं स्थालीपाकं सर्वमशाने''ति ।**

वामदेवो वा विश्वामित्रो वा ऋषिः । यजुरिदम् । माणवकोऽभिधेयः । एतं स्थालीपाकं हुतशिष्टं सर्वमशान भक्षय । हे माणवक ! सर्वं कृत्स्नमशान भुङ्क्ष्वेत्यर्थः ॥

'आदित्यमुपस्थापयेत् त्वं व्रतानां व्रतपति'रिति ।

**त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि तच्छकेयं तेन शकेयं तेन राध्यासम् ॥**

वामदेवार्षं यजुरिदम् आदित्योऽभिधेयः । हे आदित्य ! त्वम् । व्रतानामित्येतत् व्रतपतिरित्येतेन सम्बध्यते । व्रतपतिशब्दश्च यद्यपि व्रतानां पतिर्व्रतपतिरित्येवमन्वाख्यायते । तथापि यथा प्रवीणशब्दः प्रकृष्टो

---

१. 'स्यन्तं हृष्यतीति हृष्यन्' ख. पाठः. २. 'स्वाहा व्या' ख. ग. पाठः. ३. 'काडु' क. पाठः.

वीणायामित्येवमन्वाख्यायमानः प्रकृष्टमात्रस्य वाचको न वीणायामेव प्रकृष्टस्य एवमयमधिपतिमात्रस्य वाचको न व्रतानामेवाधिपतेः । तेन व्रतानामित्येतस्य व्रतपतिरित्येतेनापौनरुक्त्यम् । अत एतदुक्तं भवति — व्रतानां पतिरिति । इयमेव प्रक्रिया 'गणानां त्वा गणपतिं', 'विशां कविं विश्पतिं', 'त्वामग्ने वसुपतिं वसूनाम्', 'वसूयवो वसुपते वसूनां', 'गोपतिः शूरगोनामि'त्येवमादिषु मन्त्रेषु द्रष्टव्या । व्रतानां कर्मणां पतिः पालयिता । असि लोडर्थे लट् । भवेत्यर्थः । व्रतं चरिष्यामि त्वत्प्रसादादहं महानाम्न्यध्ययनशेषभूतं कर्म चरिष्यामि । तत् कर्म शकेयमनुष्ठातुं शक्नुयामित्याशासे । तेन व्रतेनानुष्ठितेन शक्नुयामध्ययनं कर्तुमिति वाक्यशेषः । तेनाधीतेन वेदभागेन, राध्यासम् । 'राध साध संसिद्धौ' । सिद्धो भूयासम्, अध्ययनपारमविघ्नेनाप्नुयामित्यर्थः ॥

**"आचार्योऽहतेन वाससा त्रिः प्रदक्षिणं शिरसः सम्मुखं वेष्टयित्वाहैतं कालमेवम्भूतोऽस्वपन् भवे"ति ।**

वामदेवो विश्वामित्रो वर्षिः । यजुरिदम् । माणवकोऽभिधेयः । एतं कालमेतावन्तं कालमित्यर्थः । यावान् कालस्त्वया सङ्कल्पितः, एकरात्रं त्रिरात्रं वा तावन्तं कालमेवंभूतः परिवेष्टिताशिरस्कः अस्वपन् स्वापमकुर्वन् भव । एवंभूतशब्देनास्य भवतेः सम्बन्धः ॥

**पृष्ठेन[2] पृष्ठं सन्धाय महानाम्नीभों! अनुब्रूहीति मनसा ब्रूयात् ।**

वामदेवार्षं यजुः । आचार्यो देवता । 'सावित्रीं भो' इत्यनेन व्याख्यातम् ॥

'पुनः पृष्ट्वानुक्रोशन' इत्यारभ्यादित्यमीक्षयेद् 'मित्रस्य त्वे'त्यनेन ।

**मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे मित्रस्य त्वा चक्षुषानुवीक्षे ॥**

वामदेवार्षं द्वैपदम्, आदित्यो देवता । हे आदित्य! मित्रस्य देवस्य चक्षुषा न मदीयेन । त्वा त्वां प्रतीक्षे प्रतिपश्यामि । आत्मनि मित्राध्यारोपं

---

१. 'षु व्रतानां' क. पाठः. २. 'पृष्ठं सन्धाय' ख. ग. पाठः.

कृत्वा त्वां प्रतिपश्यामीत्यर्थः । अनेनैव प्रथमपादव्याख्यानेन द्वितीयपादो व्याख्यातः ॥

"मित्रस्य वश्चक्षुषानुवीक्ष" इति दिशः ससम्भाराः ।

दिक्सम्भारा देवत्या । वामदेवार्षैकपदा दशाक्षरा । मित्रस्य चक्षुषा वो युष्मान् दिशः सम्भाराश्चानुवीक्षे आनुपूर्व्येण क्रमेणाहं पश्यामीत्यर्थः ॥

पुनरादित्यं मित्रस्य त्वेत्यादिना । ईक्षयेदित्यनुषङ्गः ।

मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योस्मान् द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषोर्हेती ऋच्छतु ॥

वामदेवार्षं यजुरिदमादित्यदैवतम् । हे आदित्य! मित्रस्य चक्षुषा त्वा त्वां प्रतिपश्यामि त्वत्प्रसादाद् योऽस्मान् द्वेष्टि यं च वयं द्विष्मः तं शत्रुं चक्षुषोः गोलकाभिप्रायं द्विवचनम् । हेतिः । आयुधनामैतत् । आयुधं शस्त्रमृच्छतु गच्छतु । अस्मच्छत्रोश्चक्षुर्द्वये तीक्ष्णं शस्त्रं पततु । अस्मच्छत्रुरन्धो भूयादित्यभिप्रायः ॥

"भूमिमुपस्पृशेदग्न इलेत्यादिभिः स्योनापृथिवी भवेत्यन्ताभिर्नवभिः" । तासु प्रथमाद्वितीययोः षष्ठ्यादेस्तृचस्य वामदेव ऋषिः । नवम्याः काण्वो मेधातिथिर्ऋषिः । तृतीयाया राहुगणो गौतमः । चतुर्थ्या वसिष्ठः । पञ्चम्या ऋषिश्च भारद्वाजः । प्रथमा काविराट् नामानुष्टुप् । यजुर्वा । द्वितीया षष्ठ्याद्याश्चतस्रश्च गायत्र्यः । तृतीया-द्यास्तिस्रस्त्रिष्टुभः । प्रथमा वैश्वदेवी । द्वितीया सारस्वती । तृतीयाद्यास्तिस्रो वैश्वदेव्यः । षष्ठ्याद्यास्तिस्र ऐन्द्र्यः । नवमी पार्थिवी । सर्वासां भूम्युपस्पर्शने विनियोगात् भूमेरेव प्राधान्यं द्रष्टव्यम् । तथा च व्याख्यायन्ते ।

अग्न इला नम इला नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः ॥

अग्न इला । हे अग्ने! , इला पृथिवीनामैतत् । तात्स्थ्या-दत्र ताच्छब्द्यम् । प्रथमा च सम्बुद्धौ द्रष्टव्या । अग्नेर्विशेषणमेतत् । हे पृथिवीस्थाग्ने! नमः । अस्त्वित्युत्तरत्र श्रूयमाणमिहानुषक्तव्यम् । तुभ्यमिति वाक्यशेषः । तुभ्यं नमोऽस्तु । इला, इदमपि सम्बुद्ध्यन्तं द्रष्टव्यम् । हे इले! पृथिवि! तुभ्यं नमोऽस्त्विति शेषः । नम ऋषिभ्यो मन्त्रकृद्भ्यः मन्त्राणां

---

१. 'वता वा' क. पाठः. २. 'व्यो क' ख. ३. 'ईक्षेतेत्य' ख. ग. पाठः

नित्यत्वात् करोतिरिह सामर्थ्याद् दर्शने वर्तते । मन्त्रदृग्भ्य इत्यर्थः । नमोऽस्त्वित्यनुषङ्गः । मन्त्रपतिभ्यः मन्त्रस्वामिभ्यः । मन्त्रस्वामित्वमस्ति देवानां तद्बोधकत्वान्मन्त्राणां नमोऽस्तु । हे देवाः वः युष्मभ्यं देवेभ्यः दानादिगुणयुक्तेभ्यः । अत्राग्निशब्दस्य भूमेरधिष्ठातृवचनत्वादधिष्ठानाधिष्ठात्रोरभेदोपचारादग्निशब्देनापि भूमिरेवाभिधीयत इति बोद्धव्यम् । अथवाग्निशब्दः क्रियावचनः पृथिव्यां वर्तते । अग्रणीत्वादिक्रियायोगात् । एवमृष्यादयः शब्दाः क्रियायोगात् पृथिव्यां वर्तयितव्याः । वचनव्यत्ययस्तु कार्यः । एवमुत्तरेष्वपि मन्त्रेषु ॥

**शिवा नः शन्तमा भव सुमृलीका सरस्वति मा ते व्योम सन्दृशि ॥**

शिवानः । हे सरस्वति ! सर उदकम् । सर्त्तेर्धातोः । तद्वति ! उदकवति ! माध्यमिके ! वाक् ! वागिन्द्रियदेवते ! इति वा । अथवा नद्यभिमानिनि! नोऽस्माकं शिवा सुखाय सुखकरी भव । कीदृशी त्वमिति चेदुच्यते । शन्तमा सुखतमा अतिशयेन सुखिनी । सुमृलीका । 'मृड सुखन' इत्येतस्यैतद्रूपम् । सुसुखा कृत्स्नस्य जगतः शोभनस्य सुखस्य कर्त्रीत्यर्थः । किञ्च ते तव, संदृशीति पञ्चम्यर्थे सप्तमी । सन्दृशि सन्दर्शनात् । मा व्योम । विपूर्वादेतेर्गत्यर्थस्येदं रूपम् । मा विगच्छेम । सर्वदैव तवानुग्राह्याः स्यामेत्यर्थः । भूम्यामप्यविशिष्टा योजना ॥

**भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः ॥**

भद्रं कर्णेभिः । हे देवाः! भद्रं भजनीयं श्रवणीयमित्यर्थः । कर्णेभिः कर्णैः शृणुयाम । भद्रं भजनीयं दर्शनीयमित्यर्थः । पश्येम अक्षभिश्चक्षुर्भिः । हे यजत्राः! देवानां विशेषणमेतत् । यष्टव्या इत्यर्थः । किञ्च स्थिरैरङ्गैर्दृढैरशिथिलैः करचरणाद्यवयवैः । तनूभिः शरीरैः । स्थिराभिरित्यनुषज्यते । तृतीयानिर्देशाद्युक्ता इति शेषः । जरयानुपहतशरीरतदवयवाः सन्त इत्यर्थः । तुष्टुवांसः । शत्रर्थेऽयं क्वसुप्रत्ययः । युष्मान् स्तुवन्त इत्यर्थः । व्यशेम विविधं

१. 'न्त्रदर्शिभ्यः' ख. ग. पाठः.

प्राप्नुयाम । देवहितं देवैर्हितं दत्तं देवैर्वाभिहितं स्थापितमुपकल्पितं यदायुर्जीवितं वर्षशतपरिमाणम् । तत् सर्वं युष्मान् स्तुवन्तो युष्मत्प्रसादेन प्राप्नुयाम । मान्तरा मृत्युरित्यभिप्रायः । भूम्यां तु देवाः यजत्राः इति पदद्वयमेकवचनस्य स्थाने बहुवचनान्तं द्रष्टव्यम् । देवशब्दस्य ङीबन्तता च द्रष्टव्या ॥

शंनंइन्द्राग्नी भवतामवोभिः शंनइन्द्रावरुणारातहव्या ।
शमिन्द्रासोमासुवितायशंयोःशंनइन्द्रापूषणावाजसातौ ॥
(अष्ट० ५. अध्या० ३. व० २८. ऋ० १)

'शन्न इन्द्राग्नी' । नोऽस्माकं इन्द्राग्नी शं सुखनामैतत् । इन्द्राग्निविशेषणम् । सुखौ सुखकरावित्यर्थः । भवताम् । अवश्शब्दः सुखसंवेदनवचन एव, न तत्कर्तृवचनः । अस्मिन् पक्षे भवतिः सामर्थ्यात् करोत्यर्थः । सुखं कुरुतामित्यर्थः । अवोभिः । सहयोग एषा तृतीया पालनैः सह । अथवा अवोभिरिति करणे तृतीया । एतदुक्तं भवति—इन्द्राग्नी भगवन्तावस्मान् पालयन्तौ सुखकरौ भवतां सुखमस्माकं कुरुतामिति । एवं सर्वत्र । शं सुखं नोऽस्माकमिन्द्रावरुणौ । कीदृशौ । रातहव्या रातहव्यौ । दत्तहविष्कौ । भवतामित्यनुषक्तव्यम् । शं सुखमिन्द्रासोमौ नो भवतामिति चानुषङ्गः । किञ्च, सुविताय, सुवितशब्दोऽत्रापत्यवचनः । तथाच भगवता यास्केन निरुक्तम्— 'सुविते सु इते सूते सुगते प्रजायामिति वे'ति । अस्माकमपत्याय शं शमनं रोगादीनामुत्पन्नानां नाशनम् । योः, योरिति पृथग्भावार्थः । यापनं च पृथग्भावनम्, उत्पत्स्यैः भयादिभिरनिष्टैरसंयोगं च इन्द्रासोमौ कुरुतामिति शेषः । शं सुखं नः अस्माकमिन्द्रापूषणौ भवतां कुरुताम् । वाजसातौ, सङ्ग्रामनामैतत् । सङ्ग्रामे । एतदुक्तं भवति—युद्धे वर्तमानानामस्माकं शत्रुजयलक्षणं सुखं कुरुतामिन्द्रापूषणौ । शत्रुजयेन सुखकरौ वा भवतामिति । भूम्यभिधाने तु इन्द्रादयः शब्दाः क्रियावचनाः यथासम्भवं योजयितव्याः ॥

स्तुषे जनंसुव्रतंनव्यसीभिर्गीभिर्मित्रावरुणासुम्नयन्ता ।
तआगमन्तुतइहश्रुवन्तुसुक्षत्रासोवरुणोमित्रोअग्निः ॥
(अष्ट० ४. अ० ८. व० ५. ऋ० १)

१. 'नं ? उत्पत्स्यद्भिर्भया' क, पाठः,

'स्तुषे जनं'। स्तुषे इति व्यत्ययेनायं मध्यम उत्तमस्थाने । स्तौमीति । जनम्, अरण्योर्जायमानत्वाद् यागद्वारेण कृत्स्नस्य जगतो जनयितृत्वाद्वा जनशब्देनाग्निरुच्यते । अरण्योर्जातं यागद्वारेण जगतो जनयितारं वाग्निम् । सुव्रतं, व्रतमिति कर्मनाम[1] । शोभनं हविर्नयनादिकर्म कुर्वाणम् । नव्यसीभिरन्यैरप्रयुक्तपूर्वाभिर्गीर्भिर्वाग्भिः[2] । न च केवलमात्मनः सुखमिच्छन्तौ, किं तर्हि । मित्रावरुणा मित्रावरुणौ च । सुम्नयन्ता । सुम्नमिति सुखनाम तमिच्छन्तौ सुम्नयन्तौ, स्तुतिनिमित्तं सुखमात्मन इच्छन्तौ । ते चाग्न्यादय आगमन्तु आगच्छन्तु । आगत्य च ते देवा इहास्मदीये यज्ञे । सप्तमीनिर्देशात् स्थिताः सन्त इति वाक्यशेषः । श्रुवन्तु शृण्वन्तु । स्तुतिलक्षणा गिरः इति शेषः । कीदृशा देवाः । सुक्षत्रासः । क्षत्रमिति धननाम बलनाम वा । सुधनाः सुबला वा । वरुणमित्रौ अग्निश्च । भूम्यभिधाने वचनव्यत्ययो लिङ्गव्यत्ययश्च ॥

कया॑नश्चि॒त्रआभु॑वदू॒तीस॒दावृ॒धःसखा॑ ।

कया॒शचि॑ष्ठयावृ॒ता ॥

(अष्ट० ३. अध्या० ६. व० २४. ऋ० १.)

'कया नः' । ऊती, तृतीयैकवचनस्य पूर्वसवर्णादेशः । ऊत्या । केन पालनेनेत्यर्थः । नोऽस्माकं सदा वृधः सर्वदा वर्धयिताभिलषितार्थैः । स्तोतृणां यष्टूणां च सर्वदा वर्धनीयो वा हविर्भिः स्तुतिभिश्च । आभुवदाभिमुख्येन भवति । चित्रः चायनीयः पूजनीय इन्द्रः । सखा समानख्यानः कया वा शचिष्ठयातिशयेन कर्मवत्या वृता, वर्ततेर्गतिकर्मणो रूपमेतत् । वृद् गमनम् । सामर्थ्यादनुपूर्वो वर्तातिर्द्रष्टव्यः । केनागमनेनास्मद्यागादिकर्मफलसहितेनास्मान् प्रत्यागच्छेदित्याशास्महे । आगमनविलम्बननिर्वेदोक्तिरियम् । भूम्यभिधाने लिङ्गव्यत्ययः ॥

कस्त्वा॑स॒त्योमदा॑नां॒मंहि॑ष्ठोमत्स॒दन्धसः ।

दृ॒ळ्हाचि॑दा॒रु॒जे॒वसु ॥

(अष्ट० ३. अध्या० ६. व० २४. ऋ० २.)

---

१. 'यादिद्वा', २. 'भिः स्तुतिलक्षणाभिर्वाग्भिः' ख. ग. पाठः.

'कस्त्वा सत्य.' । हे इन्द्र! कः यष्टा त्वा त्वां सत्यः अविसंवादी । मदानां, निर्धारण एषा षष्ठी । मदकराणां द्रव्याणां मध्ये । अन्धसः । अन्ननामैतत् । तृतीयार्थे षष्ठी । अन्धसा हविर्लक्षणेनान्नेन । अथवा अन्धस इति षष्ठीनिर्देशादेकदेशेषेण स्वलक्षणेनेति शेषः । मत्सद् मादयति, तर्पयति वा । मंहिष्ठः, मंहतिर्दानकर्मा अतिशयेन दाता । असद्यज्ञं प्रत्यागच्छन्तं त्वां को यष्टा निवार्य हविषा तर्पयतीत्यागमनविलम्बनात् परिदेवनैवेयम् । दृढाचिद् दृढान्यपि वसूनि धनानि भाण्डागारे शत्रुभिः सुगुप्तं निक्षिप्तान्यपि सन्ति धनानीत्यर्थः । आरुजे आभिमुख्येन भिनत्ति । भाण्डागारं विमृद्य तत्स्थं धनमाहरतीत्यर्थः । अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । यो भवान् शत्रूणां स्वभूतानि सुगुप्तान्यपि धनानि तान् हत्वापहरति, तं त्वां को यष्टा हविषा मत्सदिति । भूम्यामप्यविशिष्टा योजना ॥

अभीषुणःसखीनामविताजरितॄणाम् ।
शतंभवास्यूतिभिः ॥

(अष्ट० ३. अध्या० ६. व० २४. ऋ० ३.)

'अभीषुणः' । प्रत्यक्षकृतोऽयं मन्त्रो मध्यमपुरुषयोगात् । हे इन्द्र! नः अस्माकं सखीनां समानख्यानानां जरितॄणाम् । स्तोतृनामैतत् । शतम्, तृतीयैकवचनस्य लुक् । शतेन । ऊतिभिर्बहुभिः पालनैर्नानाप्रकारै रक्षणोपायैरस्मान् स्तोतॄन् पाहीत्यर्थः । सुः पादपूरणः । भूम्यभिधाने लिङ्गव्यत्ययः ॥

स्योनापृथिवीभवानृक्षरानिवेशनी ।
यच्छानःशर्मसप्रथः ॥

(अष्ट० १. अध्या० २. व० ६. ऋ० १५.)

'स्योना पृथिवी' । हे पृथिवि ! स्योना सुखनामैतत् । सुखा, सुखकरीत्यर्थः । भव । अनृक्षरा ऋक्षरं कण्टकं, तद्वर्जिता भव । निवेशनी निवेशयन्त्येतस्यामिति निवेशनी । अधिकरणे ल्युड् द्रष्टव्यः । निवेष्टुं योग्या सूपसर्पणा च भव । किञ्च यच्छ प्रयच्छ देहि नोऽस्मभ्यं शर्म सुखम् । किंविशिष्टम् । सप्रथः सर्वतः पृथु विस्तीर्णम् असंबाधम् ॥

१. 'कदेशलक्ष' ख. ग. पाठः.

प्रकृतमनुसरामो वयम् । ऋत्विजो वृणीते । तत्र सदस्यप्रशंसापरौ मन्त्रौ 'यमृत्विजो बहुधा कल्पयन्त', 'एक एवाग्निर्बहुधा समिद्ध' इत्येतौ । तदुक्तमृग्भ्याम् — 'यमृत्विजो बहुधा कल्पयन्त' इति हविष्पान्तीये सूक्ते कत्यग्नयः कति सूर्यासः कत्युषासः कत्युस्विदिति प्रश्नः । एक एवाग्निरित्यस्य प्रतिवचनप्रतिपाद्येयमृक् । यमृत्विजो बहुधेत्युत्तरौ । अनेन क्रमेण खिलमन्त्रद्वयं पठित्वा व्याख्यातमुद्गीथाचार्यैः संहिताव्याख्यानं कुर्वद्भिः । इह तु विनियोगक्रमेण मन्त्रद्वयं व्याख्यायते —

यमृत्विजोबहुधाकल्पयन्तःसचेतसोयज्ञमिमंवहन्ति ।
योअनूचानोब्राह्मणोयुक्तआसीत्कास्वित्तत्रयजमानस्यसंवित्॥

आङ्गिरसस्य मूर्धन्वत आर्षम् । त्रिष्टुप् छन्दः । सूक्तस्य वैश्वानरीयत्वाद् वैश्वानरीयत्वे प्राप्ते विनियोगसामर्थ्यादिह सदस्योऽभिधीयते । यम् इमं यज्ञमृत्विजो होत्रादयः सचेतसः चेतोयुक्ता मन्त्रब्राह्मणार्थज्ञानिन इत्यर्थः । बहुधा नानाप्रकारं कल्पयन्तः, विचारोऽत्र कल्पनं विवक्षितम् । विचारयन्तः वहन्ति प्रापयन्ति निर्वर्तयन्तीत्यर्थः । तत्र यज्ञे यो ब्राह्मणः सदस्याख्यः अनूचानः षडङ्गवेदवेदाङ्गज्ञानीत्यर्थः । युक्तोऽङ्गीकृतः । आस्ते उपविशति । तस्मिन् सतीति वाक्यशेषः । तस्मिन् सदस्ये एवंलक्षणे सति यजमानस्य कास्वित् काचन, काचिदपीत्यर्थः । संवित् संवित्तिः कर्मनिष्पादनशक्तिः नान्यस्य । कस्य तर्हि सामर्थ्यं, सदस्यस्यैवेत्याभिप्रायः ॥

एकएवाग्निर्बहुधासमिद्धएकःसूर्योविश्वमनुप्रभूतः ।
एकैवोषाःसर्वमिदंविभात्येकंवाइदंविबभूवसर्वम् ॥

'एक एवाग्निः' एक एव बहुधा बहुप्रकारमादित्यात्मना गार्हपत्यान्वाहार्याहवनीयात्मना च समिद्धः सन्दीप्तो लोकानुग्रहाय भवति । यथाच सूर्य एक एव विश्वं सर्वं चराचरात्मकं जगदनुप्रभूतः अनुग्रहीतुं समर्थो भवति । यथाच एकैवोषाः सर्वमिदं चराचरात्मकं जगद् विभाति विविधं दीपयति । यथाच वृष्टिलक्षणमेकमेवोदकमिदं सर्वं चराचरात्मकं जगद् विबभूव । वीत्युपसर्ग उदित्यस्य स्थाने । भवतिः सामर्थ्यादन्तर्णीतण्यर्थः । उद्भावयति उत्पादयतीत्यर्थः । लिट् च लडर्थे । एवमेवानूचानः सदस्य एक

१. 'रा । यावन्मात्रमित्युत्तमा । अ' ख. ग. पाठः

एव सर्वं यज्ञं जानाति ज्ञापयति चान्यानि सर्वाणि । सदस्यस्तुतितया च व्याख्याता ॥

**होतारमेव प्रथमं वृणीते"ऽग्निर्मे होता स मे होते"ति ।**

यजुरिदं प्रश्लिष्टपठितत्वात् । वामदेव ऋषिः होत्राभिधेयः । अग्निः पार्थिवो मे मम होता ऋग्वेदविहितस्य पदार्थस्य मुख्यस्य कर्ता । स्यादिति वाक्यशेषः । यथाचार्येणोक्तं – स मे होता स एव मम होता स्यान्न मानुष इति । आदरार्थमभ्यासः । अतस्तमेव होतारं त्वामुं वृण इति । सर्वत्र चादशब्दप्रयोगे नामनिर्देशः । विभक्तिस्तु यथावाक्यम् । देवदत्तं वृणे प्रार्थये । एतदुक्तं भवति — यः पार्थिवोऽग्निर्देवानां होता तं त्वय्यध्यारोप्य तदधिष्ठितं त्वां होतारं वृण इति । अनेनैव सर्वे वरणमन्त्रा व्याख्याताः ॥

**चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वामुं वृण इति ब्रह्माणम् ।**

**आदित्यो मेऽध्वर्युरित्यध्वर्युम् । पर्जन्यो मे उद्गातेत्युद्गातारम् । आपो मे होत्राशंसिन्य इति होत्रकान् । रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून् । आकाशो मे सदस्य इति सदस्यम् ॥**

ब्रह्मवरणमन्त्रवदितरेषां मन्त्राणां यथालिङ्गं यथावचनं च वाक्यशेषोऽनुषक्तव्यः सामर्थ्यात् ॥

**स वृतो जपेद् महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोच इति ॥**

वामदेवार्षं यजुः । यियक्षुरभिधेयः । हे यियक्षो! महद् भूतम् । किं तत् । सामर्थ्यात् दक्षिणा द्रष्टव्या । मे मह्यमवोचः । लोडर्थोऽयं लुङ् । ब्रूहि । भर्गः भजनीयः । अथवा भर्जेरेतद्रूपम् । पापानां भर्जनम् । प्रागुक्तद्रव्यमेव विशेष्यम् । विहितोपायार्जितमित्यर्थः । यशः यशोनिमित्तम् । स्तोमं स्तोमार्हं, स्तुत्यमित्यर्थः । क्लृप्तिं क्लृप्तिसाधनं, सामर्थ्यप्रतिपादकमित्यर्थः । भुक्तिं भोजनसाधनं, पालनसाधनं वा । सर्वं सर्वपुरुषार्थस्यापादकम् । एतदुक्तं भवति — द्वादशशतादिप्रभूतद्रव्यदक्षिणाकल्पं मह्यं ब्रूहि, नाल्पद्रव्यमिति समस्तार्थः ॥

१, 'ताचात्र' ख, ग, पाठः

**अग्निष्टे होता स ते होता अहं ते मानुष इति होता प्रतिजानीते ॥**

वामदेवार्षं यजुरिदम् । यियक्षवोऽभिधेयाः । हे यियक्षो ! अग्निः ते तव होता । यथा त्वयाभ्यर्थितः, तथैव स होता भवतु । अहं ते तव मानुषः मनुष्यो होता । भविष्यामीति वाक्यशेषः । एतदुक्तं भवति — देवानां होता योऽग्निः, स एवास्मीति तद्भावनया तव हौत्रं करिष्यामीति ॥

**चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ।**

**ब्रह्मैवास्मि ॥**

**एवमितरे यथादेशम् ।**

होतुः प्रतिवचनमन्त्रेण इतरे प्रतिवचनमन्त्रा व्याख्याताः । यथालिङ्गं वाक्यशेषोऽनुषक्तव्यः ॥

**तन्मावतु तन्मा विशतु तेन भुक्षिषीयेति च याजयिष्यन् ।**

जपतीति शेषः । वामदेवार्षं यजुरिदम् । अधिक्रियमाणकर्म दैवतम् । तदिति तच्छ्रुतेर्यदध्याहारः । येन कर्मणा याजयिष्यामि, तत् कर्म मा माम् अवतु । अवतिरत्र गत्यर्थः गच्छतु । कर्मगमनेनात्रार्त्विज्ययोग्यत्वं प्रतिपाद्यते । प्रक्रान्ते कर्मण्यार्त्विज्ययोग्यो भूयासमित्यभिप्रायः । तदेव कर्म मा विशतु । प्रवेशनादत्र तदङ्गभूतदक्षिणाद्रव्यप्रवेशो लक्ष्यते । कर्माङ्गभूतं दक्षिणाद्रव्यं मां प्रविशत्वित्यर्थः । तेन द्वितीयार्थे एषा तृतीया । तत्कर्माङ्गभूतं दक्षिणाद्रव्यं भुक्षिषीय भुञ्जीयेत्याशास इत्यर्थः ॥

'को यज्ञ' इत्यादिप्रश्नमन्त्रा वामदेवार्षा निगदव्याख्याताः । सोमप्रवाकोऽभिधेयः । कुत एतत् । 'सोमप्रवाकं परिपृच्छेदि'ति वचनात् ॥

आहिताग्नेरृत्विजः संस्थाजपोत्तरकालं स्वकीये दक्षिणाग्नावाज्याहुतिः कर्तव्या 'एतेनाग्ने' इति ।

**एतेनाग्नेब्रह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा ।**

**उतप्रणेष्यभिवस्योअस्मान्त्संनःसृजसुमत्यावाजवत्या ॥**

( अष्ट० १. अध्या० २. व० ३६. ऋ० १८. )

हिरण्यस्तूप आङ्गिरस ऋषिः । त्रिष्टुप् छन्दः । दक्षिणाग्निर्देवता । एतेन ब्रह्मणा । अन्ननामैतत् । आज्याहुतिलक्षणेनान्नेनाग्ने ! दक्षिण ! वावृधस्व अत्यर्थं वर्धस्व । शक्ती वा । तृतीयैकवचनस्यायं पूर्वसवर्णः । वाशब्दश्चार्थे । शक्त्या च यत् ते तुभ्यं चकृम । करोतिः सामर्थ्याद् दानार्थः । दत्तवन्त इत्यर्थः । विदा वा, अयमपि वाशब्दश्चार्थे । विज्ञानेन यद् वयं दत्तवन्त इत्यर्थः । उतापि च त्वमेवाभिप्रणेषि अभिप्रणयसि होमं करेण प्रापयसीत्यर्थः । कीदृशः । वस्यः वसीयान् वसुमत्तरः । कान् । अस्मान् । एतदुक्तं भवति—त्वां यष्टुं कुतो नः शक्तिर्ज्ञानं वा । त्वदनुग्रहादेव वयं तव होमं कृतवन्तो न स्वमहिम्नेति । अथवोतेत्येतत् प्रणेषीत्यस्मात् परं द्रष्टव्यम् । लट् च लोडर्थे । अभिप्रणेष्युत अभिप्रणय च । एतेन ब्रह्मणात्यर्थं वर्धस्व । प्रापय चास्मानित्यर्थः । किम् । वस्यः । द्वितीयाबहुवचनमेतच्छान्दसम् । वसूनि धनानि चास्मभ्यं देहीत्यर्थः । किञ्च सं नः सृज । सृजिरत्रान्तर्णीतण्यर्थः । संसृज संसर्जय सम्बन्धयास्मान् सुमत्या शोभनया मत्या बुद्ध्या वाजवत्यान्नसहितया । ज्ञानमन्नं चास्माकं जनयेत्यर्थः ॥

एवमनाहिताग्निर्गृह्य "इमामग्ने शरणिं मीमृषो नः" इत्येतयर्चा । ऋचेति चाधिकवचनात् स्नातकादीनामपि लौकिकाग्नौ कर्तव्य इति ।

इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भ्रमिरस्यृषिकृन्मर्त्यानाम् ॥

( अष्ट० १. अध्या० २. व० ३५. ऋ० १६. )

हिरण्यस्तूप ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । इमां शरणिम् । 'शॄ हिंसायाम्' । आत्मनो हिंसां परिचरणाभावकृतां हे अग्ने ! मीमृषः । 'मृष तितिक्षायाम्' इत्यस्य स्वार्थिके णिचि चङि लोडर्थे लुङ् । मृष्य मृष्यस्व । नः अस्माकं स्वभूताम् । कतमाम् । उच्यते । इममध्वानं मार्गं परयज्ञवास्तुलक्षणं, यम् । पञ्चम्यर्थे द्वितीयैषा यस्माद् अगाम गतवन्तो वयं द्रव्यलोभात् । दूराद्, अध्वविशेषणमेतत् । अतो द्वितीयार्थे पञ्चमी । दूरम् । कस्मात् । क्षमेति । उच्यते । यस्मादापिः ज्ञातिस्त्वम् । कीदृशः । पिता सोम्यानां सोमसंवादिनां सर्वयजमानानाम् । किञ्च, भ्रमिरसि लोकत्रयं भ्रमितासि लोकत्रयगन्तासि ।

१. 'म' ख. पाठः. २. 'च मह्यं दे' क. पाठः.

त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः । ऋषिकृत् तमोपनयनद्वारेण दर्शनकृत् मर्त्यानां मनुष्याणाम् । अत एवमुच्यते शरणिं मीमृषो न इति ॥

अथ मधुपर्कमन्त्रा व्याख्यायन्ते । अत्र विष्टरोपवेशने तदाक्रमणमन्त्राः ।

**अहं वर्ष्म सजातानां विद्युतामिव सूर्यः ।**
**इदं तमधितिष्ठामि यो मा कश्चाभिदासति ॥**

'अहं वर्ष्मेति' । वामदेवार्षम् । अनुष्टुप् छन्दः उपवेष्टाभिधेयः । अहं वर्ष्म । वर्ष्मशब्दो वरिष्ठवचनः । वरिष्ठः, भूयासमिति वाक्यशेषः । केषाम् । सजातानां ब्राह्मणादीनामित्यर्थः । विद्युतामिव सूर्यः । विद्युच्छब्देनात्र विद्योतनस्वभावा अग्निचन्द्रादयः पदार्था अभिप्रेयन्ते । यथा सूर्योऽग्निचन्द्रादीनां प्रकाशधर्माणां वरिष्ठः, तद्वत् । यो मा कश्च यः कश्चिच्छत्रुर्माम् । अभिदासति । दसिरुपक्षयार्थः । सामर्थ्यादन्तर्णीतण्यर्थः । आभिमुख्येनोपक्षपयति । इदम्, द्वितीयैकवचनस्य लुक्, लिङ्गव्यत्ययो वा । इमं ते शत्रुमधितिष्ठामि । एतदुक्तं भवति — विष्टरे शत्रुबुद्धिं कृत्वोपवेशने कृते शत्रवो नश्यन्तीत्यभिप्रायः ॥

अथाचमनमन्त्रः —

**अमृतोपस्तरणमसि ।**

वामदेवार्षं यजुः । पीयमानं जलमभिधेयम् । अमृतशब्देनात्र मधुपर्क उच्यते । अमृतस्य मधुपर्कस्योपस्तरणम् । लुप्तोपममेतत् । उपस्तरणमिव । असि । लोडर्थे लट् । भवेत्यर्थः । एतदुक्तं भवति — यथा पुरोडाशादिहविष आज्यमुपस्तरणं, तद्वत् । अथवा अमृतशब्देन पीयमानं जलमेवोच्यते, न मधुपर्कः । उदकनामसु पठितत्वात् । अस्मिन् पक्षे सम्बुद्ध्यन्तं चैतत् । हे अमृत ! जल ! उपस्तरणं भव । कस्य सामर्थ्यान्मधुपर्कस्येति ॥

मधुपर्केक्षणप्रतिग्रहणमन्त्रौ व्याख्यातौ —

'मधुवाता ऋतायते' इति तृचेनावेक्ष्य ।

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः ।**
**मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः मधुद्यौरस्तु नः पिता ।**
**मधुमान् नो वनस्पतिर्मधुमाँ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः ॥**

(अष्ट० १. अध्या० ६. व० ११. ऋ० ३. ७,८.)

गौतमो राहुगण ऋषिः । गायत्री छन्दः । विश्वेदेवा देवताः । मधु वाताः, मधुशब्दो रसविशेषवचनः सन्निह विनियोगसामर्थ्यान्मधुपर्कद्रव्ये वर्तते । वाता वायवः, ऋतायते । ऋतशब्दः कर्मवचनः । श्रौतस्मार्तलक्षणं कर्म कामयमानाय मह्यमित्यर्थः । क्षरन्तीत्युत्तरत्र श्रूयमाणमनुषक्तव्यम् । लंट च लोडर्थे । क्षरन्तु । सिन्धवो नद्यः मधु क्षरन्तु । माध्वीः, मध्वेव माध्वम् । स्वार्थिकस्तद्धितश्छान्दसत्वात् । तद्वत्यो माध्व्यः 'ईद्वनिपोश्छन्दसि' इतीकार-प्रत्ययः । मधुमत्य इत्यर्थः । प्रथमार्थे द्वितीयैषा । ओषधयः सन्तु भवन्तु । नोऽस्माकम् ओषधयोऽपि मधुप्रदा भवन्त्वित्यर्थः । मधु नक्तम् । नक्तमिति नेदमव्ययम् अधिकरणभूताया रात्रेर्वाचकं रात्रेरिहाधिकरणत्वासम्भवात् । किन्तर्हि । प्रथमान्तस्येदं छान्दसं ह्रस्वत्वं नपुंसकलिङ्गत्वं च । साकांक्ष-त्वाच्च अस्तु न इति पदद्वयं सर्वत्रानुषक्तव्यम् । मधु नक्तमस्तु नः मधुशब्दो-ऽन्तर्णीतमत्वर्थो रात्रिविशेषणम् । मधुमती रात्रिरस्तु नः । मधुमत्त्वेन चात्र तद्दातृत्वं लक्ष्यते । रात्रिर्मधुप्रदास्माकं भवत्वित्यर्थः । उत उषसः उषसोऽपि मधुप्रदाः सन्तु । मधुमत् मधुप्रदं पार्थिवं रजः । रजश्शब्दोऽत्र लोकवचनः । 'लोका अपि रजांस्युच्यन्त' इति यास्कवचनात् पृथिवीलोक इत्यर्थः । मधु द्यौरस्तु नः । कीदृशी द्यौः उच्यते । पिता । विवाहकाले 'द्यौरहं पृथिवी त्व'-मिति वरे द्युत्वाध्यारोपात् सर्वमनुष्याणां च वरयितृत्वात् तद्धर्मेणैवैष दिवो व्यपदेशः द्यौः पितेति च । मधुमान्नो वनस्पतिः । वनानां पतिर्वनस्पतिः । वनस्पतिशब्देनात्र सूर्यसाहचर्याचन्द्रमा अभिप्रेतः । वनशब्देन चौषधयः । ओषधीशश्चन्द्रमा इत्यर्थः । मधुमानस्तु भवतु सूर्यः । सूर्योऽपि मधुप्रदोऽस्माकं भवतु । माध्वीर्मधुप्रदा गाव आदित्यरश्मयः, सास्नादिमत्यो वा । भवन्तु नः ॥

अथ मधुपर्कनिमार्जनमन्त्राः —

वसवस्त्वा गायत्रेण छन्दसा भक्षयन्तु ।
रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्तु ॥

आदित्यास्त्वा जागतेन छन्दसा भक्षयन्तु ।
विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्तु ॥

---

१, 'णमाख्यातमनु' ख. ग. पाठः. २. 'ध्वश्च म' क. पाठः.

'वसवस्त्वे'त्यादयश्चत्वारो वामदेवार्षा याजुर्षाः[1] । मधुपर्कोऽभिधेयः । वसवो रुद्रा आदित्या विश्वे देवाः क्रमेण देवताः । हे मधुपर्क ! वसवः पृथिवीस्थानाः प्रातःसवनदेवता वसुसंज्ञा अष्टौ । ते च गायत्रेण छन्दसा, युक्ता इति वाक्यशेषः । तद्योगश्च प्रातस्सवनच्छन्दस्त्वात् । गायत्र्या त्वां भक्षयन्तु प्राश्नन्तु, मया प्राशिष्यमाणमनुजानन्त्वित्यर्थः । रुद्रा अन्तरिक्षस्थाना माध्यन्दिनसवनदेवता एकादश । ते च त्रैष्टुभेन माध्यन्दिनसवनच्छन्दसा युक्ता भक्षयन्त्विति । आदित्याः द्युस्थानाः तृतीयसवनदेवता द्वादश । ते च जागतेन तृतीयसवनच्छन्दसा युक्ता भक्षयन्त्विति । विश्वे देवाः तार्तीयसवनिका एव त्वाम् आनुष्टुभेन छन्दसा युक्ताः भक्षयन्त्विति । ननु विश्वेषां देवानां जगत्या सह सम्बन्धो नानुष्टुभा, 'विश्वान् देवान् जगत्याविवेशे'ति मन्त्रलिङ्गाद्, 'जगतीं विश्वेभ्यो देवेभ्य' इति ब्राह्मणलिङ्गाच्च । सत्यं मन्त्रवर्णो ब्राह्मणवर्णश्च । जगत्या मन्त्रवर्णसम्बन्धा बहवः । अयं तावदेकः—'विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्तु' इति । 'विश्वे त्वा देवा आनुष्टुभेन छन्दसा रोहन्तु तानन्वारोहामि' । अयमपि 'विश्वे त्वा देवा आनुष्टुभेन छन्दसैकलिङ्गेन स्तोमेन वैराजेन साम्नारोहन्तु तानारोहामि वैराज्याय' इत्यपरः विश्वेषां देवानामनुष्टुभा सम्बन्धः । बहुषु मन्त्रवर्णेषु दृश्यमानेषु सत्सु ब्राह्मणवादो नोपलभ्यत इति कुचोद्यमेतत्[2] । अनुष्टुभा च सम्बन्धे ब्राह्मणवादाश्च कल्पनीया[3]ः ॥

उद्गृह्णाति

'भूतेभ्यस्त्वेति' ।

वामदेवार्षं यजुः । उद्गृह्यमाणो रसोऽभिधेयः । भूतेभ्यः । भवन्ति उत्पद्यन्त इति भूतशब्देनात्र चराचराणि अभिप्रेयन्ते । तादर्थ्ये एषा चतुर्थी । चराणाम् अचराणां च भूतानामर्थाय त्वा त्वां हे मधुपर्क !, उद्गृह्णामीति वाक्यशेषः ॥

प्राशनमन्त्रास्त्रयः —

**विराजो दोहोऽसि । विराजो दोहमशीय । मयि दोहः पद्यायै विराजः ॥**

'विराजो दोहोऽसी'त्यादयो वामदेवार्षा याजुषाः । प्राश्यमाना अभिधेयाः । विराट्शब्देनात्रान्नमभिप्रेयते । 'अन्नं वै विराडि'ति लिङ्गात् अन्नस्य

---

१. 'षाः । व', २. 'इत्यचोद्य' क. पाठः. ३. 'या इत्याभिप्रायः' ख. ग. पाठः.

दोहः सारो रसोऽसि। यस्त्वं भवसि, तं त्वां प्राश्नामीति शेषः। विराजः अन्नस्य दोहं रसम्। अशीय, 'अश भोजने', भुञ्जीयेत्यर्थः, मयि। षष्ठ्यर्थे सप्तमीयं मम। विराजो दोहः अन्नस्य रसः। प्राश्यमान इति शेषः। पद्यायै। 'पद गता'-वित्यस्य। पद्या गतिः। गत्यर्थाश्च बुद्ध्यर्थाः। पद्यायै गतये ज्ञानायेत्यर्थः। अस्त्विति वाक्यशेषः। एतदुक्तं भवति — मया प्राश्यमानो रसो मम ज्ञानोत्पादको भवत्विति ॥

**अमृतापिधानमसि ॥**

वामदेवार्षं यजुः। आचम्यमानमुदकमभिधेयम्। अमृत! अपिधानम्। अपिपूर्वो दधातिः प्रच्छादनार्थः। अपिधीयतेऽनेनेत्यपिधानम्। करणे ल्युट् द्रष्टव्यः। अपिधानशब्देन चाभिधारणं लक्ष्यते। शेषो व्याख्यात आचमनमन्त्रेण ॥

द्वितीयाचमनमन्त्रः —

**सत्यं यशः श्रीर्मयि श्रीः श्रयताम् ॥**

'सत्यं यश' इति वामदेवार्षं यजुः। आचम्यमानमुदकमभिधेयम्। सत्यम्। उदकनामैतत्। अन्वाचम्यमानमुदकम्। मयि श्रयतां ममोदरे प्रविशत्विंत्यर्थः। किञ्च यशः प्रख्यातिर्मयि, श्रयतामित्यनुषङ्गः सर्वत्र। श्रीर्विभूतिलक्षणा। श्रीर्विद्यालक्षणा। तथाच श्रूयते — 'ऋचो यजूंषि सामानि सा हि श्रीरमृता सतामि'ति। एतदुक्तं भवति — अनेन पीयमानोदकेन यशस्वी धनवान् वेदत्रयाध्यायी तदर्थज्ञानी च भूयासमिति ॥

जपति —

**हतो मे पाप्मा। पाप्मा मे हतः।**

'हतो मे पाप्मे'ति वामदेवार्षं यजुः। प्राजापत्यमाग्नेयं वैष्णवं वा। मे मम पाप्मा वाचकभेदेनापौनरुक्त्यम् ॥

अथ विशसनानुज्ञानमन्त्रः —

**ओं कुरुत।**

'ओं कुरुत'। वामदेवार्षं यजुः। मधुपर्कदातुः परिकर्मिणोऽभिधेयाः। ओमनुज्ञानाक्षरमिदम्। अनुजानामि पश्वालम्भनमित्यर्थः। कुरुत। सामान्यवाचिना करोतिनात्र सामर्थ्यात् क्रियाविशेषो विशसनं लक्ष्यते।

पशुमालभ्य वपोद्धरणादि कृत्वाङ्गान्युत्कृत्य मे भोजनार्थं हे परिकर्मिणः! कुरुतेत्यर्थः ॥

पशोरुत्सर्गपक्षे जपति —

मातारुद्राणांदुहितावसूनांस्वसादित्यानाममृतस्यनाभिः।

प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट ॥

(अष्ट० ६. अध्या० ७. व० ८. ऋ० १५)

'माता रुद्राणामि'ति। जमदग्निर्भार्गव ऋषिः। त्रिष्टुप् छन्दः। गौर्देवता। अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। या गौः। रुद्राणाम्। रुद्राणामिति निर्देशः सामर्थ्याद्देवावगम्यतां, मन्त्रान्तरे दर्शनाच्च। 'गोमातरो यच्छुभयन्तेऽञ्जिभिरि'ति। दुहिता वसूनां स्वसादित्यानाम्। गोर्वस्वादित्यदुहितृस्वसृत्वे इतिहासो मृग्यः। अमृतस्य। एकवचनं जात्यभिप्रायं प्रदर्शनार्थं च। अमृतानां देवानां मनुष्याणां च। नाभिर्नाभिस्थानीया। यथा नाभिः सर्वप्राणानामाधारभूता, तद्वद् देवानां मनुष्याणां चाधारभूतेत्यर्थः। कथं देवमनुष्याधारत्वं गोरिति चेत्, तदधीनत्वाद् यज्ञस्य यज्ञनिमित्तत्वाद् वृष्टेर्वृष्ट्यधीनत्वाज् जगत्स्थितेः। अथवामृतशब्देनाज्यमभिप्रेयते। 'अमृतं वाज्यमि'ति श्रुतेः। चिकितुषे ज्ञानवते। जनायातिथिप्रभृतये मनुष्याय। निवेद्यत इति वाक्यशेषः। तामिमां गाम्। अनागामनपराधामपापाम्। अदितिमदीनाम् अक्षीणभोगामित्यर्थः। मा वधिष्ट मा हिंसिष्ट हे परिकर्मिणः!। नुशब्दः पादपूरणः। क्षिप्रार्थो वा। एवं युष्मान् प्रत्यहं प्रवोचं प्रब्रवीमि गां मा वधिष्टेति ॥

उत्सिसृक्षोरनुज्ञानमन्त्रः —

ओम् उत्सृजत।

'ओम् उत्सृजत' इति वामदेवार्षं यजुः। परिकर्मिणोऽभिधेयाः। ओम् अनुजानामि पशोरुत्सर्गम्। तस्मादुत्सृजत मोचयत गां हे परिकर्मिण इत्यर्थः ॥

आश्वलायनगृह्योक्तपाकयज्ञेषु कर्मसु।

मन्त्रा ये विनियुक्तास्ते व्याख्याताश्चक्रपाणिना ॥

इति गृह्यमन्त्रव्याख्यायां प्रथमोऽध्यायः ॥

---

१. 'णवत्मी नवभूता' क. पाठः. २. 'म' ख. ग. पाठः.

## अथ द्वितीयोऽध्यायः ।

श्रावण्यां पौर्णमास्यां श्रवणाकर्मेति प्रकृत्य अस्तमिते स्थालीपाकं श्रपयित्वैककपालञ्च पुरोडाशं 'अग्ने नय सुपथाराये अस्मानि'ति चतसृभिः प्रत्यृचं जुहुयात् ।

अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ।
युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥

(अष्ट० २. अध्या० ५. व० १०. ऋ० १.)

आगस्त्यो मैत्रावरुणिः[1] ऋषिः । चतस्रोऽपि त्रिष्टुभः । अग्निर्देवता । हे अग्ने ! अस्मान् नय प्रापय । सुपथा शोभनेन मार्गेण श्रौतस्मार्तलक्षणेन । राये । धननामैतत् । द्वितीयार्थे चतुर्थ्येषा । धनम् । देव ! दानादिगुणयुक्त ! । विश्वानि सर्वाणि । वयुनानि । प्रज्ञाननामैतत् । प्रज्ञानानि । सर्वेषां प्राणिनामिति शेषः । विद्वान् जानन् । लोकपालत्वात् सर्वप्राणिनां शुभाशुभवृत्तं[2] जानन्नित्यर्थः । किञ्च युयोधि । यौतिः पृथग्भावार्थः । पृथग्भावय पृथक् कुरु । अपनयेत्यर्थः । अस्मत् अस्मत्तः । किम् । एनः पापम् । किंविशिष्टम् । जुहुराणम् । 'ह्वृ कौटिल्ये' इत्यस्य साभ्यासस्यैतद्रूपम् । अत्यन्तकुटिलम् । अधःपातहेतुभूतमित्यर्थः । वयं च भूयिष्ठामतिशयेन भूयसीं बह्वीमित्यर्थः[3] । नमउक्तिं नम इत्येतामुक्तिम् । अग्नये नम इत्येवमादिकां स्तुतिमित्यर्थः । अथवा नमःशब्दोऽन्ननाम । उक्ति-शब्दोऽपि समवायवचनः 'उच समवाये' इति । हविर्लक्षणेनान्नेन समवायः सङ्गतिर्नमउक्तिः । तां नमउक्तिं हविषां संयोगमित्यर्थः । ते तव विधेम कुर्यामेत्याशास्महे ॥

अग्नेत्वंपारयानव्योअस्मान्त्स्वस्तिभिरतिदुर्गाणिविश्वा ।
पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोः ॥

(अष्ट० २. अध्या० ५. व० १०. ऋ० २.)

अग्ने ! त्वं पारय । हे अग्ने ! । द्वितीये पादे श्रूयमाणोऽतिशब्दः पारये-त्यनेन सम्बन्धयितव्यः । अतिपारय अतिगमय । अतिक्रामयेत्यर्थः । नव्यः । प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यत्तच्छब्दाध्याहारेणैक-

१. 'ण' ग. पाठः. २. 'भाविवृत्तिं जा' घ. पाठः. ३. 'बलिष्ठाभि' ख ग. पाठः.

वाक्यता नेया । यस्त्वं नव्यस्तुत्यः स त्वम् । अस्मान् स्वस्तिभिः अविनाशनैः । कान्यतिपारयाणि । उच्यते । दुर्गाणि दुर्गतिहेतुभूतानि पापानि । विश्वा विश्वानि सर्वाणि । किञ्च पूश्च पृथ्वी । त्वत्प्रसादान्निवासभूतं नगरं विस्तीर्णमसम्बाधम् । अस्त्विति वाक्यशेषः । बहुला न उर्वी उर्वी च बहुलास्माकमस्तु । उर्वीशब्देनात्र सस्यसम्पन्ना पृथ्वी अभिप्रेता । सा च बहुला बह्वी प्रभूता । अथवा बहुला बहुरा बहून् भोगान् रातीति बहुरा । रातेर्दानार्थस्य रेफस्य लत्वापत्त्या रूपम् । बहूनां भोगानां दात्री प्रसवित्रीत्यर्थः । किञ्च भवा तोकाय तनयाय । द्वे अप्यपत्यनामनी । अतः पौनरुक्त्यपरिहारार्थं पुत्रविषयमेकं पौत्रविषयमपरं द्रष्टव्यम् । एकवचनं च जात्यभिप्रायम् । अस्मत्पुत्रेभ्यः अस्मत्पौत्रेभ्यश्चेत्यर्थः । शंयोः । उत्पन्नानां रोगादीनां शमनं शमित्युच्यते । उत्पत्स्यमानादीनां भयानां च पृथग्भावनं योरित्युच्यते । रोगादीनां प्रागभावं प्रध्वंसाभावं च सम्पादयेत्यर्थः ॥

अग्ने॒ त्वम॒स्मद्यु॑यो॒ध्यमी॑वा॒ अन॑ग्नित्रा अ॒भ्यम॑न्त कृ॒ष्टीः ।

पुन॑र॒स्मभ्यं॑ सुवि॒ताय॑ देव॒ क्षां विश्वे॑भिर॒मृते॑भिर्यजत्र ॥

(अष्ट० २. अध्या० ५. व० १०. ऋ० ३.)

अग्ने त्वम् । हे अग्ने ! त्वम् । अस्मत् अस्मत्तः । युयोधि पृथक्कुरु । अपगमयेत्यर्थः । किम् । अमीवाः रोगजातीः । किंविशिष्टाः । अनग्नित्राः । अग्निं त्रायन्त इत्यग्नित्राः तदितरेऽनग्नित्राः । औदरस्याग्नेरपालयित्रीः उदराग्निमान्द्यकारिणीरित्यर्थः । अभ्यमन्त । अत्रैकवाक्यतायै यत्तदध्याहारः । या अभ्यमन्त । 'अम रोगे' । आभिमुख्येन रुजन्ति पीडयन्तीत्यर्थः । कृष्टीः मनुष्यनामैतत् । मनुष्यजातीः । ता अमीवाः अस्मत्तः युयोधि । पुनः रोगापनुत्त्युत्तरकालम् । अस्मभ्यं सुविताय सुगमनाय यथेष्टप्रचाराय । हे देव! दानादिगुणयुक्त! । यजत्र! यष्टव्य! । क्षां पृथिवीनामैतत्, क्षयन्त्यस्यां भूतानीति । पृथिवीं, सस्यसम्पन्नामिति शेषः । विश्वेभिरमृतेभिः । सहयोगलक्षणैषा तृतीया । सर्वैर्देवैः सह । अस्मभ्यमिति सम्प्रदानश्रुतेः क्षामिति च कर्मश्रुतेर्योग्यक्रियापदाध्याहारः । अस्मभ्यं पृथिवीं देहीति ॥

१. 'हिपत्सूनां रोगादीनां भ', २. 'त्रा न अमित्राः अन' घ. पाठः.

पाहिनोअग्नेपायुभिरजस्रैरुतप्रियेसदनआशुशुक्वान् ।

मातेभयंजरितारंयविष्ठनूनंविदन्मापरंसहस्वः ॥

(अष्ट० २. अध्या० ५. वर्ग० १०. ऋ० ४.)

पाहि नो अग्ने । हे अग्ने! । नः अस्मान् । पाहि रक्ष । पायुभिः पालनैः सर्वप्रकारैः । अजस्रैः अविच्छिन्नैः । कैः । सामर्थ्यात् ज्वालासमूहैः । अथवा अजस्रैरिति पायुविशेषणम् । अविच्छिन्नैः पालनैरिति । उत अपि । प्रिये सदने स्थाने । आशुशुक्वान् । 'शुच दीप्तौ' । वर्तमाने क्वसुर्द्रष्टव्यः । आभिमुख्येन मर्यादया वा दीप्यत् अत्यर्थं दीप्यमानस्त्वमित्यर्थः । किञ्च मा ते तव स्वभूतम् । जरितारम् । स्तोतृनामैतत् स्तोतारम् । हे यविष्ठ! युवतम! । भयम् । बिभेत्यस्मादिति भयशब्देन पापमुच्यते । वाङ्मनःकायकृतं त्रिप्रकारं पापम् । मा विदत् । विन्दतेर्लाभार्थस्यैतद्रूपम् । मा प्रापत् । मा गमदित्यर्थः । नूनम् इदानीं इह लोक इत्यर्थः । मा च अपरम् अपरस्मिन्नागामिनि अमुष्मिन् लोक इत्यर्थः । एतदुक्तं भवति — तव स्तोतारं सन्तमुभयोर्लोकयोः पापं माभिभवत्विति । हे सहस्वः! बलवन्! ॥

पाणिनैककपालम् ।

अच्युताय भौमाय स्वाहेति ।

वामदेवार्षं यजुः । अग्निर्देवता, अनादिष्टदेवतात्वात् । अच्युताय । च्युतिर्नाशः तद्रहिताय । अनाशाय नित्यायेत्यर्थः । भौमाय । भौमशब्देनात्राग्निरभिप्रेयते भूमेरधिष्ठातृत्वात् । पार्थिवायाग्नय इत्यर्थः । स्वाहेत्युक्तार्थम् ॥

'मानो अग्नेऽवसृजो अघाये'त्येनमाशयेनाभिजुहोति—

मानोअग्नेवसृजोअघायाविष्यवेरिपवेदुच्छुनायै ।

मादत्वतेदशतेमादतेनोमारीषतेसहसावन्परादाः ॥

(अष्ट० २. अध्या० ५. व० १०. ऋ० ५.)

अगस्त्यस्य मैत्रावरुणेरार्षम् । त्रिष्टुप् छन्दः । अग्निर्देवता । हे अग्ने! । नः अस्मान् मा अवसृज । अवपूर्वः सृजिर्दानार्थः । मा दाः । अघाय पापाय ।

१. 'माभ' ख. पाठः.

अविष्यवे । 'विष्लृ व्याप्ता[१]वि'त्यस्य भावप्रत्ययान्तस्य क्यच्प्रत्यये तदुपरि उप्रत्यये भावप्रत्ययलोपे च विष्युरिति रूपं भवति । व्याप्तिकाम इत्यर्थः । तद्विपरीतोऽविष्युः तस्मै अविष्यवे । अस्मद्व्याप्तिमनिच्छते । असत्समृद्धिमसहमानायेत्यर्थः । रिपवे शत्रवे । किञ्च दुच्छुनायै । दुच्छुनाशब्दो दुर्भिक्षवचनः । दुर्भिक्षाय । अथवा शुनमिति सुखनाम । दुश्शुनं दुच्छुना वर्णव्यापत्तिर्द्रष्टव्या । असुखमित्यर्थः । तस्मै । अस्मान् मावसृज इत्यनुषङ्गः । एतदुक्तं भवति — पापानामस्मत्समृद्धिमसहमानानामस्मच्छत्रूणां च दुर्भिक्षमसुखं वास्मान्मा जीगम इति । किञ्च मा दत्वते दन्तवते । दशते खादते । अदते भक्षयते । कस्मै । सामर्थ्याद् व्याघ्रादिकाय प्राणिने । परादा इति मन्त्रान्ते श्रूयमाणमाख्यातमिहानुषक्तव्यम् । अथवा मा अदते दन्तवर्जिताय प्राणिने । नः अस्मान् । मा च रिषते हिंसते करचरणादिभिः । हे सहसावन्! । सह इति बलनाम । तस्मात् प्रथमैकवचनस्य स्थाने सुपांसुलुगित्याकारे कृते तस्माचोपरि मतुप्प्रत्यये कृते संबुद्धौ सहसावन् इति रूपं भवति । सहस्वन्! बलवन्नित्यर्थः । परादाः । पराशब्दोऽत्र धात्वर्थानुवादी लम्बते प्रलम्बत इति यथा । मा दा इत्यर्थः । एतदुक्तं भवति — दंशनप्रधानानां निगरणप्रधानानां करचरणादिभिर्हिंसाप्रधानानां च वशमस्मान् मा जीगम इति ॥

शन्नो भवन्तु वाजिनो हवेष्वित्यक्ताः धाना अञ्जलिना जुहोतीत्यनुषङ्गः ।

शंनोभवन्तुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः ।

जम्भयन्तोहिंवृकंरक्षांसिसनेम्यस्मद्युयवन्नमीवाः ॥

(अष्ट० ५. अध्या० ४. व० ५. ऋ० ७.)

वसिष्ठस्यार्षम् । त्रिष्टुप् छन्दः । देवाश्वाभिधेयाः । शम् । सुखनामैतत् । वाजिनां च साध्यविशेषणमेतत् । सुखाः नः अस्माकं भवन्तु । के । वाजिनः । ते देवाश्वाः । हवेषु आह्वानेषु सत्सु, स्तूयमानाः सन्त इत्यर्थः । देवताता । यज्ञनामैतत् । यज्ञे । मितद्रवः । मितमल्पं पदानि न्यस्यन्तो द्रवन्ति ये ते मितद्रवः । लघुगमनाः शीघ्रगतय इत्यर्थः । स्वर्काः । अञ्चतेर्गत्यर्थस्यार्चतेर्वा पूजार्थस्यार्कशब्दः । सुगमनाः स्वर्चना वा । कल्याणगतयः कल्याणस्तुतयो वेत्यर्थः । किञ्च जम्भयन्तः प्रतिबध्नन्तः । हिंसाकर्मा वा । जम्भयन्तः

१. 'पेवि', २. 'रद्य', ३. 'णामवलभं दु'; ४. 'वताश्वा' घ. पाठः.

हिंसयन्तः । कम् । अहिं सर्पम् । वृकं श्वानं व्यालं वा । रक्षांसि च । सनेमि । पुराणनामैतदन्यत्र । इह तु पदान्तरसम्बन्धसामर्थ्यात् क्षिप्रार्थम् । क्षिप्रम् । अस्मत् अस्मत्तः । युयवत् । यौतिः पृथग्भावार्थोऽन्तर्णीतण्यर्थश्च । पृथग्भावयन्तु अस्मत्सकाशादपनयन्त्वित्यर्थः । न केवलं सर्पादीन् । किं तर्हि । अमीवाः रोगान् हिंसितव्यान् । स्त्रीलिङ्गनिर्देशो जात्यभिप्रायः । रोगजातीरित्यर्थः ॥

अथ सर्पबलौ बलिहरणमन्त्रः[१]—

सर्पदेवजनेभ्यः स्वाहेति ॥

वामदेवार्षं यजुः । सर्पदेवमनुष्या अभिधेयाः । सर्पाश्च देवाश्च जनाश्च सर्पदेवजनाः । सर्पाः नागाः । देवा अमराः । जना मनुष्याः । तेभ्यः स्वाहा हुतमस्तु ॥

हुत्वा नमस्करोति —

ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति ॥

ये सर्पाः पार्थिवाः इति वामदेवार्षं यजुः । सर्पदेवत्यम् । ये सर्पाः ये नागाः । पार्थिवाः पृथिव्यां भवाः । ये च आन्तरिक्ष्याः अन्तरिक्षे भवाः । ये दिव्याः दिवि भवाः । दिश्याः दिक्षु भवाः । तेभ्यः सर्वेभ्य इमं बलिमाहार्षम् आहृतवानस्मि । प्रदत्तवानस्मीत्यर्थः । तेभ्य इमं बलिमुपाकरोमि । उपाकरणं नाम देवतासात्कारः । देवतासात्करोमि । आदरार्थं पुनर्वचनम् ॥

बलेः पश्चादुपविश्य जपति —

सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान् यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा मा हिंसिषुः ॥

सर्पोऽसीत्यादि वामदेवार्षं यजुः । सर्पदैवत्यम् । बलिमुपभोक्तुमागतः सर्पः प्रार्थ्यते । यस्त्वं सर्पः असि भवसि । सर्पतामधिपतिरसि ये के च प्राणिनः सर्पन्ति तेषां सर्वेषां स्वामी भवसि । अन्नेन मनुष्यांस्त्रायसे रक्षसि । अपूपेन सर्पान् रक्षसि । यज्ञेन देवान् । यज्ञशब्देन यज्ञसाधनं हविरभिप्रेतम् ।

१. कलशात् सक्तूनां दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽपनीय' ख. पाठः.

हविषा देवांस्त्रायसे । तस्मिंस्त्वयि सन्तं मा तव स्तोतारं मामित्यर्थः । त्वयि स्थिताः तव भृत्यभूता इत्यर्थः । सर्पाः मा हिंसिषुः ॥

परिदानमन्त्रः 'ध्रुवान् ते परिददामी'त्यादि ।

ध्रुवान् ते परिददामि ध्रुवाम्ं ते ध्रुवामुं ते परिददामि ॥

वामदेवार्षं यजुरिदम् । ध्रुवसंज्ञः सर्प एव प्रार्थ्यते । हे ध्रुव! ते तुभ्यं मत्पुत्रान् मां च ध्रुवान् परिददामि । परिदानं नाम निक्षेपः । यथा ध्रुवा भवन्ति तथा त्वयि निक्षिपामीत्यर्थः । समाश्रितानां ध्रुव(त्वं) सिध्यति हि । अत एवं प्रार्थ्यते । कं च कं च परिददामीति चेत् । उच्यते । ध्रुव! अमुम् । नामनिर्देशार्थोऽदश्शब्दः । देवदत्तम् । ते तुभ्यम् । परिददामीत्यनुषङ्गः । सर्वत्र मन्त्रादौ मन्त्रान्ते च श्रुतत्वात् । तत्र ध्रुवान् ते परिददामीति सामान्योक्तिः । ध्रुवामुं ते इत्यादिर्विशेषोक्तिः ॥

अथाश्वयुजीकर्मणि स्थालीपाकहोममन्त्रः । आश्वयुज्यां जुहुयुः 'पशुपतय' इत्यादिना ।

पशुपतये शिवाय शङ्कराय पृषातकाय स्वाहा ॥

वामदेवार्षं यजुः । रुद्रो देवता । पशुपतये । पश्यन्तीति पशवः । पशुशब्देनात्र सर्वे प्राणिन उच्यन्ते । पतिशब्दः पालयितृवचनः स्वामिवचनो वा । सर्वेषां प्राणिनां पालयित्रे स्वामिने वा । अथवा पशुशब्दश्चतुष्पात्पशुवचन एव । शिवाय । सुखनामैतत् । सुखाय, नित्यसुखिने । शङ्कराय । शमिति सुखनाम । शं करोतीति शङ्करः तस्मै शङ्कराय, स्तोतॄणां यष्टॄणां च सुखप्रदायेत्यर्थः । पृषातकाय । पृषातकशब्देन पयश्चाज्यं च संसृष्टं हविरुच्यते । तत्सम्बन्धात् तद्वानत्र पृषातकशब्देनोच्यते । तत्सम्बन्धश्चात्र पृषातकहोममन्त्रे पृषातकायेति दर्शनात् । एतदुक्तं भवति — स्थालीपाकहोममन्त्रेऽस्मिन् पशुपतय इत्यादिभिः शब्दैः पृषातकशब्दस्य सामानाधिकरण्यदर्शनात् पृषातकहोममन्त्रे रुद्र एव देवतेति ॥

पृषातकहोममन्त्रः पृषातकमञ्जलिना जुहुयाद् 'ऊनं मे पूर्यतामि'त्यादिना ।

ऊनं मे पूर्यतां पूर्णं मे मोपसदत् पृषातकाय स्वाहा ।

वामदेवार्षं यजुः । रुद्र एव देवता । ऊनम् अपरिपूर्णं वस्तु । मे मम स्वभूतम् । पूर्यतां परिपूर्यताम् । पूर्णं वस्तु मे मम स्वभूतम् । मा उपसदत् ।

सद्रिरूपक्षयार्थः । उपक्षयं मा गमत् । तदर्थं च पृषातकाय पृषातकवते, पृषातकहविष्कायेत्यर्थः । स्वाहेति स्वाहुतं हविर्जुहोमीत्यर्थः ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहा ॥

अथाग्रयणस्थालीपाकहोममन्त्राः सजूर्ऋतुभिरित्यादयो वामदेवार्षाः । त्रीणि यजूंषि । ऐन्द्राग्नं प्रथमम् । वैश्वदेवं द्वितीयम् । द्यावापृथिवीयं तृतीयम् । सजूः । जूतिरत्र प्रीत्यर्थः । समानप्रीतिः सह सम्प्रीयमाणः । अहमिति वाक्यशेषः । केन सह । उच्यते । ऋतुभिः । ऋतुभिः सह सम्प्रीणनं नाम ऋतुषु सुखजीवनम् । न च केवलैः किं तर्हि । सजूर्विधाभिः । विधीयन्तेऽनुष्ठीयन्ते इति विधाः श्रौतस्मार्तलक्षणाः क्रिया इहाभिप्रेयन्ते । ताभिः सह समानप्रीतिः श्रौतस्मार्तलक्षणाः क्रियाः कुर्वन्नित्यर्थः । किञ्च, सजूरिन्द्राग्निभ्याम् । इन्द्राग्निभ्यां च सह सम्प्रीयमाणः । इन्द्राग्नी स्तुवन्नित्यर्थः । स्वाहा । इन्द्राग्निभ्यामित्यत्रापि सम्बध्यते अविशेषादपेक्षितत्वाच्च । उपरितनमन्त्रद्वयमनेनैव व्याख्यातार्थम् । मध्यमे तु मन्त्रे सजूर्विश्वैर्देवैरिति व्यत्ययेन तृतीयया भाव्यम् । स्वाहाशब्दसम्बन्धे तु यथाम्नातं चतुर्थ्यन्तमेव ॥

गृह्यान्तरप्राप्तस्याग्रयणस्थालीपाकशेषभक्षणस्य वैकल्पिकस्य करणपक्षेऽभिमर्शनप्राशनाभ्यालभनमन्त्राः प्राप्नुवन्ति । 'एतेन भक्षिणो भक्षा सर्वत्र नवभोजन' इति वचनात् । तत्र भक्ष्यद्रव्याभिमर्शनमन्त्रः — सव्ये पाणौ कृत्वेतरेणाभिमृशेत् । 'प्रजापतये त्वे'ति ।

प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै ।
मह्यं यशसे मह्यमन्नाद्याय ॥

वामदेवार्षं पुरः । उष्णिक् छन्दः । प्रश्लिष्टपाठाद् यजुर्वा । भक्ष्यद्रव्यमभिधेयम् । हे भक्ष्यद्रव्य! त्वा त्वां गृह्णामि अभिमृशामीत्यर्थः । किमर्थमिति चेत् । मह्यं प्रजापतये । षष्ठ्यर्थ एषा चतुर्थी । मम प्रजापतेः प्रजानां पालयितुः गृहस्थस्येत्यर्थः । श्रियै विभूत्यर्थम् । कीदृशं त्वाम् । ग्रहम् । गृह्यत इति ग्रहः । सव्येन हस्तेन गृहीतम् । नच केवलायै श्रियै, किं तर्हि । मह्यं यशसे मम प्रख्यानार्थं च । मह्यमन्नाद्याय ममान्नाद्यसिद्धये च ॥

'भद्रान्नः श्रेय' इति प्राश्नाति ।

भद्रान्नः श्रेयस्समनैष्ट देवास्त्वया-
वसेन समशीमहि त्वा ।
स नो मयोभूः पितवाविशेह
शन्नो भव द्विपदे शं चतुष्पदे ॥

वामदेव ऋषिः । त्रिष्टुप् छन्दः । भक्ष्यमाणद्रव्यमभिधेयम् । हे पितो । पितुरित्यन्ननाम । तस्य सम्बोधनं पितो इति । हे भक्ष्य ! । त्वयावसेन । अवसशब्दो भक्ष्यवचनः । अवसायवद्वतेरुद्रमृळेति यथा । त्वया भक्ष्येण । कीदृशेन । भद्रात् । तृतीयार्थ एषा पञ्चमी । भद्रेण भजनीयेन त्वया । हेत्वावियं तृतीया । भजनीयेन भक्ष्येण त्वया हेतुना । वः अस्मान् देवाः अग्न्यादयः । श्रेयः कल्याणं समनैष्ट । प्रथमपुरुषस्य स्थाने मध्यमः । लुङ् च लोटस्थाने । सन्नयन्तु सम्यक् प्रापयन्त्वित्यर्थः । तदर्थं च त्वा त्वां समशीमहि । 'अश भोजने' । सम्यक् भक्षयेमेत्याशास्महे । स त्वं नः अस्माकं मयोभूः । मय इति सुखनाम । भवतिरन्तर्णीतण्यर्थः । सुखस्य भावयिता सन् । आविश प्रविश । क विशानि । इह अस्मदीये कुक्षौ । आविश्य च शम् । सुखनामैतत् । सुखं सुखकर इत्यर्थः । भव । नः अस्माकं स्वभूताय द्विपदे । जात्यभिप्रायमेकवचनम् । द्विपादृभ्यश्च । शं सुखो भव चतुष्पदे चतुष्पादृभ्यश्च । एतदुक्तं भवति — त्वद्भक्षणेन हेतुनास्मान् देवाः श्रेयः सन्नयन्तु । भक्षितश्च त्वमस्माकमस्मत्सम्बन्धिमनुष्याणां पशूनां च सुखो भवेति । केचित्तु देवशब्दं पितुविशेषणं मन्यन्ते । तस्मिन् पक्षे देवाः समनैष्टेति बहुवचनमेकवचनस्य स्थाने द्रष्टव्यम् । एवं च योजना — हे पितो ! देव ! येन त्वया भक्षितेन सर्वे प्राणिनो जीवन्ति, यं च त्वां वयं समशीमहि, स त्वमस्मान् श्रेयः सन्नय कुक्षौ च प्रविश्येत्यादि पूर्ववत् ॥

आचम्य नाभिमालभेत 'अमोऽसि प्राणे'ति ।

अमोऽसि प्राण तदृतं ब्रवीमि
अमासि सर्वानसि प्रविष्टः ।
स मे जरां रोगमपनुद्य
शरीरादमा म एधि मा मृथा म इन्द्र ॥

वामदेवार्षम् । त्रिष्टुप् छन्दः । भक्षितद्रव्यमभिधेयम् । स मे जरामित्युत्तरस्मिन्नर्धर्चे तच्छब्दश्रवणात् पूर्वस्मिन्नर्धर्चे यच्छब्दोऽध्याहर्तव्यः । यस्त्वं हे प्राण ! प्राणस्थितिहेतुत्वात् प्राणशब्देनात्र भक्षितः पितुरेवोच्यते । हे पितो ! अमः असि । 'अम रोगे' इत्यस्य कर्तर्यप्रत्ययान्तस्यैतद्रूपम् । रोगकर्ता भवसि । तदृतं ब्रवीमि । रोगकरस्त्वमिति यत्तदेतत् सत्यमेव ब्रवीमि । अमासि । प्रथमैकवचनस्यायमाकारः । अमोऽसीत्यर्थः । दार्ढ्यार्थं पुनर्वचनं गच्छ गच्छेति यथा । सर्वानसि प्रविष्टः । यश्च त्वं सर्वानवयवान् मम प्रविष्टोऽसि । स त्वं मे मम सम्भृतात् शरीरात् जरां वार्धक्यवयःकृतां रोगम् अभक्ष्यभक्षणजं व्याधिं च । अपनुद्य अपगमय्य । अमा मे । तृतीयार्थे एषा चतुर्थी षष्ठी वा । मया सहेत्यर्थः । एधि भव । सर्वदा मत्संयुक्तो भवेत्यर्थः । अथवा अमेति गृहनाम । अस्मिन् पक्षे मे इति सम्बन्धलक्षणा षष्ठी । मम सम्बन्धिनि स्वकीये गृहे भव । मदुदरे तिष्ठेत्यर्थः । स्थित्वा मा मृथाः । 'मृङ् प्राणत्यागे' । इह सामर्थ्यादन्तर्णीतण्यर्थः । मा मारय । मे । द्वितीयार्थे एषा षष्ठी चतुर्थी वा । माम् । हे इन्द्र ! । 'इन्धी दीप्तावि'त्यस्यैतद्रूपम् । सर्वेषां भूतानां दीपयितरित्यर्थः ॥

मार्गशीर्ष्याम् अस्तमिते पायसस्य जुहुयुः 'अप श्वेत पदा जही'ति द्वाभ्याम् ।

अप श्वेत पदा जहि पूर्वेण चापरेण च
सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा ।
न वै श्वेतस्याध्याचारेऽहिर्जघान
किञ्चन श्वेताय वैदार्वाय नमः स्वाहा ॥

वामदेव ऋषिः । अनुष्टुप्गायत्र्यौ । श्वेतो देवता । श्वेतो नाम कश्चित् सर्पराजः । तस्य सम्बोधनं हे श्वेत ! सर्पराज ! । पदा पदेन । किंविशिष्टेन । पूर्वेण चापरेण च । गमनावस्थामभिप्रेत्यैतदुच्यते । पूर्वापरवचनात् पुरुषाकृतिः श्वेत इति गम्यते । उभाभ्यां पादाभ्यामित्यर्थः । अपजहि । किमपहनानि । उच्यते । सप्त च । सप्तसङ्ख्याताश्च । वारुणीः वरुणसम्बन्धिनीः । कास्ताः । स्त्रीलिङ्गसामर्थ्यात् पाशसंहतीः । वारुणान् पाशानित्यर्थः । न चैतावतीः, किन्तर्हि, सर्वाश्च राजबान्धवीः । राजा वरुणः, तत्सम्बन्धिनीः । सर्ववरुणपाशानित्यर्थः । जलवासी हि श्वेतः । अत एवं प्रार्थ्यते जलव्यसनानि नाशयेति । नवै अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दाध्याहारः । यस्य श्वेतस्याध्या-

चारे उपर्यांचारे अनुशासन इत्यर्थः । अहिः सर्पः न जघान न हिंसितवान् न दष्टवानित्यर्थः । किञ्चन किमपि भूतजातम् । वैशब्दः पादपूरणः । तस्मै श्वेताय वैदार्वाय । विदर्वपुत्रो वैदर्वः । वैदर्व एव वैदार्वः । छान्दसो दीर्घः । तस्मै वैदार्वाय । नमः । अन्ननामैतत् । नमो भरन्त एवमसीति यथा । पायस-हविर्लक्षणमन्नम् । स्वाहा स्वाहुतमस्तु जुहोमीत्यर्थः ॥

'अभयं नः प्राजापत्येभ्यो भूयात्' इति अग्निमीक्षमाणो जपति ॥

वामदेवार्षं यजुः आग्नेयम् । अग्निमीक्षमाण इति वचनात् । अनादिष्ट-देवतत्वाच्चाग्नेयत्वम् । हे अग्ने ! नः अस्मभ्यं प्राजापत्येभ्यः । प्रजापतय एव प्राजापत्याः । स्वार्थिकस्तद्धितः । प्रजापतिभ्यः प्रजानां पालयितृभ्यः । गृहस्थेभ्य इत्यर्थः । अभयं भूयात् अभयङ्करो भवेत्यर्थः ॥

'शिवो नः सुमना भवे'ति हेमन्तं मनसा ध्यायेत् ।

वामदेवार्षं यजुः । विनियोगसामर्थ्याद्धेमन्तोऽभिधेयः । हे हेमन्त ! ऋतो ! नः अस्माकं शिवः । सुखनामैतत् । सुखः सुखकरः सुमनाश्च । अस्मदुपरि शोभनमनाश्च भवेति ॥

'स्योना पृथिवी'त्येषा महानाम्नीप्रकरणे व्याख्याता । 'अतो देवा अवन्तु न' इत्येषा स्थालीपाके व्याख्याता ॥

संहाय सौर्याणि स्वस्त्ययनानि च जपित्वेति । अत्र सौर्याणि प्रतिपाद्यन्ते । 'सूर्यो नो दिवः' 'उदुत्यं जातवेदसमि'ति नव, 'चित्रं देवानां' 'नमो मित्रस्य' एतानि सौर्याणि । स्वस्त्ययनानि तु 'अनो भद्रा' इत्येतत् सूक्तं च । 'स्वस्ति नो मिमीतामि'ति 'पराधतो ये दिधिषन्त आप्यमि'त्येतत् सूक्तं च । एतानि त्रीणि स्वस्त्ययनानि । तत्र 'सूर्यो नो दिव' इति पञ्चर्चं गायत्रं सूर्यदैवतं सूर्यपुत्रश्चक्षुर्ददर्श ॥

सूर्योनोदिवस्पातुवातोअन्तरिक्षात् ।

अग्निर्नःपार्थिवेभ्यः ॥

(अष्ट० ८. अध्या० ८. व० १६. ऋ० १.)

सूर्यो नः । दिवः । तात्स्थ्यात् ताच्छब्द्यं मञ्चक्रोशनवत् । द्युस्थेभ्यो भूतेभ्य इत्यर्थः । पातु रक्षतु । वातो अन्तरिक्षात् सूर्यानुज्ञया वातोऽप्यन्त-

---

१. 'पा' क. पाठः २. 'भ्यः पा' ख. पाठः.

रिक्षस्थेभ्यो भूतेभ्योऽस्मान् पात्वित्यनुषङ्गः । अग्निर्नः अग्निरपि नः अस्मान् पार्थिवेभ्यो भूतेभ्यः पातु ॥

जोषासवितर्यस्यतेहरःशतंसवाँअर्हति ।

पाहिनोदिद्युतःपतन्त्याः ॥

(अष्ट० ८. अध्या० ८. व० १६. ऋ० २.)

जोषा सवितः । हे सवितः ! सर्वस्यानुज्ञातः ! सूर्य ! । अथवा देवतान्तरं सविता । अस्मिन् पक्षे सूर्यस्यानुज्ञयेति भाव्यम् । जोषेर्यकारलोपो द्रष्टव्यः । जोषय सेवय अस्मान् । किम् । सामर्थ्यात् पुत्रपश्वन्नाद्यादिभोगान् । यस्य ते तव सवितुः स्वरूपम् । हरः । क्रोधनामैतत् । अवैदिकविषयः क्रोधः । अथवा तेजःशब्दः । 'यत्ते अग्ने हरस्तेनाहमि'ति यथा । सकलजगद्व्यापि तेज इत्यर्थः । शतं बहुनामैतत् । बहूननन्तान् । सवान् । सूयते अस्मिन् सोम इति सवशब्दो यज्ञवचनः । अथवा सवनशब्दस्य यज्ञनाम्नो नकारलोपो द्रष्टव्यः । सवनान् बहून् यज्ञान् । अर्हति पूजयति लभत इत्यर्थः । हरसा चात्र लक्षणया तद्वानेवोच्यते । यस्त्वं हरस्वी इह सोमयागानर्हसि इत्यर्थः । यस्येति श्रुतेस्तच्छब्दोऽध्याहार्यः । स त्वं पाहि रक्ष नः अस्मान् । कुतः । दिद्युतः । वज्रनामैतत् । इह त्वायुधमात्रोपलक्षणं द्रष्टव्यम् । शत्रोः स्वभूतादायुधात् । पतन्त्याः अस्माकमुपरि पतत इत्यर्थः ॥

चक्षुर्नोदेवःसविताचक्षुर्नउतपर्वतः ।

चक्षुर्धातादधातुनः ॥

(अष्ट० ८. अध्या० ८. व० १६ ऋ० ३.)

चक्षुर्नः । चक्षुः सर्ववस्तुदर्शनसमर्थं नयनेन्द्रियं ज्ञानं वा । नः अस्मभ्यं देवः सविता दधातु इत्यपकृष्टव्यम् । सूर्यानुमतो दधातु । चक्षुर्नः अस्मभ्यम् उत पर्वतः पर्वतोऽपि । पर्वतशब्दः शिलोच्चयवचनः मेर्वादिभूधरवचनः । ऋषिर्वा पर्वतः । 'पर्वतनारदौ सोमकाये'ति नारदसाहचर्यात् । अथवा देवतान्तरमेतन्नामकम् । दधात्वित्यनुषङ्गः । सूर्यानुमतः पर्वतोऽप्यस्मभ्यं चक्षुर्ददात्वित्यर्थः । चक्षुः चक्षुरेव धाता देवः दधातु ददातु नः अस्मभ्यम् । सूर्यानुमत एव ॥

चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः ।
संचेदंविचपश्येम ॥

(अष्ट० ८ अ० ८. व० १६. ऋ० ४.)

चक्षुर्नः । चक्षुः दर्शनशक्तिम् । नः अस्माकं स्वभूताय धेहि देहि । चक्षुषो गोलकाभिप्रायमिदं वचनम् । इन्द्रियाधिष्ठानभूताभ्यामक्षिभ्यामित्यर्थः । अथवा चक्षुष इति चतुर्थ्यन्तमृष्यभिधानं द्रष्टव्यम् । अस्मिन् पक्षे न इति बहुवचनमेकवचनस्य स्थाने द्रष्टव्यम् । मह्यं चक्षुर्देहीति । किञ्च विख्यै विविधाख्यानाय नानाविधपदार्थदर्शनाय । तनूभ्यः अत्र तनूशब्दस्य जकारलोपो द्रष्टव्यः । तनूजेभ्यः । अस्मत्पुत्रपौत्रादिभ्य इत्यर्थः । किञ्च इदं कार्यभूतं प्रपञ्चं हे सूर्य! तव प्रसादात् सं च पश्येम । समित्येकीभावे । कारणात्मना त्वया एकमभिन्नं पश्येम । वि च पश्येम विभिन्नं च पश्येम । वीत्यनेकीभावे । कारणात्मना त्वया समस्तं जगद् भिन्नाभिन्नं पश्येमेत्याशास्महे इत्यर्थः ॥

सुसन्दृशंत्वावयंप्रतिपश्येमसूर्य ।
विपश्येमनृचक्षसः ॥

(अष्ट० ८. अ० ८. व० १६. ऋ० ५.)

सुसन्दृशं सुष्ठु सम्यग् भक्तानुग्राहकतया लोकपालतया वा द्रष्टारं शुभाशुभप्रत्यवेक्षितारमित्यर्थः । त्वा त्वां वयं प्रतिपश्येम स्तुतिभिर्हविर्भिश्चाराधयेमेत्यर्थः । अथवा प्रतिपश्येम कारणात्मकत्वेनोपास्महे इत्यर्थः । हे सूर्य! किञ्च विपश्येम विविधं पश्येम । स्तुतिभाक्त्वेन हविर्भाक्त्वेन चेत्यर्थः । नृचक्षसः स्तोतृयष्टृनराणामनुग्रहबुद्ध्या द्रष्टॄन् । कान् । सामर्थ्यादन्यान् देवान् । एतदुक्तं भवति — त्वदनुज्ञयैवान्यानपि देवान् स्तुमो यजामश्चेति ॥

उदुत्यंजातवेदसंदेवंवहन्तिकेतवः ।
दृशेविश्वायसूर्यम् ॥

(अष्ट० १. अ० ४. व० ७. ऋ० १.)

उदुत्यं जातवेदसमिति नव प्रस्कण्वः कण्वपुत्र ऋषिः सर्वा गायत्र्यः । सूर्यो देवता । तच्छन्दपर्यायस्त्यच्छब्दः । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छ-

ब्दोऽध्याहार्यः । यं सर्वे प्राणिनो नमस्यान्ति त्यं तम् । जातवेदसं जातधनं जातप्रज्ञं वा । देवं दानादिगुणयुक्तम् । उद्वहन्ति । के सामर्थ्यादश्वा रश्मयो वा । कीदृशाः । केतवः चिह्नभूताः । अथवा केतुरिति प्रज्ञानाम । सूर्यस्य प्रज्ञानरूपत्वात् तदीयाश्वादीनामपि प्रज्ञानरूपत्वमुपपन्नम् । तथा च भगवता यास्केनोक्तम् — 'आत्मैवैषां रथो भवत्यात्माश्वा आत्मायुधमात्मेषव आत्मा सर्वमि'ति । किमर्थमुद्वहन्ति । दृशे द्रष्टुं दर्शनार्थमित्यर्थः । कस्य । विश्वाय । षष्ठ्यर्थे एषा चतुर्थी । सर्वस्य प्राणिजातस्य । उदिते सूर्ये सर्वं प्राणिजातं द्रष्टुं प्रभवति नानुदिते । कमुद्वहन्ति । सूर्यम् आदित्यम् ॥

अपत्येतायवोयथानक्षत्रायन्त्यक्तुभिः ।
सूरायविश्वचक्षसे ॥

(अष्ट० १. अ० ४. व० ७. ऋ० २.)

अपत्ये । त्ये इत्यस्य पदस्य नक्षत्रसामानाधिकरण्याद् व्यत्ययेन नपुंसकलिङ्गत्वम् । तानीत्यर्थः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यानि रात्रावदृश्यन्त तानि । तायवो यथा । तायुरिति स्तेननाम । चोरा इव । नक्षत्रा नक्षत्राणि अपयान्ति अपगच्छन्ति । अदृश्यतां प्रतिपद्यन्त इत्यर्थः । नच केवलानि, किं तर्हि । अक्तुभिः । रात्रिनामैतत् । सहयोगलक्षणा चैषा तृतीया । रात्रिभिः सह । कुतोऽपयन्ति । सूराय । सूरशब्दः सूर्यशब्दपर्यायः । पञ्चम्यर्थे चतुर्थी । सूर्यात् सूर्योदयोत्तरकालं हि नक्षत्राणि रात्रयश्च न दृश्यन्ते । कीदृशात् सूर्यात् । विश्वचक्षसे सर्वचक्षुषे स्वेन ज्योतिषा सर्वस्य द्रष्टुर्वा लोकपालत्वात् ॥

अदृश्रमस्यकेतवोविरश्मयो जनाँअनु ।
भ्राजन्तोअग्नयोयथा ॥

(अष्ट० १. अ० ४. व० ७. ऋ० ३.)

अदृश्रम् । लडर्थे लुङ् । 'छन्दसि लुङ्लङ्लिटः' (३-४-६) इति कर्मणि च प्रथमपुरुषबहुवचनस्य स्थाने व्यत्ययेनेदमुत्तमस्यैकवचनम् । दृश्यन्ते इत्यर्थः । कुत एतत् । केतव इत्यादिष्वभिहितकर्मत्वनिमित्तायाः प्रथमाया दर्शनात् । के दृश्यन्ते । उच्यते । अस्य सूर्यस्य केतवः रश्मयः प्रज्ञानस्वरूपाः किरणाः । विश्ब्दस्य भ्राजन्त इत्यनेन सम्बन्धः । क दृश्यन्ते । मनुष्यान् जनान् । (अनु) प्रति ।

मनुष्यलोकं व्याप्य स्थिता इत्यर्थः । किं कुर्वन्तः । विभ्राजन्तः । विविधं भ्राजमाना दीप्यमानाः । किमिव । अग्नयो यथा, अग्नय इव । अथवा अदृश्रम् इत्युत्तमपुरुषश्रुतिसामर्थ्याद् रश्मीनां च दर्शनकर्मत्वात् केतव इत्यादिषु द्वितीयार्थे प्रथमा । अदर्शमहमस्य केतून् छन्नान् अग्नीनिव ॥

तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ।

विश्वमाभासिरोचनम् ॥

(अष्ट० १. अध्या० ४. व० ७. ऋ० ४.)

तरणिः । क्षिप्रनामैतत् । क्षिप्रस्त्वम् । विश्वदर्शतः सर्वस्य दर्शनीयो द्रष्टा वा । ज्योतिष्कृत् ज्योतिषां च कर्ता त्वमसि । हे सूर्य ! विश्वं सर्वं जगत् । आभासि । णिज्लोपो द्रष्टव्यः । आभासयसि । रोचनं प्रकाशस्वभावम् ॥

प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ।

प्रत्यङ्विश्वंस्वर्दृशे ॥

(अष्ट० १. अध्या० ४. व० ७, ऋ० ५.)

प्रत्यङ् देवानाम् उदेषीत्यनेन सम्बन्धः । उदेतुश्चेदं सूर्यस्य विशेषणं नोदयक्रियायाः । कुत एतत् । पुल्लिङ्गत्वात् । प्रतीच्यां दिशि सूर्योदयस्यासम्भवात् । प्रत्यङ् उदेषि प्राच्यां दिशि प्रत्यङ्मुखः स्थित्वा त्वमुदेषीत्यर्थः । किमर्थम् । देवानां विशः । साकांक्षत्वात् दृशे इत्येतत् परस्ताच्छ्रुतं सर्वत्रानुषक्तव्यम् । दृशेशब्दो द्रष्टुमित्यस्य स्थाने वर्तते । 'दृशे विख्ये च' (३-४-११) इति तुमर्थे निपातनात् । देवानां स्वभूता या विशः ताः दृशे द्रष्टुम् । पुरस्तादुदितस्य भवतः पश्चादवस्थितान् देवान् द्रष्टुमित्यर्थः । न च देवविश एव केवलाः, किन्तर्हि, प्रत्यङ्ङुदेषि मानुषान् । मनुष्यानपि द्रष्टुम् । प्रत्यङ् विश्वं सर्वं जगद् द्रष्टुम् । स्वर्दृशे । स्वशब्दोऽत्र द्युनामा । द्युलोकं द्रष्टुम् । यावदिदं किञ्चित् पश्चादवस्थितं सर्वं द्रष्टुं सर्वतः पूर्वं प्रत्यङ्मुखस्त्वमुदेषीति समस्तार्थः ॥

येनापावकचक्षसाभुरण्यन्तंजनाँअनु ।

त्वंवरुणपश्यसि ॥

(अष्ट० १. अ० ४. व० ७. ऋ० ६.)

---

१. 'वकम्' ख. क. पाठः. २. 'भगव' ख. ग. पाठः

येनापावक। येन चक्षसा दर्शनहेतुना ज्योतिषा। हे पावक! कृत्स्नस्य जगतः शोधयितरित्यर्थः। भुरण्यन्तम्। गतिकर्मायम्। गच्छन्तं सूर्यम्। जनान् अनु मनुष्यान् प्रति मनुष्यलोकं व्याप्नुवन्तमित्यर्थः। त्वं हे वरुण! पश्यसि। यच्छब्दश्रुतेः साकाङ्क्षत्वाद् वाक्यस्य तद् वयं स्तुम इति वाक्यशेषः। एवमत्र सत्यपि वरुणस्यामन्त्रणे, अथापि प्रत्यक्षकृता हि स्तोतारो भवन्ति। परोक्षकृतानि स्तोतव्यानीत्यनेनैव न्यायेन सूर्यस्यैव प्राधान्यं न वरुणस्य। सौर्यं हीदं सूक्तं न वारुणम्। अथवा सूर्यस्य सूक्तभाक्त्वाद् वरुणेति क्रियायोगात् सूर्यस्यैवामन्त्रणम्। भुरण्यच्छब्दः क्षिप्रकारिवचनः क्षिप्रनामसु भुरण्यच्छब्दस्य पाठात्। सर्वनाम्नां चाख्यातजत्वाद् भुरण्यतिः क्षिप्रार्थोऽपि न गतिकर्मैवेति गम्यते। हे पावक! येन चक्षसा अनुग्रहात्मकेन दर्शनेन भुरण्यन्तं क्षिप्रं यागान् स्तुतीश्च कुर्वन्तं मनुष्यं जनान् अनु मनुष्यान् प्रति वर्तमानं मनुष्यमध्यगतमित्यर्थः। त्वं हे वरुण! ज्योतिषा कृत्स्नस्य जगत आवारितः! सूर्य! पश्यसि। साकाङ्क्षत्वात् तत् ते वयं स्तुम इति वाक्यशेषः। अथवा तेनास्मानपि पश्येति वाक्यशेषः। अथवा तच्छब्दमात्रमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या, येन चक्षुषा भुरण्यन्तं पश्यसि तेन प्रत्यङ्मुख उदेषीति। परया वा। येन चक्षसा भुरण्यन्तं पश्यसि तेन विद्यामेषीति॥

विद्यामेषिरजस्पृथ्वहामिमानोअक्तुभिः।
पश्यन्जन्मानिसूर्य॥

(अष्ट० १. अध्या० ४. व० ८. ऋ० ७.)

विद्यामेषि। द्यां द्युलोकम्। व्येषि विविधं गच्छसि। रजः पृथु। रजश्शब्दोऽत्र लोकवचनः सामर्थ्यादन्तरिक्षलोके वर्तते। पृथु विस्तीर्णं चान्तरिक्षम्। अहा अहानि। मिमानः कुर्वन्। केन। अक्तुभिः। अक्तुशब्दोऽयं ज्योतिर्वचनः। 'अक्तुनाह्नां वयुनानि साधदि'ति यथा। आत्मीयैर्ज्योतिर्भिः रश्मिभिर्हि सूर्योऽहानि करोति। अथवा अक्तुशब्दो रात्रिवचनः। सहयोगलक्षणैषा तृतीया। अक्तुभिः रात्रिभिः सह। केन मिमानः। सामर्थ्यादुदयास्तमयाभ्याम्। उदयेन हि सूर्योऽहानि करोति, अस्तमयेन रात्रिम्। पश्यन् अनुग्राहकतया, अनुगृह्णातीत्यर्थः। जन्मानि जननधर्माणि भूतजातानि, हे सूर्य!॥

सप्तत्वाहरितोरथेवहन्तिदेवसूर्य ।

शोचिष्केशंविचक्षण ।

(अष्ट० १. अध्या० ४. व० ८. ऋ० ८.)

सप्तत्वा । सप्त सप्तसंख्याकाः । त्वा त्वाम् । हरितः । हरिच्छब्दो हरितशब्दपर्यायो नीलवर्णवचनः । हरितवर्णा बडबाः । रथे । सप्तमीनिर्देशात् स्थितमिति वाक्यशेषः । रथे स्थितं वहन्ति हे देव! सूर्य! । कीदृशम् । शोचिष्केशम् । शोचिर्दीप्तिः रश्म्याख्या केशस्थानीया यस्य स शोचिष्केशः तं शोचिष्केशं दीप्तिरश्मिकमित्यर्थः । हे विचक्षण! सर्वस्य विविधं द्रष्टः! ॥

अयुक्तसप्तशुन्ध्युवःसूरोरथस्यनप्त्यः ।

ताभिर्यातिस्वयुक्तिभिः ।

(अष्ट० १. अध्या० ४. व० ८. ऋ० ९.)

अयुक्त । ताभिर्यातीति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । याः अयुक्त युक्तवान् । सप्तसंख्या बडबाः । शुन्ध्युवः । शुन्ध्युरादित्यो भवति शोधनात्, तस्य स्वभूता आत्मन एव स्वभूता इत्यर्थः । अथवा उदकचरो मद्गुनामा यः शकुनिः स शुन्ध्युरुच्यते । द्वितीयाबहुवचनं चेदम् । शुन्ध्युव इव शुन्ध्युवः । मद्गुसदृशीरित्यर्थः । क्रियाशब्दो वा शुन्ध्युशब्दः । शोधयित्रीः शुन्ध्युवः । को युक्तः । उच्यते । सूरः सूर्यः । रथस्य नप्त्यः । नपाच्छब्दस्यापत्यनाम्नोऽयं नप्त्यादेशः । रथस्यापत्यभूताः । अत्रेतिहासमाचक्षते—पुरा किलानश्वः सूर्यस्य रथ आसीत् । सोऽह्नास्तं गन्तुं यावन्नाशक्नोत् तं सूर्योऽह्नास्तं ग(च्छ?न्तु)मैच्छत् । तस्माद्रथात् सप्त हरितवर्णा बडबा अजायन्त । ता एनमह्नास्तं नयन्तीति । तदेतदुक्तं रथस्य नप्त्योऽपत्यभूता इति । अथवा रथस्येति सप्तम्यर्थे षष्ठी । अयुक्तेत्येतेन सम्बन्धः रथेऽयुक्तेति । नप्त्य इति तु नप्तृशब्दपर्यायः प्रथमैकवचनान्तः सूर्यस्य विशेषणार्थः नप्ता इति । कस्य नप्ता सामर्थ्यादपाम् । अद्भ्यो हि वैद्युताग्निर्जायते । अग्नेः सूर्यः । 'अग्नेर्वादित्यो जायते' इति श्रुतेः । अथवा नप्त्य इति क्रियाशब्दो द्वितीयाबहुवचनान्तो बडबानामेव विशेषणार्थः । न न पतन्ति पतन्त्येव यास्ता नप्त्यः । सततगामिनीरित्यर्थः । ताभिर्याति । कीदृशीभिः । स्वयुक्तिभिः । याः स्वयमेव रथे युज्यन्ते ताः स्वयुक्तयः, ताभिः स्वयुक्तिभिः ॥

चि॒त्रंदे॒वाना॒मुद॑गा॒दनी॑कं॒चक्षु॑र्मि॒त्रस्य॒वरु॑णस्या॒ग्नेः ।
आप्रा॒द्यावा॑पृथि॒वीअ॒न्तरि॑क्षं॒सूर्य॑आ॒त्माजग॑तस्त॒स्थुष॑श्च ॥

(अष्ट० १. अध्या० ८. वर्ग० ७. ऋ० १.)

चित्रं देवानाम् । कुत्स आङ्गिरस ऋषिः । त्रैष्टुभं[1] सौर्यम् । चित्रं प्रातर्मध्यन्दिनापराह्णेषु नानारूपत्वाद् विचित्रं पूज्यं वा । किं तत् सामर्थ्या-ज्ज्योतिः । किंरूपम् । उच्यते । देवानां रश्मीनाम् अनीकं समूहं रश्मिसमूह-रूपमित्यर्थः । चक्षुः चक्षुःस्थानीयं प्रकाशकत्वात् । कस्य । मित्रस्य वरुणस्याग्नेः । मित्रादिग्रहणं चात्र प्रदर्शनार्थं द्रष्टव्यम् । देवानां मनुष्याणां च प्राणिनां चक्षुःस्थानीयमित्यर्थः । उदगात् उद्गतम् । उद्गम्य च आप्राः । 'प्रा पूरणे' । लट्स्थाने लुङ् । आपूरयति । किम् । (द्यावापृथिवी) । द्यावापृथिव्यौ च अन्तरिक्षं च । केन । सामर्थ्यात् स्वरश्मिभिः । कतमदिदमीदृशं ज्योतिः । उच्यते । योऽयं सूर्यो नाम आत्मा आत्मशब्दः कारणवचनः । कारणमस्य जगतः जङ्गमस्य तस्थुषश्च स्थावरस्य च ॥

सूर्यो॑दे॒वीमु॒षसं॒रोच॑माना॒मर्यो॒नयोषा॑म॒भ्ये॑ति॒पश्चा॑त् ।
यत्रा॒नरो॑देव॒यन्तो॑यु॒गानि॑वित॒न्वते॒प्रति॑भ॒द्राय॑भ॒द्रम् ॥

(अष्ट० १. अध्या० ८. व० ७. ऋ० २.)

सूर्यो देवीमुषसं रोचमानां मर्यो न योषाम् । यथा कश्चिन्मनुष्यः काञ्चित् स्त्रियं यान्तीं पश्चादभिगच्छति एवमभ्येति अभिगच्छति । पश्चादुषस्युदितायां पश्चादुद्गच्छतीत्यर्थः । कस्मिन् काले । उच्यते । यत्रानरः मनुष्याः देवयन्तः सूर्यमेव देवं यष्टुमिच्छन्तः । युगानि । युगशब्दः कालवचनः । सामर्थ्यादग्नि-होत्रकालेषु वर्तते । प्रतीत्येतेन च सम्बध्यते । अग्निहोत्रकालान् प्रति । अग्नि-होत्रकाले । उपोदयं व्युषित उदिते वेत्येवमादिष्वित्यर्थः । वितन्वते विततं कुर्वन्ति । भद्राय तत्फलाय भद्रमग्निहोत्रलक्षणं कर्म । यदा स्वेषु मनुष्या अग्नि-होत्रं जुह्वति[2] तदा सूर्य उषसः पश्चादभ्येतीति समस्तार्थः ॥

भ॒द्राअश्वा॑ह॒रितः॒सूर्य॑स्य॒चि॒त्राएत॑ग्वाअनु॒माद्या॑सः ।
न॒मस्य॑न्तो॒दिव॒आपृ॒ष्ठम॑स्थुः॒परि॒द्यावा॑पृथि॒वीय॑न्ति॒सद्यः॑ ॥

(अष्ट० १. अध्या० ८. व० ७. ऋ० ३.)

---

१. 'त्रिष्टुप् सौ', २. 'हमि' ख. ग. पाठः.

भद्रा अश्वा । हरितः हरितवर्णाः सूर्यस्य स्वभूताः । चित्रोः विचित्राः पूज्या वा । एतग्वाः । एतग्व इत्यश्वनामान्यत्र । इह त्वश्वा इति पौनरुक्त्यप्रसङ्गात् क्रियाशब्दः । एतद्गामिनः अतीतेष्वहःस्वस्यैव मार्गस्य गन्तार इत्यर्थः । अनुमाद्यासः । मदतिरर्चतिकर्मा । अनुस्तुत्याः । नमस्यन्तः पूजयन्तः सूर्यं दिवः पृष्ठमुपरिभागं आस्थुः आतिष्ठन्ति । आस्थाय च द्यावापृथिवी उभे अपि परियन्ति सद्यः समान एवाहनि ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।

यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥

(अष्ट० १. अध्या० ८. व० ७. ऋ० ४.)

तत्सूर्यस्य देवत्वं तन्महित्वं तच्च महत्त्वम् । तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यद् मध्या मध्ये । कर्तोः । कर्मनामैतत् । कृष्यादेः कर्मणः । अपरिसमाप्तेष्वेव प्रारब्धेषु कृष्यादिषु कर्मस्वित्यर्थः । विततम् आत्मीयं रश्मिजालं विस्तीर्णम् । सञ्जभार सद्य एव संहरति । अतिमहत्त्वाद्धीदमन्यत्र दुरुपसंहारम् । सूर्यादन्यः सद्य एव संहर्तुं न शक्नोतीत्यर्थः । कदा पुनरुपसंहरति । उच्यते । इत् पादपूरणः । यदास्तमयानन्तरं मेरुमन्तरेण गन्तुमयुक्त युङ्क्ते हरितः स्वकीया बडवाः । क । सधस्थात् । सह तिष्ठन्ति यत्राश्वाः स सधस्थो रथोऽभिप्रेतः । सप्तम्यर्थे चैषा पञ्चमी । अश्वानां सहस्थाने आत्मीये रथे इत्यर्थः । आत् तदैव च रात्री शर्वरी । वासः । वासश्शब्दोऽत्र क्रियावचनैः अभिप्रेतः 'वस आच्छादने' इत्यस्य वस्त्रवचनो वा, सामर्थ्यात् कृष्णं वास आह । तत्सारूप्याच्चात्र तमसि प्रयुज्यते । कृत्स्नस्य जगत आच्छादयितृ कृष्णवासःस्वरूपं वा तमः । तनुते विस्तारयति । सिमस्मै । समसिमेत्येतौ सर्वशब्दपर्यायौ । सप्तम्यर्थे चात्र चतुर्थी । सर्वस्मिन् जगति ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।

अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥

(अष्ट० १. अध्या० ८. व० ७. ऋ० ५.)

१. 'श्राः पू' ख. न. पाठः. २, 'नः व' घ. ङ. पाठः,

तन्मित्रस्य । तच्छब्दश्रुतेर्योग्यक्रियासम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदिदं प्रातः प्रागुदयाद् दीप्तिवर्जितं प्रकाशमात्रसम्बन्धात्, तन्मित्रस्य वरुणस्य । मित्रवरुणग्रहणमत्र प्रदर्शनार्थं द्रष्टव्यम् । देवानां मनुष्याणां च प्राणिनाम् । अभिचक्षे अभिदर्शनाय । सूर्यः आत्मनो रूपं कृणुते करोति । द्योरुपस्थे दिवः समीपे । द्युलोकस्य समीपे पूर्वस्मिन् भाग इत्यर्थः । अनन्तमन्यत् अन्यत्तु मध्येऽह्नः अनन्तम् अत्यन्तं महद् रुशत् अत्यन्तदीप्तम् । अस्य सूर्यस्य स्वरूपम् । पाजः । बलनामैतत् । सामर्थ्यादन्तर्णीतमत्वर्थम् । बलवत्, अत्यन्ततीव्रत्वाद् दुरभिभवमित्यर्थः । कृष्णमन्यत् अन्यदपि कृष्णं तमोलक्षणमस्य रूपम् । हरितः अश्वाः । सम्भरन्ति मेरुमुत्तरेण सूर्यं नयन्तः प्रकल्पयन्ति । मेरुणा हि व्यवधीयमानः सूर्यस्तमः करोति । अतस्तस्यैव देशान्तरस्थस्य तद्रूपमिति व्यपदिश्यते । मेरुणा च व्यवधीयमानाः सूर्यस्याश्वाः कुर्वन्ति । अत एतदुच्यते कृष्णमन्यद्धरितः सम्भरन्तीति ॥

अद्यादेवाउदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥

(अष्ट० १. अध्या० ८. व० ७. ऋ० ६.)

अद्या देवाः । सौर्यत्वादस्य मन्त्रस्य देवा इति रश्मय उच्यन्ते नान्ये । अद्य हे देवाः! सूर्यस्य रश्मयः! । उदिता सूर्यस्य, सूर्यस्योदये सूर्योदयवेलायाम् । अंहसः पापादधर्माख्यात् । निष्पिपृता । 'पृ पालनपूरणयोः' इत्यस्यैतच्छान्दसं ह्रस्वत्वम् । निश्चयेन पालयतास्मान् । न च केवलादंहसः, किं तर्हि, निरवद्यात् । अवद्यं गर्ह्यमुच्यते । अन्यस्मादपि गर्ह्यान्निश्चयेनास्मान् पालयत । सूर्यरश्मिप्रार्थनया सूर्य एव प्रार्थ्यत इति मन्तव्यं रश्मिरश्मिमतोरभेदात् । तच्छब्दश्रुतेर्योग्यक्रियासम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यन्मया प्रार्थितमंहसोऽवद्याच्च निष्पिपृतेति, तन्नः अस्मत्प्रार्थितं हे सूर्य! त्वत्प्रसादादेव मामहन्ताम त्वमेव पूजयन्तु अनुमन्यन्तामित्यर्थः । के । मित्रः वरुणः अदितिः देवमाता सिन्धुः पृथिवी उत अपि द्यौः । एवमत्र सूर्यस्य प्राधान्यान्मित्रादीनामप्राधान्यात् कृत्स्नस्य सूक्तस्य सौर्यत्वं द्रष्टव्यम् । अयं न्यायः सार्वत्रिको द्रष्टव्यः ॥

नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ।

दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत ॥

(अष्ट० ७. अध्या० ८. व० १२. ऋ० १)

नमो मित्रस्येति सूक्तं द्वादशर्चं जागतं सौर्यं सूर्यपुत्रोऽभितपा ददर्श । दशमी त्रिष्टुप् । नमो मित्रस्य । नमः । अन्ननामैतत् । अन्नं चरुपुरोडाशादिलक्षणम् । सपर्यतेत्यनेन सम्बन्धः । सपर्यतिः परिचरणकर्मा सामर्थ्यादिह करोत्यर्थः । हे मदीया ऋत्विजः ! चरुपुरोडाशादि हविर्लक्षणमन्नं सपर्यत कुरुत । निर्वापादिसंस्कारैरुत्पादयतेत्यर्थः । कस्मै । सूर्याय । तादर्थ्यचतुर्थ्यन्तमेतत् । सूर्यस्यार्थाय । किंविशिष्टाय । उच्यते । मित्रस्य वरुणस्य चक्षसे । मित्रवरुणग्रहणमत्र प्रदर्शनार्थं द्रष्टव्यम् । मित्रादिदेवानां मनुष्याणां चान्येषां च प्राणिनां चक्षसे दर्शनहेतवे । द्रष्ट्रे वा लोकपालत्वात् । देवाय दानादिगुणयुक्ताय । दूरेदृशे दूर एव स्थितो यो दृश्यते प्राणिभिः स दूरेदृक् । तस्मै । अथवा कर्तृसाधनः; दूरे स्थितः पश्यति सर्वमिति । तस्मै दूरेदृशे । देवजाताय । देवात् प्रजापतेरुत्पन्नाय । अग्नेर्वा जाताय 'अग्नेर्वा आदित्यो जायते' इति श्रुतेः । केतवे । प्रज्ञानामैतत् । प्रज्ञानस्वरूपाय प्रकाशद्वारेण प्रज्ञापयित्रे वा । दिवस्पुत्राय । अहन्यहनि दिवो जायमानत्वाद् दिवस्पुत्र इत्युच्यते सूर्यः । तस्मै । न च हविरेव केवलं, किन्तर्हि, तदृतम् । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । ऋतमिति च सत्यनाम । यत् सत्यं परमार्थभूतम् । किं तत् । सामर्थ्यात् स्तोत्रम् । महः पूजनीयम् । सपर्यतिना सम्बन्धः । यत् स्तोत्रं सत्यभूतं सगुणं च तत् सपर्यत हे ऋत्विज इत्यर्थः । किञ्च शंसत च शस्त्राणि । एतदुक्तं भवति— हे अध्वर्यवः ! सूर्याय हविः संस्कुरुत । उद्गातारः ! स्तोत्रं कुरुत । होतारः ! शस्त्राणि शंसतेति ॥

सामासत्योक्तिःपरिपातुविश्वतोद्यावाचयत्रततनन्नहानिच ।

विश्वमन्यन्निविशतेयदेजतिविश्वाहापोविश्वाहोदेतिसूर्यः ॥

(अष्ट० ७. अध्या० ८. व० १२. ऋ० २.)

---

१. 'त्र उच्य' घ. पाठः.

सा मा। सूर्यस्य तनूरित्यध्याहार्यम् । स्त्रीलिङ्गनिर्देशात् । सा माम् । सत्योक्तिः। उच्यन्ते देवतागुणाः अनयेत्युक्तिः स्तुतिरभिप्रेता[1]। सा सत्या अविसंवादिनी यस्याः सा सत्योक्तिः यथाभूतगुणग्राहिणी तनूरित्यर्थः । परिपातु सर्वप्रकारं रक्षतु विश्वतः सर्वतः सम्बन्धिनश्च । द्यावा च रश्मिलक्षणा दीप्तिश्च अहानि च यत्र यस्यां सूर्यतनौ ततनन् विस्तारितानि गतानि अवस्थितानीत्यर्थः। उत्तरार्धर्चः स्तुतिरेव नाशीः। विश्वमन्यं सर्वमन्यद् भूतजातम् । निविशते विश्रमार्थमुपविशति स्वपिति चेत्यर्थः । यद् भूतजातम् एजति कम्पते गच्छति परिस्पन्दते । विश्वाहा सर्वदा आपः सूर्यमण्डलस्थाः सर्वव्यापारो रश्मयः उद्यन्ति। विश्वाहा सर्वदैव उदेति वृद्धिं गच्छति सूर्यः । श्रमाभावाद्रश्मयश्च सूर्यश्च विश्रमार्थं कदाचिदपि न निविशन्ते इत्यर्थः ॥

नतेअदेवःप्रदिवोनिवासतेयदेतशेभिःपतरैरथर्यसि ।

प्राचीनमन्यदनुवर्ततेरजउदन्येनज्योतिषायासिसूर्य ॥

(अष्ट० ७. अध्या० ८. व० १२. ऋ० ३.)

नते । हे सूर्य! ते तव, समीपे इति शेषः । अदेवः देवादन्यः असुरराक्षसादिकः। प्रदिवः। पुराणनामैतत्। पुराणं चिरन्तनम्। आदिसर्गोऽपि प्राजापत्योऽपि सन्नित्यर्थः । न निवासते न वसति । मरणभयान्न तिष्ठतीत्यर्थः । कदा। यद् यदा। एतशेभिः। अश्वनामैतत्। अश्वैरात्मीयैर्हरित्संज्ञकैः। पतरैः पतनशीलैः गमनशीलैः सह । रथर्यसि । अनवगतसंस्कारमेतत्पदं रथर्यसीति सिद्धम् । तत् प्रेप्सुः । रथं कामयन्त इति वेति प्रच्छन्नावगमप्रदर्शनवाक्यम् । रथं हर्यसि(?) रथीयसीति चावगमः । रथमिच्छसि योक्तुमित्यर्थः । किञ्चान्यत् प्राचीन[2] प्रागञ्चितम् । प्राक्शब्दश्चात्र सामर्थ्यात् तिर्यगधोवचनः । तिर्यगधोमुखमित्यर्थः[3] । अन्यद् रजः रश्मिलक्षणं ज्योतिस्तव स्वभूतम् अनुवर्तते अनुपूर्वं गच्छति । अन्येन ज्योतिषा रश्मिलक्षणेन उद्यासि ऊर्ध्वं गच्छसि। त्वं कदम्बगोलकवत् तव मण्डलस्य अवस्थानात् तिर्यगूर्ध्वमधश्च स्वरश्मिजालेन व्याप्नोषि इत्यर्थः ॥

---

१. 'हिस्तुतिरि' ङ. पाठः. २. 'न प्राक् श', ३. 'ह्य' ख. ग. पाठः.

येनसूर्यज्योतिषाबाधसेतमोजगच्चविश्वमुदियर्षिभानुना ।
तेनास्मद्विश्वामनिरामनाहुतिमपामीवामपदुःष्वप्न्यं सुव ॥

(अष्ट० ७. अध्या० ८. व० १२ ऋ० ४.)

येन सूर्य । हे सूर्य! येन ज्योतिषा बाधसे अभिभवसि । तमः शार्वरम् । जगच्च संसारमण्डलं च । विश्वं सर्वं प्रति । उदियर्षि उद्गच्छसि । भानुना तेन ज्योतिषा । अस्मत् अस्मत्तः । विश्वां सर्वप्रकाराम् । अनिराम् । मकारलोपोऽत्र द्रष्टव्यः । अनिरमाम् अविद्यमानरतिम् अत्यन्ताप्रीतिकरीमित्यर्थः । अनाहुतिम् अविद्यमानजठराग्न्याहुतिम् अग्निशमनकरीमित्यर्थः । अमीवां रोगजातिम् । अपसुव । 'षु प्रेरणे' अपप्रेरय अपगमय नाशयेत्यर्थः । दुष्वप्न्यं दुःस्वप्नभवं च दोषम् अपसुव ॥

विश्वस्यहिप्रेषितोरक्षसिव्रतमहेळयन्नुच्चरसिस्वधाअनु ।
यद्यत्वासूर्योपब्रवामहैतन्नोदेवाअनुमंसीरतक्रतुम् ॥

(अष्ट० ७. अध्या० ८. व० १२. ऋ० ५.)

विश्वस्य हि । सर्वस्य यजमानस्य हि यस्मात् प्रेषितः अभ्यर्थित इत्यर्थः । रक्षसि यज्ञविध्वंसकरेभ्यः सकाशात् पालयसि । व्रतम् । कर्मनामैतत् । कर्म यज्ञाख्यम् । अहेलयन् अक्रुध्यन् । उच्चरसि ऊर्ध्वं गच्छसि । स्वधा अनु प्रातर्होमानां पश्चाद् प्रातर्होमे निवृत्ते इत्यर्थः । यद् यस्माच्च । अद्य यागदिवसे । त्वा त्वां हे सूर्य! उपब्रवामहै उपगम्य ब्रूमः अभ्यर्थयामहै याचामहै इत्यर्थः । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्मादस्माकमपि यज्ञं प्रातर्होमं च रक्षेत्यर्थः । तं तं च क्रतुं कर्मलक्षणम् । नः अस्माकं यज्ञस्य प्रातर्होमस्य च सम्बन्धितया क्रियमाणम् । देवाः सर्वे अनुमंसीरत त्वत्प्रसादादनुमन्यन्ताम् अव्याघातेन वर्त्तयन्तामित्यर्थः ॥

तन्नोद्यावापृथिवीतन्नआपइन्द्रःशृण्वन्तुमरुतोहवंवचः ।
माशूनेभूमसूर्यस्यसंदृशिभद्रंजीवन्तोजरणामशीमहि ॥

(अष्ट० ७ अध्या८. व० १२. ऋ० ६.)

१. 'रूय' ख. ग. पाठः.

तन्नो द्यावापृथिवी । तन्नः अस्माकं स्वभूतं हवम् आह्वानम् । तत् तच्च नः वचः स्तुतिलक्षणम् । द्यावापृथिव्यौ आपश्चेन्द्रश्च मरुतश्च शृण्वन्तु सूर्येणाभ्यनुज्ञाताः । किञ्च मा भूम वयं । शूने । 'टु ओ श्वि गतिवृद्ध्योः' । वृद्धे महति । सामर्थ्यात् पापे तत्कार्ये दुःखे वा । (सूर्यस्य) सन्दृशि सन्दृष्टौ अनुग्रहबुद्धौ वर्तमाना इत्यर्थः । (न केवलं पापे दुःखे वा मा भूम), किं तर्हि, भद्रं कल्याणं धर्मं तत्कार्यं सुखं वा जीवन्तः वर्षशतं प्राणान् धारयन्तः । जरणां जरां च अशीमहि प्राप्नुयामेत्याशास्महे ॥

विश्वाहा॑त्वासु॒मन॑सःसु॒चक्ष॑स प्र॒जाव॑न्तोअनमी॒वाअना॑गसः ।
उ॒द्यन्त॑त्वामित्रमहोदि॒वेदि॑वे॒ज्योग्जी॒वाः प्रति॑पश्येमसूर्य ॥

(अष्ट० ७. अध्या० ८. व० १३. ऋ० ७.)

विश्वाहा त्वा । सर्वदा त्वा त्वाम् । स्तुमो यजामश्चेति शेषः । कीदृशाः सन्तः । सुमनसः कल्याणचित्ताः । सुचक्षसः शोभनचक्षुषः । चक्षुर्ग्रहणमिन्द्रियार्थोपलक्षणं द्रष्टव्यम् । प्रजावन्तः पुत्रादिप्रजासहिताश्च । अनमीवाः अरोगाः । अनागसः कर्मवैगुण्यजनितापराधवर्जिताश्च सन्तः । किञ्च । दिवे दिवे अहन्यहनि उद्यन्तं त्वा त्वाम् । हे मित्रमहः ! मित्राणां स्तोतृयष्टृमनुष्याणां पूजित ! ज्योक् चिरं जीवाः जीवन्तो वयं प्रतिपश्येम प्रतिदिनं पश्येमेत्याशास्महे हे सूर्य ! ॥

म॒हिज्योति॒र्बिभ्र॑तंत्वाविचक्षण॒भास्व॑न्तं॒चक्षु॑षेचक्षु॒षेमयः॑ ।
आ॒रोह॑न्तंबृ॒हतः॒पाज॑सस्प॒रिव॒यंजी॒वाः प्रति॑पश्येमसूर्य ॥

(अष्ट० ७. अध्या० ८. व० १३. ऋ० ४.)

महिज्योतिः । महि महत् ज्योतिः रश्मिलक्षणं । बिभ्रतं धारयन्तं त्वा त्वाम् । हे विचक्षण ! सर्वस्य विशेषेण द्रष्टव्य ! । भास्वन्तं रश्मिमन्तं स्वदीप्त्या दीप्तिमन्तम् । चक्षुषे चक्षुषे । चक्षुश्शब्दोऽन्तर्हितमत्वर्थः । षष्ठ्यर्थे च चतुर्थी । यावान् कश्चिच्चक्षुष्मान् प्राणी तस्य सर्वस्य । मयः । सुखनामैतत् तत्कारिणि वर्तते । मयस्करं सर्वार्थप्रकाशनद्वारेण सुखकरमित्यर्थः । आरोहन्तं बृहतः महतः[1] पाजसः । बलनामैतत् अन्तर्णीतमत्वर्थम् ।

१. 'शद्व ।' ख. ग. पाठः

बलवतः सर्वस्यासुरराक्षसादेः परि । बलवन्तम् असुरराक्षसादिकमभिभवन्त मित्यर्थः । वयं जीवाः चिरं जीवन्तः सन्तः प्रतिपश्येम प्रतिदिनं पश्येम हे सूर्य ! ॥

यस्य॑ ते॒ विश्वा॒ भुव॑नानि के॒तुना॒ प्र चेर॑ते॒ नि च॑ वि॒शन्ते॑ अ॒क्तुभिः॑ ।
अ॒ना॒गा॒स्त्वेन॑ हरिकेश सूर्या॒ह्नाह्ना॑ नो॒ वस्य॑सा॒वस्य॒सोदि॑हि ॥

(अष्ट० ७. अध्या० ८. व० १३. ऋ० ९.)

यस्य ते । यस्य ते तव स्वभूतेन केतुना । प्रज्ञानामैतत् । प्रज्ञया चात्र तत्कारणमहर्लक्ष्यते । सप्तम्यर्थे च तृतीया । सर्वार्थज्ञानहेतुभूतेऽहनीत्यर्थः । विश्वा विश्वानि सर्वाणि भुवनानि भूतानि प्रचेरते प्रचरन्ति स्वे स्वे कर्मणि प्रवर्तन्ते । निविशन्ते च विश्रमार्थं स्वपन्ति चेत्यर्थः । अक्तुभिः रात्रिनामैतत् । अत्रापि सप्तम्यर्थे तृतीया । अक्तुषु तत्कार्यासु रात्रिषु । स त्वम् अनागास्त्वेन अस्माकं कर्मवैगुण्यजनितापराधवर्जितत्वेन हे हरिकेश ! । भौमरसाहरणाद्धरयो रश्मय इहाभिप्रेयन्ते । रश्मिकेश ! । हरिवर्णरश्मिकेश वा । हे सूर्य ! अह्नाह्ना वस्यसा वस्यसा[1] दिवसेन दिवसेन वसुमत्तरेण वसुमत्तरेण अस्मभ्यं दातव्येन धनेनातिशयेन तद्वता तद्वता दिवसेनोपलक्षितः सन् । नः अस्मभ्यम् । धनं दातुमिति शेषः । उद् इहि[2] उद्गच्छ । उद्गच्छन्नस्मभ्यं प्रभूतं धनं देहीत्यभिप्रायः ॥

शं नो॑ भव॒ चक्ष॑सा॒ शं नो॒ अह्ना॒ शं भा॒नुना॒ शं हि॒मा शं घृ॒णेन॑ ।
यथा॒ शम॑ध्व॒ञ्छम॑स॑द्दुरो॒णे तत्सू॑र्य॒ द्रवि॑णं धेहि चि॒त्रम् ॥

(अष्ट० ७. अध्या० ८. व० १३. ऋ० १०.)

शं नो भव । शं सुखं नः अस्माकं भव सुखकरो भवेत्यर्थः । केन । चक्षसा दर्शनेन । शं नो अह्ना । भवेति सर्वत्रानुषक्तव्यम् । दिवसेनास्माकं सुखकरो भवेत्यर्थः । शं भानुना रश्मिलक्षणेन तेजसा । शं हिमा रात्रिनामैतत् । तृतीयाया लुक् द्रष्टव्यः । रात्र्या च शं नो भव । शं घृणेन । 'घृ क्षरणदीप्त्योः' । क्षरणेन । कस्य । सामर्थ्यादुदकस्य । वृष्टिप्रदानेन चास्माकं सुखकरो भवेत्यर्थः । किञ्च यथा । प्रातिपदिकार्थेऽत्र प्रकारवचनः थाप्रत्ययः ।

१. 'श्वा स' घ. ङ. पाठः. २. हि उद्गच्छन्.' ङ. पाठः.

यद् । द्रविणमित्यनेन सम्बन्धः । यद् द्रविणं शं सुखप्रदम् । असद् भवति । अध्वन् । सप्तम्या लोपः । अध्वनि । सप्तमीनिर्देशात् वर्तमानानामिति शेषः । शं सुखमेव । दुरोणे गृहनामैतत् । गृहेऽपि वर्तमानानामस्माकं यद् द्रविणं सुखकरं भवतीत्यर्थः । तत् । हे सूर्य ! द्रविणं धनम् । चित्रं विचित्रं नानाजातीयं हस्त्यश्वरथपदातिगोमहिषाजाविहिरण्यरजतमणिमुक्तावस्त्रधान्यादिकं धेहि देह्यस्मभ्यम् । अथवा यथेति श्रुतत्वात् तत्सूर्येत्यत्र तच्छब्दात् परस्य प्रकारवचनप्रत्ययस्य लोपो द्रष्टव्यः । तथा सूर्य ! द्रविणमिति ॥

अस्माकंदेवाउभयायजन्मनेशर्मयच्छतद्विपदेचतुष्पदे ।

अदत्पिबदूर्जयमानमाशितंतदस्मेशंयोररपोदधातन ॥

(अष्ट० ७. अध्या० ८ व० ११. ऋ० ११.)

अस्माकम् । हे देवाः ! अस्माकं स्वभूताय उभयाय उभयप्रकाराय द्विप्रकारायेत्यर्थः । जन्मने । अन्तर्णीतमत्वर्थमेतत् पदम् । जन्मग्रहणं चेतरेषामपि प्राणिधर्माणां प्रदर्शनार्थम् । जन्मजरामरणादिदुःखनिमित्तप्राणिधर्मवते तस्मै । द्विपदे चतुष्पदे मनुष्येभ्यो गवादिभ्यश्च शर्म सुखं व्याध्याद्यनिष्टसंयोगोपशमनलक्षणमिष्टसंयोगलक्षणं च । सूर्येणाभ्यनुज्ञाताः सन्तो यच्छत दत्त यूयम् । किञ्च अदत् मोदकादि कठिनं भक्षणीयम् । पिबत् क्षीरोदकादि द्रवं पानार्हम् । ऊर्जयमानम् । 'ऊर्ज बलप्राणनयोः' । बलवन्तमिवात्मानमाचरत् । आशितं दध्योदनाद्यशनार्हमशितवच्च । तद्विपाच्च चतुष्पाच्च । कुरुतेति शेषः । किञ्च अस्मे अस्मभ्यं शं शमनमुत्पन्नानां रोगाणाम् । योः यापनं च पृथग्भावनं च उत्पत्स्यमानैर्भयैरसम्बन्धं चेत्यर्थः । अरपः अपापत्वं च धत्त यूयम् ॥

यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेळनम् ।

अरावायोनोअभिदुच्छुनायतेतस्मिन्तदेनोवसवोनिधेतन ॥

(अष्ट० ७. अध्या० ८. व० १२. ऋ० १२.)

यद्वो देवाः । हे देवाः ! यदेनः पापं गुरु देवहेलनं वः युष्माकं देवानां हेलनं क्रोधनं क्रोधनिमित्तमित्यर्थः । चकृम कृतवन्तो वयम् । केन । जिह्वया

१. 'सुखकरम् । स' ख. ग. पाठः. २. 'स्मभ्यं य' घ. पाठः.

जिह्वेन्द्रियेण वागिन्द्रियसहितेनेत्यर्थः। अदनवदनव्यापरत्वादभक्ष्यभक्षणानृतवदनादिवाचिककर्मजनितं गुरु महत्। मनसो वा प्रयुती। वाशब्दश्चार्थे। 'यु मिश्रणे'। तस्मात् 'स्त्रियां क्तिन्' इति क्तिनि युतीति रूपम्। तदुपरि तृतीयैकवचनस्य पूर्वसवर्णे प्रयुतीति। मनसः प्रयुत्या च प्रमिश्रणेन परद्रव्याभिध्यानाद्यनिष्टचिन्तालक्षणेन मानसेन च कर्मणा यदेनः देवहेळनं कृतवन्तो वयम्। अरावा। अरातिशब्दस्य तिशब्दलोपः। रातिर्दानं तद्वान् रातिवान् न रातिवानरातिवान् अदाता ईश्वरः सन् यः नः अस्मानभिदुच्छुनायते। दुच्छुनाशब्द उद्वेजयितृवचनः। मन्त्रान्तरे दर्शनात् 'किमस्मान् दुच्छुनायसे' इति। स्वार्थे क्यच् छान्दसः। एतदुक्तं भवति— न केवलमीश्वरः सन् न ददाति, इतराभिः पीडाभिः उद्वेजयति इत्यर्थः। अथवा अरातिशब्दः शत्रुपर्यायः। तस्य तिशब्दलोपेन रूपम्। अस्मच्छत्रूणां परिग्रहं कृत्वा योऽस्मानाभिमुख्येनोद्वेजयतीत्यर्थः। तस्मिन् पुरुषे तदेनः पापं हे वसवः! भक्तानामीप्सितार्थैराच्छादयितारः निधेतन निधत्त स्थापयत। यूयं सूर्येणानुज्ञाताः सन्तः स्थापयतेत्यर्थः। केचित्त्वस्यामृचि देवशब्दं रश्मिवचनमाहुः 'चित्रं देवानामुदगादनीकम्' इति मन्त्रान्तरे दर्शनात्। तस्मिन् पक्षे रश्मिमतः सूर्यस्य रश्मिभिरभेदान्मन्त्रस्य सौर्यत्वं समञ्जसम्॥

अथेदानीं स्वस्त्ययनानि व्याख्यायन्ते—

आनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोअपरीतासउद्भिदः।

देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे॥

(अष्ट० १. अध्या० ६. व० १५. ऋ० १.)

आनो भद्राः। गोतमो राहूगण ऋषिः। आदितः पञ्च सप्तमी च षड् जगत्यः। षष्ठी विराट्स्थाना। अवशिष्टास्तिस्रः त्रिष्टुभः। विश्वेदेवा देवता। नः अस्मान् भद्राः। 'भदि कल्याणे'। कल्याणाः। क्रतवो यज्ञाः आयन्तु आगच्छन्तु। विश्वतः सर्वतः स्वतःसम्बन्धिनश्च। अस्मान् अस्मत्पुत्रपौत्रादींश्चेत्यर्थः। कीदृशाः। उच्यन्ते। अदब्धासः अहिंसिताः यज्ञविध्वंसिभी रक्षआदिभिः। सगुणा इत्यर्थः। अपरीतासः अपरिगताः अन्यैरप्राप्तपूर्वा इत्यर्थः। उद्भिदः उद्भिन्नाः एकाहाहीनप्रभृतयः। अथवा उद्भि-

१ 'नः क्र' ख. पाठः.

न्दन्ति फलानीत्युद्भिदः जनयितारः फलानामित्यर्थः । कथञ्च पुनरायन्तु । उच्यत । देवाः नः अस्माकम् । यथा सदमित् सदमिति सदाशब्दपर्यायः । इच्छब्द एवार्थे । सदैव । वृधे । चतुर्थ्यन्तमेतत् । वर्धनाय । असन् भवेयुः । अप्रायुवः अप्रमोषितारः आयुषः प्रायुषः । जीवितस्यानपहर्तारो भवेयुरित्यर्थः । अथवा प्रायुव इत्ययतेर्गतिकर्मणो रूपम् । अप्रगन्तारः नित्यसन्निहिता इत्यर्थः । अथवा प्रायुव इति यौते रूपम् । अन्यैरर्थैरप्रमिश्रिता बुद्धिर्येषां ते अप्रायुवः । अनाक्षिप्तचेतस्काः यत्नवन्त इत्यर्थः । अथवा प्रायुव इत्यस्य माद्यन्त इत्यर्थः । रक्षितारः पालयितारश्च । दिवे दिवे अहन्यहनि । तथा क्रतवः आयन्त्विति ॥

देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्तताम् ।

देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरन्तुजीवसे ॥

अष्ट० १. अध्या० ६. व० १५. ऋ० २ )

देवानां भद्रा स्वभूता भद्रा देवानां कल्याणी सुमतिः शोभना परानुग्रह-बुद्धिः । किंविशिष्टानाम् । ऋजूयताम् । ऋजवः सदाचारा मनुष्याः । तत्कामिनां देवानां रातिर्दानम् । अभि नो निवर्तताम् अस्मान् प्रति निवर्त्तताम् । देवा अस्मभ्यमेव धनं ददत्वित्यर्थः । देवानां सख्यं सखिभावं स्तोतृत्वं यष्टृत्वं चेत्यर्थः । उपसेदिम उपगच्छेम वयमित्याशास्महे । किञ्च देवा नः अस्माकं स्वभूतमायुः प्रतिरन्तु । प्रपूर्वस्तिरतिः सर्वत्र वृद्ध्यर्थः प्रवर्धयन्तु जीवसे चिरजीवनाय ॥

तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधम् ।

अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥

(अष्ट० १ अध्या० ६. व० १५. ऋ ३.)

तान् पूर्वया । तान् देवान् पूर्वया चिरन्तन्यानादिसिद्धया । निविदा । वाङ्नामैतत् । वाचा स्तुतिलक्षणया । हूमहे आह्वयामो वयम् । कतमांस्तान् । उच्यते । भगं मित्रम् अदितिं देवानां मातरं दक्षम् । कीदृशम् । अस्रिधम् । न स्रेधति न व्यथते न रिष्यतीति प्रयोगदर्शनात् स्रिधिः क्षयार्थः शोषणार्थो वा । अक्षयमशोषं वा । न चैतानेव केवलान्, किन्तर्हि, अर्यमणं वरुणं

१. 'न्ते ।' ख. ग. पाठः.

सोममश्विनौ च । किञ्च सरस्वती नदी वा देवता वा । नः अस्माकम् । सुभगा सुधना कल्याणोपस्था वा । मयः । सुखनामैतत् । सुखम् । करत् करोतु । अस्मान् सुखयत्वित्यथः ॥

तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पितायौः ।
तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवम् ॥
(अष्ट० १. अध्या० ६. व० १५. ऋ० ४.)

तन्नो वातः । तच्छब्दश्रुतेर्यदध्याहारः । यद् वयमिच्छामः तन्नः अस्मान् प्रति वातः मयोभु सुखस्य भावयितृ । आगामिन्यपि काले सुखकर-मित्यर्थः । वातु वातिर्गतिकर्मा सामर्थ्यादन्तर्णीतण्यर्थः । गमयतु । अस्मभ्यं ददात्वित्यर्थः । किं तत् । भेषजं व्याधिप्रशमनमौषधम् । नच केवलो वातः, किं तर्हि, तन्माता पृथिवी तदेव पिता द्यौः । वात्वित्यनुषङ्गः । विवाहकाले 'द्यौरहं पृथिवी त्वमि'ति वरे वध्वां च द्युपृथिवीत्वाध्यारोपात् सर्वमनुष्याणां च वधूवरमातापितृकत्वात् तद्धर्मेण पृथिव्या दिवश्चायं मातापितृव्यपदेशः तन्माता पृथिवी तत्पित द्यौरिति । किञ्च तत् तदेव भेषजं ग्रावाणः पाषाणाः । सोमसुतः सोमाभिषवकारिणः । मयोभुवः यागनिर्वर्तकतया सुखस्य भाव-यितारः । तत् तदेव हे अश्विनौ ! शृणुतम् । श्रवणेनात्र तत्पूर्वकं करणं लक्ष्यते । कुरुतं दत्तमित्यर्थः । हे धिष्ण्यौ ! धिषणा वाक् तस्याः पुत्रौ । अथवा धीः प्रज्ञा । 'षण वेष्टने' । धीर्वेष्टयित्री सर्वार्थग्रहणसमर्था ययोस्तौ धिष्णौ धिष्णावेव धिष्ण्यौ । स्वार्थिकस्तद्धितः । छान्दसं ह्रस्वत्वं च । अत्यन्तप्रज्ञावित्यर्थः । युवं युवामपि ॥

तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ।
पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥
(अष्ट० १. अध्या० ६. वर्ग० १५. ऋ० ५.)

तमीशानम् । तमिति तच्छब्दश्रुतेर्यदध्याहारः । यमन्येऽपि सर्वे आह्वयन्ति, तमीशानम् । रुद्रनामैतत् । रुद्रम् । किंविशिष्टम् । जगतस्तस्थुषस्पतिं जङ्गमस्य स्थावरस्य च स्वामिनम् । चराचराधिपतिमित्यर्थः । धियंजिन्वम् । धीरिति कर्मनाम प्रज्ञानाम वा । जिन्वतिः प्रीतिकर्मा । सर्वकर्मणां सर्वप्रज्ञानां वा

१. 'नम्र । नच' ख. ग. पाठः.

(प्रणियितारम् । अवसे पालनायात्मनः हूमहे आह्वयामो वयम् । कथं च पुनराह्वयामः । उच्यते । आहूतः ईशानः नः अस्माकं यथा वेदसां धनानां ज्ञानानां वा) असद् भवेत् वृधे वर्धनाय । रक्षिता चास्माकम् । पायुः पाता सोमानाम् । अदब्धः अहिंसितः केनचित् । स्वस्तये । स्वस्तीत्यविनाशनाम । अविनाशाय च भवेत् । तथा पूषणमपि हूमह इति सम्बन्धः । केचित्तु तमीशानमित्यादिभिः शब्दैः पूषैवाभिधीयते न रुद्र इति वर्णयन्ति । तस्मिन् पक्षे ईशानशब्दः स्वामिवचनः न रुद्रनाम । एवञ्च योजना— तं पूषणमीशानं जगतो जङ्गमस्य तस्थुषश्च स्वामिनमिति । शिष्टयोजना सदृशी ॥

स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ।

स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥

(अष्ट० १. अध्या० ६. व० १६. ऋ० ६.)

स्वस्ति नः । दधात्वित्येतत् पदं सर्वत्रानुवर्तितव्यम् । स्वस्ति दधातु ददातु नः अस्मभ्यम् इन्द्रः । कीदृशः । वृद्धश्रवाः । श्रव इत्यन्ननाम कीर्तिशब्दपर्यायो वा, धननाम वा । वृद्धान्नः वृद्धकीर्तिर्वृद्धधनो वा । स्वस्ति नः पूषा विश्ववेदाः सर्वज्ञानः सर्वधनो वा । स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः । नेमिरिति वज्रनाम इहायुधमात्रोपलक्षणमिष्यते । शत्रुभिरहिंसितायुध इत्यर्थः । स्वस्तिं नो बृहस्पतिर्दधातु ददातु ॥

पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ।

अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निह ॥

(अष्ट० १. अध्या० ६. व० १६. ऋ० ७.)

पृषदश्वाः । पृषतोऽश्वा येषां ते पृषदश्वाः मरुतः पृश्निमातरः पृश्निर्द्यौः सा माता येषां ते पृश्निमातरः । शुभंयावानः शुभमुदकं तत्प्रतिगन्तारः । वृष्ट्युदकार्थं मेघान् प्रतिगन्तार इत्यर्थः । विदथेषु जग्मयः यज्ञेषु गमनशीलाः । न च केवलं मरुतः, किं तर्हि, अग्निजिह्वाः । वक्ष्यमाणानां विश्वेषां देवानां विशेषणमेतत् न मरुताम् । कुत एतत् । 'येऽग्निजिह्वा उत वा यजत्राः' इत्यादिषु प्रसिद्धेः । अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः । अग्नौ हि प्रक्षिप्तं हविर्देवा अश्नन्ति । अत एषामग्निर्जिह्वास्थानीयः । मनवः । क्रियाशब्दोऽयम् । अनुमन्तारः ज्ञातार इत्यर्थः । सूरचक्षसः सूर्यस्येव चक्षो दर्शनं येषां

१. ह्वाः अग्नौ हि व' ख. ग. पाठः

ते सूरचक्षसः । अत्यन्तोज्ज्वलरूपा इत्यर्थः । एवंरूपा विश्वे देवा नः अवसा अस्माकं पालनेन हेतुना । वयं पालयितव्या इत्येवमित्यर्थः । आगमन् आगच्छन्तु । इह यज्ञे । पृषदश्वादिगुणा मरुतः अग्निजिह्वादिगुणा विश्वेदेवाश्चास्मत्पालनार्थमिहास्मद्यज्ञे आगच्छन्त्विति समस्तार्थः ॥

भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥

(अष्ट० १. अध्या० ६. व० १६ ऋ० ८.)

भद्रम् । हे देवाः युष्मत्प्रसादेन भद्रं कल्याणं शब्दं कर्णेभिः श्रोत्रैः शृणुयाम । भद्रमेव पश्येम । अक्षभिश्चक्षुर्भिः । हे यजत्राः! यष्टव्याः! । किञ्च स्थिरैरङ्गैर्दृढैः शरीरावयवैः । तनूभिः शरीरैश्च स्थिरैः । जरानुपहतशरीरावयवाः सन्त इत्यर्थः । तुष्टुवांसः । शत्रर्थेऽयं कसुर्द्रष्टव्यः । स्तुवन्तो युष्मान् । व्यशेम विविधं प्राप्नुयाम । देवहितं देवैर्विहितं स्थापितमुपकल्पितं यदायुः । यद् वर्षशतपरिमाणमायुः देवैर्मनुष्याणामुपकल्पितं तत् कृत्स्नं प्राप्नुयाम, मान्तरा मृषीमहीत्यभिप्रायः ॥

शतमिन्नुशरदोअन्तिदेवायत्रानश्चक्राजरसंतनूनाम् ।
पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥

(अष्ट० १. अध्या० ६. वर्ग० १६. ऋ० ९.)

'शतमिन्नु' । नु इदिति च पादपूरणौ । अत्रैकवाक्यताप्रसिद्ध्यर्थं प्रथमे पादे यच्छब्दोऽन्त्ये पादे षष्ठ्यन्तस्तच्छब्दश्चाध्याहार्यः । यदेतच्छतं शरदः वर्षशतम् । अन्ति अन्तिकं सन्निकृष्टमल्पकमित्यर्थः । हे देवाः! । यत्र च वर्षशते आयुषि । नः अस्माकम् । चक्र कृतवन्तः स्थ जरसं जरां तनूनां शरीराणाम् । स्वरूपेणैवाल्पकं जरया चोपहतमित्यर्थः । यत्र च पुत्रासः पुत्राः पितरो भवन्ति स्वेषामपत्यानाम् । यत्रैकमेव शरीरमत्यन्तविरुद्धे पितापुत्रावस्थे शीघ्रमेव प्रतिपद्यत इत्यर्थः । अथवा पितृशब्दोऽत्र क्रियाशब्दः पालयितृवचनः । ये पुत्राः पाल्याः आसन्, त एव वार्धक्ये जरयाभिभूतस्य यत्र पालयितारो भव-

---

१. 'न्त्ये च ष' घ. पाठः.

न्तीत्यर्थः । तस्य मध्या मध्ये । नः अस्माकम् । मा रिरिषत मा हिंसिष्ट आयुर्जीवितम् । गन्तोर्गमनशीलस्य । स्वरसेनैव शीघ्रक्षयिण इत्यर्थः ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।

विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥

(अष्ट० १. अध्या० ६. व० १६. ऋ० १०.)

अदितिर्द्यौः । अदितिर्देवमाता तत्प्रभवाः सर्वे द्युप्रभृतयः । अत इदं कारणशब्देन कार्यस्य गौण्या वृत्त्याभिधानम् । अदितिर्द्यौः अदितेः कार्यभूतेत्यर्थः । अदितिरेवान्तरिक्षम् । अदितिरेव माता । स पिता स पुत्रः । स इति व्यत्ययेन पुँल्लिङ्गता । सैवादितिः पिता । सैव पुत्रः । विश्वेदेवाः अदितिः पञ्चजनाश्च । गन्धर्वाः पितरो देवा असुरा राक्षसाः इत्येते पञ्चजना अभिप्रेताः । निषादपञ्चमा वा ब्राह्मणादयो वर्णाश्चत्वारः । अदितिरेव जातमुत्पन्नम् । अदितिरेव जनित्वं जनिष्यमाणम् । एवमशेषजगत्कारणत्वेनादितेर्विभूतिमाचष्टे । अथवा अदितिशब्दोऽत्र क्रियाशब्दः अदीनपर्यायः । द्युप्रभृतीनि वस्तून्यदीनानि अनुपक्षीणानीत्यर्थः ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।

स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥

(अष्ट० ४. अध्या० ३. व० ७. ऋ० ११.)

स्वस्ति नो मिमीतामश्विर्नाभग इति त्र्यृचम् । ऋषिस्त्वात्रेयः । तिस्रो जगत्यस्त्रिष्टुभा वा । विश्वेदेवा देवताः । स्वस्ति अविनाशं नः अस्माकं मिमीताम् । व्यत्ययेनैकवचनं वा । मिमतां, कुर्वन्त्वित्यर्थः । के । उच्यते । अश्विना अश्विनौ भगश्च । स्वस्त्येव देवी दानादिगुणा । अदितिः देवमाता । अनर्वणः अन्यप्रत्याश्रिततया यो न गच्छति सोऽनर्वा । न इत्यस्य विशेषणं चेदं व्यत्ययेनैकवचनं च । अनर्वणः अन्यप्रत्याश्रिततया न गच्छतामस्माकमित्यर्थः । स्वस्त्येव पूषा । कीदृशः असुरः । असुरिति प्रज्ञानाम । रो मत्वर्थीयः । प्रज्ञावान् दधातु धत्ताम् करोत्वित्यर्थः । नः अस्माकं स्वस्त्येव द्यावापृथिवी द्यावापृथिव्यौ सुचेतुना शोभनेन सानुग्रहेण चित्तेनास्मासु ॥

---

१. 'ना त्यृ' ख. ग. पाठः.

स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ।
बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवन्तुनः ॥

(अष्ट० ४. अध्या० ३. व० ७. ऋ० १२.)

स्वस्तये अविनाशाय वायुमुपब्रवामहे उपगम्य ब्रूमः प्रार्थयामहे इत्यर्थः । सोमं च । उपब्रवामहे इत्यनुषक्तव्यम् । स्वस्ति । चतुर्थ्या लुक् । स्वस्तये इत्यर्थः । कीदृशः सोमः । उच्यते । भुवनस्य भूतजातस्य यः पतिः स्वामी बृहस्पतिं देवपुरोहितं च सर्वगणं सर्वेणानुचरगणेनोपेतं स्वस्तय एवोपब्रवामहै । स्वस्तय एवादित्यासः भवन्तु नः । आदित्या अप्यस्माकमविनाशं कुर्वन्त्वित्यर्थः ॥

विश्वेदेवानोअद्यास्वस्तयेवैश्वानरोवसुरग्निःस्वस्तये ।
देवाअवन्त्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः ॥

(अष्ट० ४. अध्या० ३. व० ७. ऋ० १३.)

'विश्वे' । अवन्त्वित्याख्यातं पुरस्तादनुषक्तव्यम् । विश्वेदेवाः नः अस्मान् अद्य वर्तमानकाले अवन्तु पालयन्तु । स्वस्तय एव वैश्वानरश्च वसुः । प्रशस्यनामैतत्[1] । प्रशस्यः । अभिश्चावतु स्वस्तय एव । देवा अवन्तु ऋभवः । ऋभुर्विश्वावाज इत्यर्थः[2] । स्वस्तय एव । स्वस्ति स्वस्तये नः अस्मान् रुद्रः परमेश्वरः पातु रक्षतु अंहसः पापात् ॥

परावतोयेदिधिषन्तआप्यंमनुप्रीतासोजनिमाविवस्वतः ।
ययातेर्येनहुष्यस्यबर्हिषिदेवाआसतेतेअधिब्रुवन्तुनः ॥

(अष्ट० ८. अध्या० २. व० ३. ऋ० १)

परावत इति सूक्तं सप्तदशर्चं वैश्वदेवं जागतं त्रिष्टुबन्तं गयः प्लातो ददर्श । परावतः दूरात् । आगत्येति शेषः । ये देवाः दिधिषन्ते । धिषिर्धारयतिकर्मा । अत्यर्थं धारयन्ति कुर्वन्तीत्यर्थः । आप्यम् । अपिर्बन्धुः तस्य भाव आप्यं बान्धवं सख्यं स्तुत्यस्तोतृत्वेज्यययष्टृत्वलक्षणम् । कैः सामर्थ्याद् ऋत्विग्यजमानैः । ये च मनुप्रीतासः मनुना कल्पिताः । येषां च जनिम

---

१. 'व्यः', २. 'तृ अ' ख. ग. पाठः, ३. 'लेके । स्व' क. पाठः.

जन्म विवस्वतः आदित्याद् यजमानाद् वा स्थितिकरणद्वारेण । ये देवाः ययातेः राज्ञः नहुष्यस्य नहुषपुत्रस्य बर्हिषि वेदिस्तरणे आसते यागाङ्गभावेन तिष्ठन्ति । ते देवा अधिब्रुवन्तु नः । अधीत्युपरिभावमैश्वर्यं वाह । उपरि भूत्वा वदन्तु आशंसन्त्वस्मान् इदं दृष्टादृष्टफलं शुभं कर्म कुरुतेति । ईश्वरान् वास्मान् वदन्तु कुर्वन्त्वित्यर्थः ॥

विश्वाहिवोनमस्यानिवन्द्यानामानिदेवाउतयज्ञियानिवः ।
येस्थजाताअदितेरद्भ्यस्परियेपृथिव्यास्तेमइहश्रुताहवम् ॥

(अष्ट० ८. अध्या० २. व० ३. ऋ० २.)

विश्वाहि । हि यस्माद् विश्वा विश्वानि सर्वाणि वः युष्माकं नामानि रूढानि गौणानि क्रियाजानि वा नमस्यानि नमस्काराहाणि वन्द्या वन्द्यानि वन्दनार्हाणि चेत्यर्थः । हे देवाः! उत अपि यज्ञियानि यज्ञार्हाणि वो युष्माकं सम्बन्धीनि । अतः कारणाद् ये यूयं स्थ भवथ जाता उत्पन्नाः अदितेर्देवमातुः । सकाशादिति शेषः । अद्भ्यः परि । अप इत्यन्तरिक्षनाम । अन्तरिक्षस्य चोपरि ये जाताः, ये च पृथिव्या उपरि जाताः, ते सर्वेऽपि देवाः मे मम इह अस्मिन् यज्ञे वर्तमानस्य हवं यागार्थमाह्वानं श्रुत शृणुत यूयम् ॥

येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँआदित्याँअनुमदास्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ३ ऋ० ३.)

येभ्यो माता । येभ्य आदित्येभ्यो माता जनन्यदितिः मधुमत् मधुस्वादुवत् । पिन्वते पिबति । ददातीत्यर्थः । पयः वृष्ट्युदकं क्षीरं स्तुत्यलक्षणम् । कीदृशम् । पीयूषम् । आप्यायितृ । द्यौः दीप्ता स्तुत्या वा । अद्रिबर्हाः अद्रिभिर्मेघैः परिवृद्धाः । उक्थशुष्मान् उक्थानि शस्त्राणि तदुपलक्षितसर्वस्तुतिबलान् । वृषभरान् वृष्टेराहर्तॄन् । अथवा भर इति सङ्ग्रामनाम । वृष्टिनिमित्तसङ्ग्रामान् वेत्यर्थः । स्वप्नसः सुकर्मणः । सुरूपान् सुप्रजान् वा । तान् आदित्यानदितेः पुत्रान् । अनुमद अनु पूर्वं स्तुहि तर्पय वा हे मदीयान्तरात्मन्! । किमर्थम् । स्वस्तये अविनाशाय आत्मनो वृद्ध्यर्थमित्यर्थः ॥

नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ३. ऋ० ४.)

नृचक्षसः कृताकृतप्रत्यवेक्षणार्थमनुग्रहार्थं वा नराणां द्रष्टारः । कथम् । अनिमिषन्तः । अक्षिनिमेषमकुर्वन्तः, सततमित्यर्थः । अर्हणा पूजया च युक्ता इत्यर्थः । बृहत् सुष्ठ्वित्यर्थः । अमृतत्वं मरणवर्जितत्वं नित्यत्वमित्यर्थः । देवासः सर्वदेवाः आनशुः प्राप्तवन्तः । किञ्च, ज्योतीरथाः दीप्तिमद्रथाः । अहिमायाः । मायेति प्रज्ञानाम । अहीनप्रज्ञाः । अथवा अहेर्मेघस्यासुरस्य वा मायाभिः परवञ्चनप्रज्ञाभिः प्रज्ञावन्तः । अनागसः अनपराधाः निर्दोषा इत्यर्थः । दिवो द्युलोकस्य वर्ष्माणं परिवृद्धिं वसते आच्छादयन्ति । स्वेन तेजसेति शेषः । दिवोऽपि सकाशान्महत्तरा इत्यर्थः । य इत्थम्भूता विश्वेदेवाः स्वस्तये अविनाशायास्माकम् । भवन्त्विति वाक्यशेषः ॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ३. ऋ० ५.)

सम्राजः सम्यग् दीप्ताः ये आदित्याः सुवृधः शोभनवृद्धयः । यज्ञमाययुरागता अन्नभावाय । अपरिह्वृता अहिंसिताः केनचिदपि । अकुटिला वा । दधिरे धारयन्ति कुर्वन्तीत्यर्थः । दिवि द्युलोके क्षयं निवासम् । द्युलोके निवसन्तीत्यर्थः । तान् आविवास परिचर हे मदीयान्तरात्मन् ! । नमसा । अन्ननामैतत् । हविर्लक्षणेनान्नेन । सुवृक्तिभिः दोषैः सुष्ठु वर्जिताभिः स्तुतिभिश्च । महः महतः आदित्यान् अदितेः पुत्रान् । अदितिं च स्वस्तये अविनाशाय । आत्मनो वृद्ध्यर्थमित्यर्थः ॥

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन ।
को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ४. ऋ० १.)

'को वः स्तोमम्' । को मनुषः मनुष्यः वः युष्माकं स्तोमं स्तुतिं राधति संसाधयति करोतीत्यर्थः । युष्मान् स्तौतीत्यर्थः । यं मनुष्यं जुजोषथ श्रुतिश्रवणेन सेवध्वे सततं यूयम् । येनास्मत्स्तुतिश्रवणाय चिरादागतवन्त इत्युपालम्भवचनमेतत् । किञ्च हे विश्वेदेवासः! यति परिमाणतः स्थन भवत । यूयं किमल्पपरिमाणाः येन कियन्तोऽप्यस्मत्स्तुतिश्रवणाय शीघ्रं नायात इत्यभिप्रायः । किञ्च को वा स मनुष्यः वः युष्मदर्थम् अध्वरं यज्ञम् । हे तुविजाताः! बहुजन्मानः! । अथवा बहुभूताः! । बहूनां प्राणिनामुपकाराय जाता वा । अरं पर्याप्तं करत् करोति । यो यजमानः नः अस्मानपि दृष्टमात्रान् पर्षदति पारयति अंहः पापम् । पापमतिगमयतीत्यर्थः । अथवातिनीय पापमस्मान् पर्षत् पालयति स्वस्तये अविनाशाय । उपालम्भनमेतत् । अयमभिप्रायः कोऽन्यो मत्तो विशिष्टतरो युष्माकं स्तोता यष्टा वास्ति. येनास्मान् स्तोतॄन् यष्टॄंश्च प्रति शीघ्रं नागच्छत यूयमिति ॥

येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्निर्मनसासप्तहोतृभिः ।

तआदित्याअभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये ॥

(अष्ट० ८. अध्या० २. वर्ग० ४. ऋ० ७.)

'येभ्यो होत्राम्' । येभ्यो युष्मभ्यम् आदित्येभ्यः होत्राम् । हूयत इति होत्राहुतिरिहाभिप्रेता आहुतिम् । प्रथमां प्रकृष्टाम् आद्यां वा । आयेजे आभिमुख्येन मर्यादया वा ददाति । मनुः यजमानमनुष्यः । अथवा मनुरादिक्षत्रियः । तस्मिन् पक्षे दत्तवानिति । किंविशिष्टः समिद्धाग्निः । मनसा । वाक्यशेषोऽत्र द्रष्टव्यः वषट्करिष्यन् देवतां मनसा ध्यायतीति । सप्तहोतृभिः सप्तभिर्ऋत्विग्भिः होतृपूर्वैः सह । ते यूयं हे आदित्याः! अदितेः पुत्राः! अभयं भयरहितं शर्म विमानाख्यं गृहं स्वर्गसुखं वा । यच्छत दत्तास्मभ्यम् । स्वर्गं गच्छतां च नः अस्माकं सुगा सुगमान् सुपथा सुपथान् शोभनान् मार्गान् । कर्त कुरुत यूयं स्वस्तयेऽविनाशायास्माकम् ॥

यईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्जगतश्चमन्तवः ।

तेनःकृतादकृतादेनसस्पर्यद्यादेवासःपिपृतास्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ४. ऋ० ८.)

---

१. 'स्मान् स्तु' घ. पाठः. २. 'आर्मानपि' ख. ग. पाठः. ३. 'त्र एव प' ख, पाठः,

'य ईशिरे' । ये यूयं भवन्तः ईशिरे ईशते । भुवनस्य वृष्ट्युदकस्य स्वर्गादिलोकजातस्य वा । प्रचेतसः प्रकृष्टज्ञाना इत्यर्थः । विश्वस्य सर्वस्य स्थातुः स्थावरस्य जगतश्च जङ्गमस्य च । मन्तवः स्वरूपतो ज्ञातारः सर्वज्ञा इत्यर्थः । ते यूयं नः अस्मान् । कृतादेनसः प्रतिषिद्धसेवनेन जनितात् पापात् । अकृतादेनसः विहिताकरणेन च जनितात् पापात् । परि सर्वतोऽद्य वर्तमानेऽहनि हे देवाः! पिपृत पालयत स्वस्तये अविनाशायास्माकम् ॥

भरेष्विन्द्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनम् ।
अग्निंमित्रंवरुणंसातयेभगंद्यावापृथिवीमरुतःस्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ४. ऋ० ९)

भरेषु सङ्ग्रामेषु इन्द्रं सुहवं शोभनाह्वानं हवामहे आह्वयामो वयम् । आत्मनः पालनार्थमिति शेषः । किञ्च अंहोमुचम् अंहसः पापान्मोचयितारं भक्तजनस्य सुकृतं पुण्यकृतं दैव्यं देवेषु भवं जनम् । उक्तव्यतिरिक्तं देवजनमित्यर्थः । हवामहे इत्यनुषङ्गः । अग्निं मित्रं वरुणं चाह्वयामः सातये शत्रुपरिभवलाभाय च । भगं द्यावापृथिव्यौ मरुतश्चाह्वयामः स्वस्तये सर्वप्रकारायाविनाशाय च अस्माकम् ॥

सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिम् ।
दैवींनावंस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ४. ऋ० १०.)

सुत्रामाणं सुष्ठु त्रात्रीं स्तोतृयष्टृजनस्य पालयित्रीम् । पृथिवीं विस्तीर्णां प्रख्यातां वा । द्यां दीप्तां स्तुत्यां वा अनेहसं क्रोधरहितां प्रसन्नचेतसमित्यर्थः । सुशर्माणं सुगृहां सुसुखां वा । अदितिमदीनाम् अनुपक्षीणां देवमातरम् । सुप्रणीतिं सुष्ठु प्रणेत्रीं स्तोतॄणां यष्टॄणां चेप्सितान् कामान् प्रतिपादयित्रीमित्यर्थः । दैवीं देवसम्बन्धिनीं नावं स्वरित्राम् नौः प्रणोद्यते येन तदरित्रं अपलकं केमालमिति वापभ्रंशेन नाविकानां प्रसिद्धम् । शोभनस्तुतियागप्रणोदनामित्यर्थः । अनागसमनपराधां निर्दोषामित्यर्थः । अस्रवन्तीम्

१. 'सुवहं शो', २. 'त्रुभवनला' घ. पाठः.. ३. 'व्यौ वरुणं चाह्व' ख. प. पाठः.

अविच्छिन्नाम् अविनश्यन्तीमित्यर्थः । आरुहेम अधितिष्ठेम स्वस्तयेऽवि-नाशायास्माकम् । एवङ्गुणविशिष्टामदितिं नावमारोहेम अविनाशाय । यथा लोके सामुद्रं जलमुत्तितीर्षवः पुरुषा लौकिकीं नावमारोहन्ति तद्वदित्यभिप्रायः । अथवा दैवीमिति देवाः सर्वे नौरिति स्तूयन्ते ॥

विश्वे॑यजत्रा॒अधि॑वोचतो॒तये॒त्राय॑ध्वंनोदु॒रेवा॑या॒अभि॒ह्रुत॑ः ।

स॒त्यया॑वोदे॒वहू॑त्याहुवेमशृण्व॒तोदे॑वा॒अव॑सेस्व॒स्तये॑ ॥

(अष्ट० ८. अध्या० २. व० ५. ऋ० ११.)

विश्वे यजत्राः । हे! विश्वेदेवाः! यजत्राः यष्टव्याः! यूयम् अधि वोचत । अधीत्युपरिभावमैश्वर्यं बाह । उपरि भूत्वा ब्रूत अस्मानिदं दृष्टा-दृष्टफलं कर्म कुरुतेति । ईश्वरान् वास्मान् ब्रूत कुरुतेत्यर्थः । ऊतये गमनाय सर्वकामावाप्तये इत्यर्थः । किञ्च त्रायध्वं पालयत नः अस्मान् दुरेवायाः । एवाः कामाः । दुष्कामायाः अशुभाभिलाषायाः । अभिह्रुतः अभिहिंसितुः कुटि-लगतेर्वा राक्षसजातेः सकाशात् । किञ्च सत्यया सद्गुणग्राहिण्या देवहूत्या । देवा आहूयन्ते यया सा देवहूतिः स्तुतिरिहाभिप्रेता तया देवहूत्या । वः युष्मान् शृण्वतः स्तुतीराकर्णयतः । हुवेम आह्वयेमेत्याशास्महे । किमर्थम् । अवसे हविषा युष्माकं तर्पणाय । स्वस्तये अस्माकं चाविनाशाय ॥

अपामी॑वा॒मप॒विश्वा॒मना॑हुति॒मपारा॑तिंदु॒र्विद॒त्रा॑मघा॒यत॑ः ।

आ॒रेदे॒वा॒द्द्वेषो॒अ॒स्मद्यु॑योतनो॒रुणः॒शर्म॑यच्छतास्व॒स्तये॑ ॥

(अष्ट० ८. अध्या० २ व० ५. ऋ० १२.)

अपामीवाम् । हे देवाः! अमीवां रोगजातिम् । अप । युयोतन इत्युत्तरास्मि-न्नर्धर्चे श्रूयमाणमाख्यातमिहापकृष्टव्यम् । अस्मदारे इति च । युयोतन यौतिः पृथग्भावार्थः । अपगमयत नाशयतेत्यर्थः । अस्मत् अस्मत्तः । आरे दूरे । अप-युयोतन च विश्वाम् अनाहुतिम् । आहुत्यात्र यज्ञो लक्ष्यते । भावप्रत्ययस्य लोपो द्रष्टव्यः । अनाहुतिताम् अकर्मण्यत्वं चेत्यर्थः । अपयुयोतन च अरातिम् अरातित्वम् अदानशीलतां च । दुर्विदत्रां दुर्ज्ञानतां च । अघायतः अघं

पापमस्माकं यतमानान् अस्मदनर्थे व्याप्रियमाणान् अस्मच्छत्रूनित्यर्थः । अपयुयोतन । किञ्च आरे दूरे अस्मत् अस्मत्तः अपयुयोतन द्वेषः द्वेष्टॄन्सच्छत्रून् उदासीनानपि । न चैतावदेव, किं तर्हि । उच्यते । उरु बहु विस्तीर्णं वा । शर्म । सुखनामैतत् । गृहनाम वा । गृहं सुखं वा । नः अस्मभ्यं यच्छत प्रयच्छत । स्वस्तयेऽविनाशायास्माकम् ॥

अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि ।
यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्वस्तये ।

(अष्ट० ८. अध्या० २. व० ५. ऋ० १३.)

'अरिष्टः' । उद्देशार्थं यच्छब्दश्रुतेरुत्तरोऽर्धर्चः प्रथमं व्याख्येयः । यं स्तोतारं यष्टारं च हे आदित्यासः! अदितेः पुत्राः! सर्वे देवाः! अति नयथ अतीत्य गमयथ सुनीतिभिः शोभनैर्नयैः । कल्याणैरुपदेशैरित्यर्थः । विश्वानि सर्वाणि दुरिता दुरितानि पापानि । स्वस्तयेऽविनाशाय अभिवृद्धये इत्यर्थः । स मर्तः मनुष्यः स्तोता यष्टा च अरिष्टः[1] अहिंसितः केनचिदपि विश्वः पधते पुत्रपौत्रधनादिभिर्वर्धते । किञ्च प्रजाभिः पुत्रपौत्रलक्षणाभिः । सहयोगलक्षणा चैषा तृतीया । प्रजाभिः सह प्रजायते धर्मणः[2] कर्मणः परि उपरि । श्रौतस्मार्तलक्षणेषु कर्मसु प्रजाभिः सह । श्रद्धावान् जायते इत्यर्थः ॥

यंदेवासोवथयवाजसातौयंशूरसातामरुतोहितेधने ।
प्रातर्यावाणंरथमिन्द्रसानसिमरिष्यन्तमारुहेमास्वस्तये ॥

(अष्ट० ८. अध्या० २. व० ५, ऋ० १४.)

'यं देवासः' । हे विश्वेदेवाः ! यं रथमात्मीयम् । अवथ[3] गच्छथ अधितिष्ठथेत्यर्थः । वाजसातौ । सङ्ग्रामनामैतत् । सङ्ग्रामे राक्षसादिभिः सह । यं च रथमवथ शूरसाता शूरसातौ सङ्ग्राम एव यूयमपि हे मरुतः! । यं च रथं हे इन्द्र! त्वमप्यवसि । किमर्थमिति चेत् । उच्यते । हिते धने । निमित्ते एते सप्तम्यौ चर्मणि द्वीपिनामितिवत् । प्रिये शत्रुधने निमित्ते । शत्रून् जित्वा तदीयं धनं सारवत् प्राप्तुमित्यर्थः । यमिति श्रुतेस्तमित्यध्याहार्यम् । तं रथं प्रातर्यावाणं प्रातर्यज्ञान् प्रति गन्तारम् । सानसिम् । 'वन षण सम्भक्तावि'त्यस्य सनोतेः

---

१. 'ष्टः के' ख. ग. पाठः. २. 'णः परि', ३. 'वगच्छ' घ. पाठः.

साभ्यासस्य कर्तरि कर्मणि वैतद्रूपम्। अत्यर्थं सम्भक्तारं शत्रूणाम्। अत्यर्थं सम्भजनीयं वा युष्माभिः। अरिष्यन्तम् अहिंस्यमानं शत्रुभिः अविनाशिनमित्यर्थः। आरुहेम युष्माभिः सह। वयमपि युष्माभिः सायुज्यं गच्छेमेत्यभिप्रायः। स्वस्तयेऽविनाशायास्माकम्॥

स्वस्तिर्नःपथ्यासुधन्वसुस्वस्त्य१प्सुवृजनेस्वर्वति।
स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन॥

(अष्ट० ८. अध्या० २. व० ५. ऋ० १५.)

'स्वस्ति नः'। स्वस्ति अविनाशं नः अस्मभ्यम्। मरुतो दधातनेति मन्त्रान्ते श्रूयमाणं पदद्वयं सर्वत्रानुवर्त्यम्। हे मरुतः। अस्मभ्यं स्वस्ति दधातनेति। क। पथ्यासु। पस्त्याशब्दस्य गृहनाम्नः सकारलोपो द्रष्टव्यः तकारस्य च थकारः। गृहेषु। सप्तमीनिर्देशाद् वर्तमानेभ्य इति शेषः। धन्वसु उदकवर्जितस्थलीषु च स्वस्ति। अप्सु सर्वेषु उदकेषु। वृजने सङ्ग्रामे च। कीदृशे। स्वर्वति। स्वश्शब्दः सर्वपर्यायः। सर्वयुद्धोपकरणवति। अतिभयङ्करे सङ्ग्रामे इत्यर्थः। स्वस्ति नः अस्माकं पुत्रकृथेषु पुत्राणां कर्तृषु जनयितृषु स्त्रीयोनिषु। स्वस्ति अविनाशमेव राये। सप्तम्यर्थे एषा चतुर्थी। धने च। दधातन धत्त दत्तेत्यर्थः॥

स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति।
सानोअमासोअरणेनिपातुस्वावेशाभवतुदेवगोपा॥

(अष्ट० ८. अध्या० २. व० ५. ऋ० १६.)

'स्वस्तिरित्'। इदेवार्थे। हिः पादपूरणः। मध्यमस्थाना स्त्रीदेवता स्वस्तिरित्युच्यते। स्वस्तिरेव नान्या काचिद् देवता। प्रपथे प्रकृष्टे पथि अन्तरिक्षलक्षणे। श्रेष्ठा अतिशयेन प्रशस्या। रेक्णस्वती वृष्ट्युदकधनेन धनवती। एति गच्छति च या वामम् अभि वननीयं प्रशस्यं वा प्रायणीयेष्टिहविः प्रति। सा स्वस्तिर्नः अस्मान् निपातु नियमेन रक्षतु। क। अमा। गृहनामैतत्। गृहे। सप्तमीनिर्देशात् स्थितानिति शेषः। गृहे स्थितानस्मान्। सो। सा उ सो। उकारोऽवधारणे। सैव। अरणे अरण्ये च निपातु। अथवा निसो लोपोऽत्र द्रष्टव्यः। निररणे गृहान्निर्गमने गृहाद् बहिश्चेत्यर्थः। किञ्च स्वावेशा

सूपसर्पा सुखसेव्या च भवतु अस्तु । देवगोपा । देवी चासौ गोप्त्री च सर्वस्य वृष्टिद्वारेण देवगोपा । देवानां वा गोप्त्री देवगोपा । देवा वा गोप्तारो यस्याः सा देवगोपा ॥

एवाप्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।

ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥

(अष्ट० ८. अध्या० २. व० ५. ऋ० १७.)

'एवाप्लतेः' । एवमुक्तेन प्रकारेण प्लतेः प्लतिनाम्नः ऋषेः सूनुः पुत्रः गयो नाम मनीषी मेधावी अवीवृधत् वर्धितवान् वीर्येण स्तुवन् वः युष्मान् । हे विश्वे ! सर्वे आदित्याः ! अदितेः पुत्राः ! हे अदिते ! हे ईशानासः सर्वस्येश्वराः! हे नराः! मनुष्याकाराः! शूरा वा । कथं वर्धितवान् । यतः अमर्त्येन अमर्त्यसदृशेन गुणैर्देवतुल्येनेत्यर्थः । अथवा 'देवो भूत्वा देवानप्येती'ति वचनात् अमर्त्येन सता मया देवेनेत्यर्थः । अमर्त्यता चित्राद्या (?) मर्त्येन मया गयेन अस्तावि स्तुतः । जनः दिव्यः दिवि भवः सर्वदेवजन इत्यर्थः । 'स्तूयमाना हि देवता वीर्येण विवर्धते' इत्यत एवमुच्यते वर्धितवान् वीर्येणेति ॥

अथाष्टकायाः पिण्डपितृयज्ञप्रकृतित्वात् पिण्डपितृयज्ञमन्त्राः आकृष्य व्याख्यायन्ते तत्र एकोन्मुकः[2] प्रागदक्षिणा प्रणयेद् 'ये रूपाणि प्रतिमुञ्चमानाः' इत्यनया वामदेवार्षया त्रिष्टुभा, उन्मुकाभिरभिधेयः ।

ये रूपाणि प्रतिमुञ्चमानाः असुरास्सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्ति अग्निष्टाल्लोकात्प्रणुदात्वस्मात् ॥

ये असुरा रूपाणि शरीराणि । पितॄणामिति वाक्यशेषः । प्रतिमुञ्चमानाः । प्रतिपूर्वो मुचिः परिग्रहार्थः । परिगृह्णन्तः । स्वयमसुराः सन्तः । स्वधया । स्वधेत्यन्नामामपि विशिष्टेऽन्ने पितृसम्बन्धिनि वर्तते । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । पित्र्यमन्नमुपभोक्तुमित्यर्थः । चरन्ति वेद्यामितस्ततश्चरन्ति । ये च परापुरः । पुरिति शरीरमुच्यते । परागतशरीराः प्रच्छन्नशरीरा इत्यर्थः । निपुरश्च नीचैर्गतशरीराश्च अल्पशरीरा इत्यर्थः । भरन्ति हरन्ति ।

---

१. 'ण वर्षे' ख. ग. पाठः. २. 'खः' ख. पाठः. ३. 'थे' भरन्ति ख. ग. पाठः.

किम् । सामर्थ्यात् स्वधाम् । अग्निः उन्मुकाख्यः तान् असुरान् लोकाद् अस्मात् स्थानात् प्रणुदातु प्रेरयतु अपकालयत्वित्यर्थः ॥[1]

स्फ्ये लेखामुल्लिखेद् 'अपहता' इति ।[2]

**अपहता असुरा रक्षांसि वेदिषदः ।**

वामदेवार्षं यजुः । असुरा राक्षसा अभिधेयाः । अपहताः । हन्तिरत्र गत्यर्थः । अपगताः । हिंसार्थ एव वा । अस्मिन् पक्षे अपेत्युपसर्गो धात्वर्थानुवादी । अपहता हिंसिता इत्यर्थः । सन्त्विति वाक्यशेषः । उभयस्मिन् पक्षे असुरा रक्षांसि च । वेदिषदः वेद्यां सीदन्तः । एतदुक्तं भवति—पितृरूपं धारयन्तो ये वेद्यां सीदन्ति हविरपजिहीर्षया असुरा रक्षांसि च ते अस्मात् स्थानादपगताः सन्तु भवन्त्विति ॥

मेक्षणेनादायावदानसम्पदा जुहुयात् 'सोमाय पितृमते स्वधा नमः' 'अग्नये कव्यवाहनाय स्वधा नम' इति द्वाभ्यां यजुर्भ्यां वामदेवार्षाभ्याम् ।

**सोमाय पितृमते स्वधा नमः। अग्नये कव्यवाहनाय स्वधा नमः।**

प्रथमस्य सोमः पितृमान् देवता । द्वितीयस्याग्निः कव्यवाहनः । सोमाय किंविशिष्टाय । पितृमते पितृभिस्तद्वते । स्वधा । अन्ननामैतत् । हविर्लक्षणमन्नम् । दीयते इति वाक्यशेषः । नमः । प्रह्वीभावश्च क्रियत इति वाक्यशेषः । अथवा स्वधा नम इति पदद्वयं प्रदानार्थीयम् । स्वधा नम इति वषट्कारलिङ्गात् । अग्नये कव्यवाहनाय । कव्यशब्देन पित्र्यं हविरुच्यते । तस्य वोढा कव्यवाहनः । तस्मै कव्यवाहनाय । स्वधा नम इत्युक्तार्थः ॥

लेखां त्रिरुदकेनोपनयेत् 'शुन्धन्तां पितर' इत्यादिभिर्यजुर्भिः त्रिभिर्वामदेवार्षैः पितृपितामहप्रपितामहदैवतैः ।

**शुन्धन्तां पितरः । शुन्धन्तां पितामहाः । शुन्धन्तां प्रपितामहाः ।**

शुन्धन्ताम् । 'शुन्ध शौचे' । शुध्यन्तु शुचयो भवन्तु आचामन्त्वित्यर्थः । पितरः । एकवचनस्य स्थाने बहुवचनम् । लेखायामुपरि दीयमानेनोदकेनास्मत्पिता शुध्यतु आचामत्वित्यर्थः । अनेनैव व्याख्याते उत्तरे यजुषी ॥

पिण्डनिपरणमन्त्रः — 'एतत् ते ततासौ ये च त्वामत्रान्वि'ति —

**एतत् ते ततासौ ये च त्वामत्रानु । एतत् ते पितामहासौ ये च त्वामत्रानु । एतत् ते प्रपितामहासौ ये च त्वामत्रानु ॥**[3]

---

१. 'द' ख. पाठः. २. 'इत्यनेन वा' घ. ङ. पाठः. ३. 'ताः भ' ख. ग. पाठः.

वामदेवार्षं यजुः । पितृपितामहप्रपितामहाः क्रमेण देवताः । हे असौ । असौशब्दस्थाने पितुर्नाम सम्बुद्ध्या निर्दिशेत् । हे देवदत्त ! एतत् पिण्डलक्षणमन्नं ते तुभ्यम् । दीयते इति वाक्यशेषः । न च केवलाय, किन्तर्हि । ये च त्वामनु । गच्छन्तीति वाक्यशेषः । अत्रास्मिन् कर्मणि तेभ्यश्च । एतदुक्तं भवति— हे पितः ! देवदत्त ! तुभ्यं त्वदनुचरेभ्यश्चास्मिन् कर्मणि पिण्डलक्षणमन्नं दीयत इति । अयमेव मन्त्रः पितामहप्रपितामहयोरपि पिण्डनिपरणे । अयं तु विशेषः— असौशब्दस्थाने तदीयं नाम निर्देष्टव्यम् । पित्रादीनां नामापरिज्ञाने असौशब्दस्थाने ततपितामहप्रपितामहशब्दा यथाक्रमं प्रयोक्तव्याः ॥

निपृताननुमन्त्रयेत — 'अत्र पितरः' इति ।

**अत्र पितरो यथाभागं मादयध्वम् । यथाभागमावृषायध्वम् ।**

वामदेवार्षं यजुः । पितृपितामहप्रपितामहा देवताः । अत्रास्मिन् काले अस्मिन् कर्मणि वा । हे पितरः ! । पितृशब्देनात्र साहचर्यात् पितृपितामहप्रपितामहा उच्यन्ते । हे पितृपितामहप्रपितामहाः ! । मादयध्वम् । मदिस्तृप्त्यर्थः । स्वार्थे च णिच् । माद्यत तृप्यत इत्यर्थः । यथाभागं यो यस्य यस्य भागस्तं तम् । वहन्तो भुक्त्वेति शेषः । आकारो वाक्यपूरणः । वृषायध्वं वृषा इवाचरत । वृषवदाचरणेन तृप्त्यतिशयो लक्ष्यते । अत्यर्थं तृप्यतेत्यर्थः ॥

पुनः पिण्डानुमन्त्रणमन्त्रः — 'अमीमदन्ते'ति ।

**अमीमदन्त पितरो यथाभागमावृषायिषत ।**

वामदेवार्षं यजुः । पित्रादय एवाभिधेयाः । अमीमदन्त अत्यर्थं तृप्यत । पितृपितामहप्रपितामहाः । यथाभागं यथांशम् । भुक्त्वेति वाक्यशेषः । आ वृषायिषत । आकारो वाक्यपूरणः । वृषा इवाचरितवन्तः अत्यर्थं तृप्ता भवथ इत्यभिप्रायः । अतः पित्रादीनां तृप्त्या कृतकृत्योऽहं भवामीत्यर्थः ॥

**असावभ्यङ्क्ष्वासावाङ्क्ष्व ।**

इति वामदेवार्षे यजुषि पित्रादयोऽभिधेयाः । असौ हे देवदत्त ! पितरभ्यङ्क्ष्व । अञ्जिर्म्रक्षणार्थः । अभ्यञ्जनं कुरु । तैलेनेति वाक्यशेषः । एवं पितामहप्रपितामहयोः ॥

वासोदानमन्त्रः — 'एतद् वः पितर' इति ।

**एतद्वः पितरो वासः । मा नोऽतोऽन्यत् पितरो युङ्ध्वम् ।**

वामदेवार्षं यजुः पित्रादिदैवतम् । हे पितरः! एतद्वः वासो दशादि-लक्षणं वः युष्मभ्यम् । प्रदीयते इति वाक्यशेषः । प्रदीयमानं च नः अस्माकं स्वभूतं युङ्ध्वम् । शुद्धोऽप्ययं युजिरुपपूर्वो द्रष्टव्यः । उपयुङ्ध्वं परिधत्तेत्यर्थः । अतो वाससोऽन्यत् मा उपयुङ्ध्वम् । इदमेव वासः कार्ये कुरुतेत्यर्थः ॥

अथ पितॄनुपतिष्ठेत 'नमो वः पितर' इत्यादिं ।

**नमो वः पितर इषे । नमो वः पितर ऊर्जे । नमो वः पितरश्शुष्माय । नमो वः पितरो घोराय । नमो वः पितरो जीवाय । नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितरः । इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम ।**

इह सन्तः स्यामेत्येतदन्तमेकं यजुः । अथवा प्रतिवाक्यं मन्त्रभेदः । वामदेवार्षं पितृदैवतम् । हे पितरः! पितृपितामहप्रपितामहाः! वः युष्मभ्यं नमः कर्म । क्रियते इति वाक्यशेषः । किमर्थम् । इषे । तादर्थ्ये एषा चतुर्थी । अन्नार्थमित्यर्थः । ऊर्जे रसाय । न च केवलाय, किन्तर्हि । नमो वः पितरः शुष्माय । शुष्ममिति बलनाम । बलाय च । नमो वः पितरो घोराय । 'घृ क्षरणदीप्त्योरि'त्यस्यैतद् रूपम् । दीप्त्यै च । नमो वः पितरो जीवाय सुखजीवनाय चेत्यर्थः । नमो वः पितरो रसाय । रसो वीर्यमित्यनर्थान्तरम् । वीर्याय चेत्यर्थः । हे पितरः! वः युष्मभ्यं स्वधा कव्यलक्षणमन्नम् । अस्माभिर्दत्तमिति वाक्यशेषः । नमो वः पितरः! असकृन्नमस्कृतिश्च कृता नम एताः । नमस्कृतय एता इत्यर्थः । युष्माकम् । प्रीतिमुत्पादयन्त्विति वाक्यशेषः । हे पितरः! इमाः । काः । सामर्थ्या-दस्मत्प्रार्थनाः अस्माकम् । सिध्यन्त्विति वाक्यशेषः । जीवाः । जीवशब्दोऽत्र प्रजावचनोऽन्तर्णीतमत्वर्थः । प्रजावन्तः । वः युष्माकम् । प्रसादेनेति वाक्य-शेषः । जीवन्तः शतसंवत्सरलक्षणं कालं प्राणान् धारयन्तः इह लोके स्याम भवेमेत्याशास्महे ॥

**मनोन्वाहुवामहेनाराशंसेनसोमेन ।**
**पितॄणांचमन्मभिः ॥**

(अष्ट० ८. अध्या० १. व० १९. ऋ० १.)

मनोन्वा हुवामहे इति च तिसृभिः। पितॄनुपतिष्ठेतेत्यनुवर्तते। बन्धुर्गौपायनो लौपायनो वा ऋषिः। तिस्रो गायत्र्यः। पितरोऽभिधेयाः। पित्र्यं कर्म कुर्वतां मनः पितृलोकस्थं भवति। ततस्तदाहूयते जीवनाय अस्मदीयं मनः षष्ठमिन्द्रियं नु क्षिप्रम् आहुवामहे पितृलोकस्थं पितृलोकादागमनायाह्वयामः। केन। उच्यते। नाराशंसेन। नरैर्मनुष्यैर्ऋत्विग्यजमानैः प्रशस्तेन स्तुतेन। सोमेन। पितृभ्यो दत्तेनेति शेषः। पितॄणां च सम्बन्धिभिः मन्मभिः मदनीयैः स्तोमैश्च। पितॄन् स्तुत्वेति वाक्यशेषः॥

आतएतुमनःपुनःक्रत्वेदक्षायजीवसे।

ज्योक्चसूर्यंदृशे॥

(अष्ट० ८. अध्या० १. व० १९. ऋ० ४.)

'आ त एतु'। ते तव यजमानस्यान्तरात्मनो वा मनः आ एतु आगच्छतु पितृलोकात् पुनः भूयोऽपि। क्रत्वे सङ्कल्पितार्थायेत्यर्थः। दक्षाय। 'दक्ष वृद्धौ'। वृद्धये च। सङ्कल्पितार्थसमृद्धये चेत्यर्थः। 'स यदेव मनसा कामयते इदं मे स्याद् इदं कुर्वीयेति, स एव क्रतुः। अथ यदस्मै तत् समृध्यति स दक्षः' इति ब्राह्मणवचनात्। जीवसे जीवनाय च। ज्योक् च सुचिरं कालं सूर्यं दृशे द्रष्टुम्। सुचिरं कालं सूर्यस्य सन्दर्शनाय चेत्यर्थः॥

पुनर्नःपितरोमनोददातुदैव्योजनः।

जीवंव्रातंसचेमहि॥

(अष्ट० ८. अध्या० १. व० १९. ऋ० ५.)

'पुनर्नः'। हे पितरः! युष्माभिर्दत्तमस्मन्मनः पुनः पश्चात् नः अस्मभ्यं ददातु दैव्यः देवेषु भवः इन्द्रादिदेवजन इत्यर्थः। तेन दत्तेन मनसा जीवं भोक्तृपुरुषं व्रातमिन्द्रियसङ्घातं च सचेमहि सेवेमहि भोगोपहारैः॥

अथैनान् पितॄन् प्रवाहयेत्—'परेतन पितरः' इत्यनया वामदेवर्षिया त्रिष्टुभा जगत्या वा पितृदेवतया।

परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः दक्षायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत।

१. 'ल्पप्रार्थनाये' घ. ङ. पाठः।

हे पितरः! परेतन। नशब्द उपजनः। कर्तन गन्तन यातनेति यथा। अस्मद्यज्ञगृहात् स्वं स्वं गृहं प्रति परेत पराङ्मुखा गच्छतेत्यर्थः। सोम्यासः सोमसम्पादिनः। केन परागच्छाम। पथिभिर्मार्गैः। किंविशिष्टैः। गम्भीरेभिः। गम्भीरैः प्रहतैः प्रसिद्धैरित्यर्थः। पूर्विणेभिः। पूर्व एव पूर्विणः स्वार्थिकस्तद्धितः। पूर्वैरनादिसिद्धैश्चिरन्तनैरित्यर्थः। दत्त्वाय दत्त्वा अस्मभ्यं द्रविणा। धननामैतत्। द्रविणानि धनानि हिरण्यादिलक्षणानि। बलं वा द्रविणम्। रयिशब्देन पौनरुक्त्यप्रसङ्गात्। इहास्मिन् लोके। भद्रं भजनीयं रयिं च धनं च व्रीह्यादिलक्षणम्। (सर्वप्रकारं वा?) सर्ववीरम्। वीरशब्दः पुत्रवचनः। सर्वैः पुत्रैरुपेतम्। पुत्राणां सर्वत्वं दशत्वम्। "दशास्यां पुत्रानाधेही"ति लिङ्गात्। दशभिः पुत्रैरुपेतमित्यर्थः। नः अस्मभ्यम्। नियच्छत नियमेन दत्त। अथवा उपसर्गव्यत्ययः। प्रयच्छतेत्यर्थः॥

अग्निं प्रत्येयात् अग्ने तमद्याश्वमिति।

**अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशम्।**

**ऋध्यामातओहैः॥**

(अष्ट० ३. अध्या० ५. व० १०, ऋ० १.)

वामदेवो गौतमऋषिः। पङ्क्तिश्छन्दः। अग्निर्देवता। हे अग्ने! यस्तुतोऽसि सर्वैः तं त्वाम् अद्यास्मिन् काले। स्तोमैः स्तोत्रैः त्वद्गुणप्रकाशकैः। तृतीयानिर्देशात् स्तौमीति शेषः। किमिव। अश्वं न। अश्वमिव। यथाश्वं क्षिप्रगामिनं स्तुवन्त्यश्ववाराः तद्वत्। किञ्च। क्रतुं न। क्रतुशब्दोऽत्र प्रज्ञावचनः अन्तर्णीतमत्वर्थः क्रतुमन्तमिव। यथा च प्रज्ञावन्तं पुरुषं स्तुवन्त्यन्ये तद्वत्। स्तुत्वा च भद्रं भजनीयं स्तुत्यं, भजनीयं वा सेव्यम्। हृदिस्पृशं हृदयेन स्पृश्यं सर्वदा स्मर्तव्यमित्यर्थः। ऋध्याम ऋधिरत्रान्तर्णीतण्यर्थः। अर्धयाम वर्धयामेत्यर्थः। ते। द्वितीयार्थे एषा चतुर्थी षष्ठी वा। त्वाम्। ओहैः उह्यन्ते देवताः प्रतीत्योहशब्देनात्र हवींष्यभिप्रेयन्ते। हविर्भिः पुरोडाशादिलक्षणैः। अथवा ओहशब्दः स्तोमविशेषणम्। ते च देवतां प्रत्युह्यन्ते प्राप्यन्ते। प्राप्त्या च प्रीतिर्लक्ष्यते प्रीतिकरैः स्तोमैस्त्वं त्वां वर्धयामेति॥

गार्हपत्यं प्रत्येयाद् 'यदन्तरिक्षमि'ति।

**यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वाजिहिंसिम। अग्निर्मा तस्मादेनसः प्रमुञ्चतु करोतु मामनेनसम्।**

वामदेवार्षम् । जगती । गार्हपत्योऽभिधेयः औपासनो वा । यदन्तरिक्षम् । तत्स्था अभिप्रेयन्ते । अन्तरिक्षस्थान् वाय्वादिदेवानित्यर्थः । अर्धर्चान्ते श्रूयमाणमजिहिंसिमेत्याख्यातमिहानुषक्तव्यम् । अन्तरिक्षस्थान् देवानजिहिंसिम । एकवचनस्य स्थाने बहुवचनम् । अग्निर्मा तस्मादित्येकवचनश्रवणात् । अत्यर्थं हिंसितवानस्मि । स्तुतियागयोरकरणं हि देवतानां हिंसा । यदहमन्तरिक्षस्थान् देवान् अस्तुतवान् अनिष्टवांश्चेत्यर्थः । यत् यच्च पृथिवीं पृथिवीस्थान् देवान् अजिहिंसिम । उत अपि यदपि द्यां द्युस्थान् देवानजिहिंसिम । यच्च मातरं पितरं वा । वाशब्दश्चार्थे । पितरं चाजिहिंसिम । मातापित्रोर्हिंसा यथाप्राप्तकालायाः पूजाया अकरणम् । यच्च मातापितरावपूजितवानित्यर्थः । तस्मादेनसः स्थानत्रयसम्बन्धिदेवतास्तुतियागाकरणनिमित्तान्मातापितृपूजाकरणनिमित्ताच्च पापाद् अग्निर्गाहपत्याख्यः । गृहे गार्हपत्यशब्दस्यैवं योजना- गृहशब्दो दारवचनः । पतिशब्दो वरवचनः । तयोः संयोगजत्वाद् गार्हपत्यशब्देनौपासनाग्निरभिप्रेयते । मा मां प्रमुञ्चतु । मुचिरत्रान्तर्णीतण्यर्थः । प्रमोचयतु । प्रमोच्य च करोतु मामनेनसम् अर्थप्राप्तवचनमेतदादरार्थम् ॥

'वारं मे दत्त पितर' इति पिण्डानां मध्यमम् । उपाददीत इति शेषः ।

वीरं मे दत्त पितरः ।

वामदेवार्षं यजुः पितृदैवतम् । हे पितरः! वीरं पुत्रं मे मह्यं दत्त प्रयच्छत ॥

मध्यमं पत्नीं प्राशयेत् 'आधत्त पितर' इति ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजं यथायमरपा असत् ।

वामदेवार्षम् । गायत्री । पितृदैवतम् । हे पितरः ! गर्भमाधत्त । दधातिरत्रान्तर्णीतण्यर्थः । आधापयत आस्थापयतेत्यर्थः । कीदृशं गर्भम् । कुमारं पुमांसं पुष्करस्रजम् । भविष्यद्वृत्त्या विशेषणमेतत् । पुष्करादिपुष्पग्रथितमालालङ्कारयोग्यमित्यर्थः । यथा येन प्रकारेण अयं कुमारः । उत्पन्नः सन्निति शेषः । अरपः । रप इति पापनाम । अपापः । असत् । लेडन्तमेतद् । भवेदित्यर्थः । तथा यूयं प्रसीदतेति वाक्यशेषः ॥

पिण्डपितृयज्ञः समाप्तः ॥

---

१. 'वानस्मीत्यर्थः' ख. पाठः.

'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणाम्' इति प्रकृत्य 'उदीरतामवर' इत्यष्टाभिर्हुत्वा 'यावर्त्ताभिर्वा कामयीते'ति।

उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः।
असुंयईयुरवृकाऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥

(अष्ट० ७, अध्या० ६. व० १७, ऋ० १.)

उदीरतामवर इत्येतत् सूक्तं चतुर्दशर्चं त्रैष्टुभं पितृदैवतं शङ्खो ददर्श। एकादशी तु जगती। उदीरताम्। उदाङ्स्थाने। 'ईर गतौ'। आगच्छन्तु। पितृलोकादिति शेषः। अवरे अवरस्थाः पृथिवीस्थाना इत्यर्थः। उदीरतां परासः परे द्युःस्थाना इत्यर्थः। उदीरतां मध्यमाः अन्तरिक्षस्थाना इत्यर्थः। पितरः सोम्यासः सोमसम्पादिनः। पित्र्याः शंसतीत्यादिस्तुतिसम्बन्धात् सोमसम्पादित्वं पितृणां द्रष्टव्यम्। किञ्च असुं प्राणं ये ईयुः गताः स्थूलशरीरं परित्यज्य प्राणं सूक्ष्मशरीरं लिङ्गात्मानं हिरण्यगर्भम्। उत्तमां गतिं गता इत्यर्थः। अवृकाः वृकवद्धिंसकत्वाद् वृकः शत्रुः तद्रहिताः। सर्वस्य मित्रभूता इत्यर्थः। अथवा 'वृक आदाने'। आप्तकामत्वान्न कस्यचिदादातारः। ऋतज्ञाः सत्यस्य यज्ञस्य वृष्ट्युदकस्य वा ज्ञातारः। (ते पितरः) नः अस्मान्। अवन्तु रक्षन्तु। हवेषु आह्वानेषु सत्सु। अस्माभिराहूताः सन्तः पितृलोकादागत्यास्माभिर्दत्तमोदनादि हविर्भुक्त्वा अस्मान् रक्षन्त्वित्यर्थः। सर्वेषु मन्त्रेष्वन्ते स्वाहाकरणं कर्तव्यम्[1]॥

इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः।
येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥

(अष्ट० ७, अध्या० ६. व० १७. ऋ० २.)

इदं पितृभ्यः। ये पूर्वास इति यच्छब्दश्रुतेर्द्वितीये पादे व्याख्यारम्भः। ये पितरः पूर्वासः पूर्वाः। ईयुः अस्माल्लोकादमुं लोकं गताः। ये उपरासः उपराः पूर्वेभ्योऽपि पराः चिरन्तना इत्यर्थः। ईयुः अस्माल्लोकादमुं लोकं गताः। ये च पार्थिवे रजसि पार्थिवे लोके। आनिषत्ताः ब्राह्मणादिविशिष्टजातिसम्बन्धादाभिमुख्येन मर्यादया वा निषण्णाः अवस्थिता इत्यर्थः। ये वा। वाशब्दश्चार्थे। ये च। नूनमिति पदपूरणः। सुवृजनासु सुष्ठु

१. 'कारः कर्तव्यः।' घ. ङ. पाठः.

वर्जनीयासु विक्षु चण्डालादिमनुष्यजातिषु ईयुर्गताः उत्पन्ना इत्यर्थः । अथवा वृजनमिति बलनाम । विट्शब्दश्च विशन्त्यासु पापिन इति यातना अभिप्रेताः । सुबलासु यातनासु गता इत्यर्थः । यच्छब्दश्रुतेः तच्छब्दमध्याहृत्य प्रथमपादो व्याख्येयः । तेभ्यः पितृभ्य इदं नमः । अन्ननामैतत् । अन्नमोदनादि हविर्लक्षणम् । अस्तु भवतु । अद्यास्मिन्नहनि ॥

आहंपितॄन्त्सुविदत्राँअवित्सिनपातंचविक्रमणंचविष्णोः ।
बर्हिषदोयेस्वधयासुतस्यभजन्तपित्वस्तइहागमिष्ठाः ॥

(अष्ट० ७. अध्या० ६. व० १७. ऋ० ३.)

आहं पितॄन् । अहम् आ अवित्सि मर्यादयाभिमुख्येन वा जानामि । कान् । पितॄन् । किंविशिष्टान् । सुविदत्रान् शोभनदन्तान् । नपातं च । एकस्य नञोऽत्र लोपो द्रष्टव्यः । न न पातीति नपात् सर्वस्य जगतः पातेत्यर्थः । कोऽसौ । लोकः । तं नपातं च । विक्रमणं च यत्र त्रैलोक्यं विक्रान्तवान् विष्णुस्तं च त्रैलोक्यं विष्णोः स्वभूतम् । प्रत्यवस्थितानिति शेष । विष्णुलोकं त्रैलोक्यं च समाश्रितानित्यर्थः । अवित्सीत्यनेन सम्बन्धः । अत्रोत्तरार्धर्चेनैक वाक्यतायै यत्तदध्याहार्यम् । यानवित्सि ते च । ये पितरः बर्हिषदः वेद्यां स्तीर्णे बर्हिषि सत्तारः एवंसंज्ञाः । स्वधया । अन्ननामैतत् । सहयोगलक्षणा चैषा तृतीया । पुरोडाशलक्षणेनान्नेन सह । सुतस्य (पित्वः) सोमरसलक्षणस्यान्नस्य । षष्ठीनिर्देशादेकदेशं स्वांशलक्षणम् । भजन्त भजन्ते सेवन्ते उपयुञ्जते च । ते इह अस्मद्यज्ञे आगमिष्ठाः आगन्तारः । भवन्त्विति शेषः । अस्मद्यज्ञनिर्वृत्तये अस्मदभिलषितार्थप्राप्तये चागच्छन्त्वित्यर्थः ॥

बर्हिषदःपितरऊत्य१र्वागिमावोहव्याचकृमाजुषध्वम् ।
तआगतावसाशंतमेनाथानःशंयोररपोदधात ॥

(अष्ट० ७. अध्या० ६. व० १७. ऋ० ४

बर्हिषदः । उत्तरार्धर्चे तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । हे बर्हिषदः! पितरः! येषां वः युष्माकम् ऊती ऊत्या अस्मत्पालनेन युष्मत्तर्पणेन वा निमित्तेन । अस्मत्पालनार्थं युष्मत्तर्पणार्थं वा इत्यर्थः । इमा इमानि । हव्या हवींषि । चकृम कृतवन्तो वयम् । ते यूयम् आगत आगच्छत ।

कथम् । अर्वाक् । अस्मदभिमुखम् । किमर्थमागच्छामः ! उच्यते । अवसा शन्तमेन । हेतावियं तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । सुखतमेन अस्मत्पालनेन हेतुना । अस्मान् सुखतमं पालयितुमित्यर्थः । युष्मत्तर्पणार्थं वा । आगत्य जुषध्वं सेवध्वम् । हवींषीति शेषः । अथ हविरुपभोगानन्तरं नः अस्मभ्यं शं शमनम् उत्पन्नानां रोगाणाम् उपशमनमित्यर्थः । योः यापनं पृथग्भावनमुत्पत्स्यमानैर्भयैरसम्बन्धं चेत्यर्थः । अरपः । भावप्रत्ययलोपो द्रष्टव्यः । अपापत्वं च । दधात यूयम् ॥

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।

त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥

(अष्ट० ७. अध्या० ६. व० १७. ऋ० ५.)

उपहूताः पितरः । यच्छब्दमध्याहृत्य द्वितीयः पादः पूर्वं व्याख्येयः । आर्थिकोऽयं क्रमः । ये पितरः बर्हिष्येषु बर्हिषि भवेषु बर्हिषि सादितेषु । केषु । सामर्थ्याद्धविःषु । कीदृशेषु । निधिषु । निधिवन्महादरेण संस्कृतेष्वित्यर्थः । प्रियेषु इष्टेषु । निमित्त एषा[१] सप्तमी । बर्हिस्सादितानि हवींष्युपभोक्तुमित्यर्थः । उपहूताः अस्माभिराहूताः । सोम्यासः सोमसम्पादिनः । ते पितरः आगमन्तु आगच्छन्तु । इह अस्मद्यज्ञे ते त एव श्रुवन्तु शृण्वन्तु । अस्मत्स्तुतीरिति शेषः । अधिब्रुवन्तु अस्मद्धुतसुशन्त्वित्यर्थः । ते त एव अवन्तु रक्षन्तु अस्मान् सर्वदा सर्वत्र ॥

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।

मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥

(अष्ट० ७. अध्या० ६ व० १८. ऋ० ६.)

आच्या जानु । पितॄणामयं स्वाभाविको धर्मः । 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्ये'ति वचनात् । जानु आच्य दक्षिणं जानु भूमौ निपात्य । दक्षिणतः दक्षिणपार्श्वे । निषद्य उपविश्य । इमम् अस्मदीयं यज्ञम् । अभिगृणीत आभिमुख्येन स्तुत । विशिष्टतृप्तियोगात् परया प्रीत्या सगुणमिदं कर्मेति प्रशंसत इत्यर्थः । विश्वे सर्वे यूयं, महता यत्नेनापि कर्म कुर्वन्तो वयं

१. 'ताः', २. 'म्याः' घ. ङ. पाठः.

प्रमादाद् यदागः कर्मवैगुण्यंजातमपराधम् । वः युष्माकम् । पुरुषता । 'सुपां सुलुगि'त्यनेन तृतीयैकवचनस्याकारः । पुरुषतया मनुष्यत्वेन हेतुना । कराम कृतवन्तः । कृतेन तेन केनचित् केनाप्यपराधेन नः अस्मान् मा हिंसिष्ट हे पितरः ! ॥

आसीनासोअरुणीनामुपस्थेरयिंधत्तदाशुषेमर्त्याय ।

पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधात ॥

(अष्ट० ७. अध्या० ६. व० १८. ऋ० ७.)

आसीनासः । पितरः ! आसीना उपविष्टाः अरुणीनामारोचमानानाम् । कासाम् । सामर्थ्यादग्निज्वालानां देवतानां वा । अरुणीविशेषणादिष्टोपयोजनगवोपलक्षितोषसां वा । उपस्थे उपस्थाने समीपे वेद्याख्ये रयिं धनं धत्त दत्त दाशुषे हविर्दत्तवते[2] यजमानाय मर्त्याय मनुष्याय । किञ्च तस्य यजमानस्य पुत्रेभ्यः पौत्रेभ्यश्च प्रयच्छत । किम् । वस्वः । द्वितीयार्थे षष्ठ्येषा । वसु धनम् । षष्ठीनिर्देशाद् वा एकदेशमिति शेषः । ये यूयमित्थं प्रार्थ्यध्वे[3] ते इह सन्निहितेष्वस्मासु ऊर्जं रसवदन्नं दधात दत्त । अस्मभ्यं चान्नं दत्तेत्यर्थः ॥

येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः ।

तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥

(अष्ट० ७. अध्या० ६. व० १८. ऋ० ८.)

ये नः पूर्वे । ये नोऽस्माकं पितरः पूर्वेऽतीतकाले सोम्यासः सोमसम्पादिनः वसिष्ठाः वसीयांसः अतिशयेन धनवन्तः । आच्छादयितृतमा वा स्वेन तेजसा । परिहितवसना वा । अनूहिरे । 'वह प्रापणे' । आनुपूर्व्येणोढवन्तः । आत्मानं प्रति प्रापितवन्त इत्यर्थः । सोमपीथं सोमपानम् । तेभिः तैः अस्मत्पितृभिः सह । यमः पितृराजः । संरराणः । समित्येकीभावे । एकीभूय रममाणः । अथवा रातेर्दानकर्मण एतद् रूपं न रमेः । अस्मत्पितृभिः संभूयास्मदभिरक्षितं ददत्तित्यर्थः । हवींषि अस्मद्दत्तानि । उशन् । 'वश कान्तौ' । कामयमानः । उशद्भिः हवींषि कामयमानैः पितृभिः प्रतिकामं कामं प्रति यावदभिलषितमित्यर्थः । अत्तु भक्षयत्वित्यर्थः ॥

---

१. 'ष्यकृतमप' क. पाठः. २. 'वींषि द' ख. क. पाठः. ३. 'न्ते' ख. घ. ग. पाठः. ४. 'स्म' क. पाठः. ५. 'मामास उ' ख. ग. पाठः.

येत॒तृ॒पुर्दे॒व॒त्रा जेह॑माना होत्रा॒विदः॒ स्तोम॑तष्टासो अ॒र्कैः ।
आग्ने॒ याहि सुवि॒दत्रे॑भिर॒र्वाङ् स॒त्यैः क॒व्यैः पि॒तृभि॑र्घर्म॒सद्भिः॑ ॥

(अष्ट० ७. अध्या० ६. व० १८. ऋ० ९.)

ये तातृषुः । ये पितरः तातृषुः तीर्णाः प्राप्ता इत्यर्थः । देवत्रा । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः–' इति द्वितीयायाः त्रा द्रष्टव्यः । ( देवान् ।) जेहमानाः । 'ओहाङ् गतौ' । ज्ञानकर्मसमुच्चयेन क्रमेण गच्छन्तः । देवत्वं क्रमेण प्राप्ता इत्यर्थः । होत्राविदः । होत्रेति यज्ञनाम । यज्ञानां यथावद्वेदितारः । स्तोमतष्टासः । तक्षतिः करोतिकर्मा । स्तोमानां कर्तारः । अर्कैः लक्षणैः अन्नैर्वा[1] हविर्लक्षणैः सह । हविषां च कर्तार इत्यर्थः । पुरस्ताद् यच्छ्रुतेस्तदध्याहारः । तैः पितृभिः सह । हे अग्ने । अर्वाङ् अस्मदभिमुखम् । आयाहि आगच्छ । कीदृशैः । सुविदत्रेभिः शोभनविद्यैः । कल्याणज्ञानैरित्यर्थः । सत्यैः अविसंवादिभिः । अवितथप्रसादैरित्यर्थः । कव्यैः । पितृदेवत्यं हविः कव्यम् । तत्सम्बन्धात् कव्यभुजः कव्या इत्युच्यन्ते । तैः कव्यभुग्भिः । अथवा कवय एव कव्याः । स्वार्थिको यत् । मेधाविभिर्वा । घर्मसद्भिः घर्म इति यज्ञनाम । यज्ञसादिभिरित्यर्थः ॥

ये स॒त्यासो॑ हवि॒रदो॑ हवि॒ष्पा इन्द्रे॑ण दे॒वैः स॒रथं॒ दधा॑नाः ।
आग्ने॑ याहि स॒हस्रं॑ देवव॒न्दैः परैः॒ पूर्वैः॑ पि॒तृभि॑र्घर्म॒सद्भिः॑ ॥

(अष्ट० ७. अध्या० १. व० १८. ऋ० १०.)

ये सत्यासः । ये पितरः सत्यासः सत्याः अवितथवचनाः । हविरदः अदनयोग्यस्य पुरोडाशादेर्हविषोऽत्तारः भक्षयितारः । हविष्पाः पानयोग्यस्य सोमरसादेर्हविषः पातारः । इन्द्रेण देवैरपि सरथं समानमेकं तुल्यं वा रथम् । दधानाः । लडर्थेऽयं शानच् । गमनाय धारयन्ति प्रेरयन्तीत्यर्थः । पुरस्ताद्यच्छ्रुतेस्तदध्याहारः । तैः पितृभिः सह । हे अग्ने । आयाहि आगच्छ । सहस्रम् । बहुनामैतत् । तृतीयार्थे च प्रथमा । सहस्रेण बहुभिरित्यर्थः । देववन्दैः । वदिः स्तुत्यर्थः । देवस्तुतिभिः । परैः परकालीनैः । पूर्वैः पूर्वकालीनैश्च । घर्मसद्भिः यज्ञसादिभिः महावीरसादिभिरादित्यसादिभिर्वा ॥

---

१. 'न्नै' ख. पाठः.

अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीतयः ।
अत्ताहवींषिप्रयतानिबर्हिष्यथारयिंसर्ववीरंदधातन ॥

(अष्ट० ७. अध्या० ६. व० १९. ऋ० ११.)

अग्निष्वात्ताः । अग्निनास्वादिताः शोभनमुपभोजिताः । एतन्नामानो वा । हे पितरः ! इहास्मिन् वर्तमाने कर्मणि पितृकर्मणि आगच्छत । आगत्य च सदःसदः । सीदत्यस्मिन्निति सदः स्थानमुच्यते । (तत्) तत् स्थानम् । सदत सीदत । (तत्र) तत्र स्थाने यथेष्टमुपविशतेत्यर्थः । हे सुप्रणीतयः ! शोभनप्रणयनाः ! कल्याणोपदेशा इत्यर्थः । उपविश्य चात्त भक्षयत । हवींषि ओदनादिलक्षणानि । प्रयतानि शुद्धानि प्रबद्धानि वा । आसादितानीत्यर्थः । क । बर्हिषि । अथ भक्षणानन्तरं च रयिं धनं सर्ववीरं सर्वैर्वीरैः पुत्रैश्चोपेतं दशभिः पुत्रैः सहितमित्यर्थः । दधातन दत्तास्मभ्यम् ॥

त्वमग्नईळितोजातवेदोवाड्ढव्यानिसुरभीणिकृत्वी ।
प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवींषि ॥

(अष्ट० ७. अध्या० ६. व० १९. ऋ० १२.)

त्वमग्ने । हे अग्ने ! जातवेदः ! उत्पन्नधन ! उत्पन्नज्ञानेति वा । त्वम् ईळितः अस्माभिः स्तुतः अवाट् ऊढवान् असि पितॄन् प्रति प्रापितवानसि हव्यानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वा प्रादाः प्रत्तवांश्चासि येभ्यः पितृभ्यस्ते च पितरः । स्वधया । अन्ननामैतत् । द्वितीयार्थे तृतीया । त्वया प्रत्तं हविर्लक्षणमन्नमक्षन् जग्धवन्तः भक्षितवन्तः[1] । अथेदानीं कृतोपकारः सन् अद्धि भक्षय त्वम् । हे देव ! प्रयता प्रयतानि शुचीनि हवींषि । अथवा प्रादा इति च लोडर्थे लुङ् । वह हवींषि ऊर्ध्वं च प्रदेहीति । शिष्टं समानम् ॥

येचेहपितरोयेचनेहयांश्चविद्मयाँउचनप्रविद्म ।
त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥

(अष्ट० ७. अध्या० ६. व० १९. ऋ० १३.)

येचेह । ये च पितरः इह अस्मत्समीपे वर्तन्ते । ये च नेह इह न सन्ति न वर्तन्ते । यांश्च पितॄन् विद्म संनिकृष्टत्वाज्जानीमो वयम् । उ च । उः पाद-

१. 'अतवन्तः' ख. पाठः.

पूरणः। यानपि न प्रविद्म विप्रकृष्टत्वान्न जानीमो वयम्। यति यत्सङ्ख्यायुक्ताश्च ते पितरस्तान् सर्वान् यथोक्तान् त्वं वेत्थ तत्त्वतो जानासि हे जातवेदः! उत्पन्नधन! उत्पन्नज्ञान! वा। यस्मादेवमतो ब्रूमः इमं यज्ञं पित्र्यं कर्म। स्वधाभिर्हविर्लक्षणैः अन्नैः। युक्तमिति शेषः। सुकृतं साधु कृतम्। अविगुणमस्माभिरनुष्ठितमित्यर्थः। जुषस्व जुषिरत्रान्तर्णीतण्यर्थः। अस्मत्पितॄन् जोषय सेवय उपभोजयेत्यर्थः। अथापि 'प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानी'त्यनेन न्यायेनाग्नेरप्राधान्यं पितॄणामेव प्राधान्यं द्रष्टव्यम्॥

ये अ॑ग्निद॒ग्धा ये अन॑ग्निदग्धा॒ मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते।

तेभि॑ः स्व॒राळसु॑नीतिमे॒तां य॑थाव॒शं त॒न्वं॑ कल्पयस्व॥

(अष्ट० ७. अध्या० ६. व० १९. ऋ० १४.)

ये अग्नि। ये पितरः अग्निदग्धाः अग्निना भस्मीकृताः श्मशानकर्म प्राप्ता इत्यर्थः। ये अनग्निदग्धाः श्मशानकर्म न प्राप्ता इत्यर्थः। मध्ये दिवः द्युलोकमध्ये। सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः। स्वधया अन्नेन स्वकर्मफललक्षणेन। मादयन्ते तृप्यन्ति। तेभिः तैः पितृभिः संयुक्तः सन्निति शेषः। यस्त्वं स्वराट् स्वयंराजिता अपराश्रयदीप्तिरित्यर्थः। स त्वम् असुनीतिम् असूनां प्राणानां विषयेषु नेत्रीं स्वकर्मफलभोगाय प्रवर्तयित्रीम्। एताम् अस्मत्पित्रन्तरात्मलक्षणाम्। तन्वं शरीरम्। यथावशं यथाकामम्। यथाभिलषितमित्यर्थः। कल्पयस्व। अर्चतिकर्मायम्। अर्चय हविर्वहनादिनास्मत्पितॄन् समर्चयेत्यर्थः। कस्य प्रार्थनेयम्। अग्नेरेव सामर्थ्यात्, पूर्वमन्त्रे तस्यैव प्रकृतत्वाच्च॥

अथाष्टकायां वपाहोममन्त्रः वपामुत्स्विद्य जुहुयाद् 'वह वपामि'ति।

वह वपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ निहितान् पराके मेदसः कुल्या उपैनान् स्रवन्तु सत्या एता आशिषः सन्तु सर्वाः स्वाहा।

वामदेवार्षं त्रिष्टुप्। पितरो देवता। हे जातवेदः! अग्ने!। वह प्रापय गमयेत्यर्थः। वपां पितृभ्यः। तादर्थ्ये एषा चतुर्थी। पितॄणामर्थाय। यत्र पराके पराकान्ते विप्रकृष्टे देशे। निहितानवस्थितान् एनानेतान् वेत्थ जानासि। तं देशं प्रति वहेति सम्बन्धः। मेदसः। वपाभिधानमेतत्। सम्बन्धलक्षणा चेयं षष्ठी।

१. 'गापनयाय अव' ह० पाठः,

त्वया प्रापितस्य वपाख्यस्य हविषः सम्बन्धिन्यः । कुल्याः । नदीनामैतत् । तेन च प्राभूत्यं लक्ष्यते । वपाया उपस्तरणाभिघारणादिलक्षणान्याज्यानि नदीजलवत् प्रभूतानीत्यर्थः । एनानुपस्रवन्तु एषां पितॄणां समीपं गच्छन्तु । उपस्तीर्णाभिघारिता वपा पितॄणामुपभोगार्हा भवत्वित्यर्थः । एता आशिषः प्रार्थनाः सर्वाः कृत्स्नाः । मा । षष्ठयर्थ एषा द्वितीया । मम स्वभूताः सत्या अवितथाः सन्तु भवन्तु ॥

अथावदानानां स्थालीपाकस्य च होममन्त्राः सप्त । तेषु सप्तसु 'अग्ने नये'ति द्वे ऋचौ श्रवणाकर्मणि व्याख्याते । 'ग्रीष्मो हेमन्त ऋतव' इत्याद्याश्चतस्रो वामदेवार्षास्त्रिष्टुभः । तासु प्रथमाया ग्रीष्मादिकालाभिमानिनो देवता । यथासामर्थ्यं मन्त्रा व्याख्यायन्ते । यथाविनियोगं स्वर्थो द्रष्टव्यः ॥

ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवाभया शरन्नः ।
संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा ।

ग्रीष्मः गण्यन्तेऽस्मिन् रसा इति निरुक्तः कालविशेषः शुक्रशुचिमासद्वयात्मा ऋतुरित्यर्थः । तथा हेमन्तः हिमवान् हिमबहुलः सहस्सहस्यमासद्वयात्मा ऋतुरित्यर्थः । तथा वर्षाः । वर्षत्यासु पर्जन्य इति वर्षाः नभोनभस्यमासद्वयात्मा ऋतुः । तथा शरत् । शीता अस्यामोषधयो भवन्ति, शीर्णा आप इति वेति निर्वचनादिषोर्जमासद्वयात्मा ऋतुः । शरदं विशिनष्टि—शिवा । सुखनामैतत् । सुखा सुखकरीत्यर्थः । अभया भयवर्जिता । य एते ऋतवः ते नः अस्मभ्यं शिवाः सुखकराः । भवन्त्विति वाक्यशेषः । किं च संवत्सरः द्वादशमासात्मकः कालविशेषः । अधिपतिः स्वामी । कस्य । सामर्थ्यादृतूनाम् । सर्वस्य वा जगतः । 'संवत्सरः प्रजापतिः' इति लिङ्गात् । किंविशिष्टः । प्राणदः जीवनस्य दाता । नः अस्माकमायुर्जीवितं शतसंवत्सरलक्षणम् । कृणुयादित्यनुवर्त्यम् । तथा अहोरात्रे दीर्घमायुः कृणुतामिति ।

शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं कृणोतु शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु विश्वतः स्वाहा ॥

शान्ता पृथिवी । अस्याः पृथिव्याद्या विद्युदन्ता देवताः । शान्ता शान्तिकरी सर्वप्राणिनामाधारत्वेन सुखप्रदेत्यर्थः । पृथिवी अस्माकमभयं कृणोतु इत्यपकृष्यव्यम् । शिवमवकाशदानेन सर्वप्राणिनां सुखकरमन्तरिक्षमस्माक-

१. 'र्थो' ख. पाठः.

मभयं कृणोतु । द्यौः देवी दीप्ता ग्रहनक्षत्रादिभिः नः अस्माकमभयं कृणोतु करोतु । शिवाः सुखकर्यः दिशः । किंविशिष्टाः । प्रदिशः । प्रदृश्यन्ते सर्वैरपीति प्रदिशः प्राच्याद्या इहाभिप्रेयन्ते । तथा उद्दिशः उद्दिक्शब्देनात्र कोणा अधश्चोर्ध्वा च गृह्यन्ते । केचित्तु वर्णयन्ति दिशः प्रसिद्धाः । प्रदिशः कोणाः । उद्दिशश्चोर्ध्वा अधश्चेति । किञ्च आपः सर्वाः विद्युतश्च तदभिमानिन्यो देवताः । नः अस्मान् विश्वतः सर्वतः स्वतस्सम्बन्धितश्च परिपान्तु सर्वतो रक्षन्तु ॥

आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रोऽवहन्तु पापम्[1] ।
भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माभिगुप्तः स्वा रक्षाणि स्वाहा ॥

आपो मरीचीः । अबादयो देवताः आपो मरीचीः । व्यत्ययेनेयं द्वितीया प्रथमायाः स्थाने । मरीचिशब्दोऽन्तर्णीतमत्वर्थोऽपां विशेषणम् । मरीचिमत्यो रश्मिमत्यः दीप्तिमत्य इत्यर्थः । प्रवहन्तु प्रकृष्टं । देशं प्रणयन्तु । न अस्माकं स्वभूता धियः । कर्मनामैतत् । कर्माणि । अथवा धीशब्दः प्रज्ञा नाम । अस्मत्प्रज्ञाः प्रवहन्तु आपः अस्मभ्यं प्रज्ञां ददत्वित्यर्थः । किञ्च धाता देवविशेषः मध्यमस्थानः । पापं वाङ्मनःकायकृतम् । अवहन्तु । हन्तिर्गत्यर्थोऽन्तर्णीतण्यर्थश्च । अधो गमयतु । अथवा हन्तिर्हिंसार्थ एव । अपेत्युपसर्गो वा । अपहन्तु नाशयतु इत्यर्थः । तथा समुद्रश्च । किञ्च भूतं भविष्यद् वर्तमानमर्थगृहीतं कालत्रयसम्बन्धिभूतजातं विश्वं सर्वं मे मम अभयम् अभयङ्करम् अस्तु भवतु । किञ्च ब्रह्माभिगुप्तः । ब्रह्मशब्दोऽत्र वेदवचनः परमात्मवचनो वा । ब्रह्मणा वेदेन परमात्मना वा अभिगुप्तः अभिरक्षितः । केचिद् ब्रह्मशब्दं हिरण्यगर्भाभिधानमिच्छन्ति । स्वाः स्वकीयाः रक्षाणि रक्षितुं समर्थो भूयासमित्याशासे ॥

विश्व आदित्याः वसवश्च देवा रुद्रा गोप्तारो मरुतः सदन्तु ।
ऊर्जं प्रजाममृतं पिन्वमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा ॥

विश्व आदित्याः द्युस्थाना द्वादश । तथा वसवश्चाष्टौ पृथिवीस्थानाः । देवा दानादिगुणयुक्ताः । तथा रुद्राः अन्तरिक्षस्थाना एकादश । मरुतः सप्तसप्तका गणाः एकोनपञ्चाशत् । किंविशिष्टाः । गोप्तारः । वृष्टिप्रदानद्वारेण कृत्स्नस्य जगतो रक्षितारः । सदन्तु । सदिरत्र गत्यर्थः । शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । आसदन्तु अस्मत्समीपमागच्छन्त्वित्यर्थः । किञ्च ऊर्जं रसलक्षणमन्नं

---

१. 'मः ब्रह्मणा अभि' ख. ग. पाठः.

प्रजां पुत्रपौत्रादिलक्षणाम् अमृतम् अमृतत्वं च । पिन्वमानः । पिन्वतिः सेचनकर्मा । सेचनं क्षरणं ददात्वित्यर्थः । परमेष्ठी । प्रजापतेर्विशेषणमेतत् । परमे प्रकृष्टे सत्यलोकाख्ये स्थाने स्थितः परमेष्ठी (प्रजापतिः) । मयि कर्मकर्तरि अधिकारिणि । दधातु स्थापयतु । 'प्रजापते न त्वदि'ति विवाहप्रकरणे व्याख्यातम् ॥

समाप्तमष्टकाप्रकरणम् ॥

---

अथ रथारोहणम् । तत्र चक्राभिमर्शनमन्त्रः 'अहं ते पूर्वं' इति ।

**अहं ते पूर्वः पादावारभे बृहद्रथन्तरे ते चक्रे ।**

वामदेवार्षा द्विपदा । यजुर्वा । रथोऽभिधेयः । हे रथ! अहं ते तव स्वभूतौ पादौ । पूर्वः प्रथमः । कस्य । सामर्थ्याच्छत्रोः । आरभे संस्पृशामि अभिमृशामीत्यर्थः । कीदृशौ । उच्यते । बृहद्रथन्तरे सामनी ते तव स्वभूते चक्रे । चक्रे एव हि पादौ रथस्य । सामान्योक्त्या विशेषोक्त्या चापौनरुक्त्यम् । बृहद्रथन्तरवचनेन चक्रयोः संस्तवः क्रियते । एतदुक्तं भवति — बृहद्रथन्तरवत् संस्तुतचक्रलक्षणौ तव स्वभूतौ पादौ शत्रोः पूर्वमभिमृशामीति ॥

**वामदेव्यमक्षः ।**

वामदेव्यमक्ष इत्यक्षाधिष्ठाने । अभिमृशेदित्यनुवर्तते । वामदेवार्षं यजुः । रथ एवाभिधेयः । अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यस्तवाक्षो वामदेव्यं साम तस्याधिष्ठाने द्वे अक्षाधिष्ठाने इत्यर्थः । अभिमृशामीति शेषः । अक्षशब्देन चक्रप्रोहणकाष्ठमुच्यते । अधिष्ठानशब्देन नाभ्याः फलकमुच्यते ॥

रथारोहणमन्त्रः 'वायोष्ट्वा वीर्येणे'ति ।

**वायोष्ट्वा वीर्येणारोहामीन्द्रस्यौजसाधिपत्येन ।**

वामदेवार्षं यजुः । रथदैवतम् । हे रथ! त्वा त्वां वायोर्वीर्येण । हेतावियं तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । वायोः स्वभूतस्य वीर्यस्य प्राप्तये इत्यर्थः । आरोहामि । त्वदारोहणेन वायुवीर्योऽहं भूयासमित्यर्थः । तथा इन्द्रस्यौजसाधिपत्येन । ओजश्शब्दो बलनाम । आधिपत्यमधिपतेर्भावः स्वाम्यमित्यर्थः । उभयत्र हेतावेव तृतीया । त्वामारुह्येन्द्रवद् बलवानधिपतिश्च भूयासम् ॥

---

१. 'न का' क. पाठः.

रश्मीन् संमृशेद् अरश्मिकान् वा दण्डेन 'ब्रह्मणो वस्तेजसा संगृह्णामी'ति ।

**ब्रह्मणो वस्तेजसा सङ्गृह्णामि सत्येन वस्तेजसा सङ्गृह्णामि ।**

वामदेवार्षं यजुः । द्विपदा वा । अश्वप्रग्रहा अश्वा वाभिधेयाः । ब्रह्मणः वृहेर्वृद्धिकर्मणो ब्रह्मन्‌शब्दाच्छस्येतद्रूपम् । प्रवृद्धानित्यर्थः । वः युष्मान् अश्वप्रग्रहान् अश्वान् वा । तेजसा । हेतौ तृतीया । प्रयोजनं हेतुः । तेजोर्थमित्यर्थः । संगृह्णामि संमृशामि इत्यर्थः । न च केवलेन । किन्तर्हि । सत्येन । उदकनामैतत् । तत्प्रभवं धनमिहाभिप्रेयते । धनार्थं च वो युष्मान् संगृह्णामि संमृशामि । युष्मान् संगृह्य तेजस्वी धनवांश्च भूयासमित्यर्थः ॥

अभिप्रवर्तमानेषु जपेत् 'सहस्रसनिमि'ति ।

**सहस्रसनिं वाजमभिवर्तस्व रथ देव प्रवह ।**

वामदेवार्षं यजुः । द्विपदा वा । रथोऽभिधेयः । हे रथ! देव! दानादिगुणयुक्त! । सहस्रसनिम् । सहस्रमिति बहुनाम । सनिर्लाभः । बहुधा धनं लभ्यते यस्मिन् स सहस्रसनिः । तं सहस्रसनिम् । वाजम् । सङ्ग्रामनामैतत् । सङ्ग्रामम् । अभिवर्तस्व अभिगच्छ । अभिगम्य च प्रवह प्रकर्षेण प्रापय । अस्मच्छत्रूनस्माभिर्घातयित्वा सङ्ग्राममस्मान् गमयेत्यर्थः ॥

'वनस्पते वीड्वङ्गो हि भूया' इत्येतयान्यान्यपि वानस्पत्यान्यभिमृशेत् ।

**वनस्पतेवीड्वङ्गोहिभूयाअस्मत्सखाप्रतरणःसुवीरः ।**

**गोभिःसन्नद्धोअसिवीळयस्वास्थातातेजयतुजेत्वानि ॥**

(अष्ट० ४. अध्या० ७. व० १५. ऋ० ११.)

गर्गस्य बार्हस्पत्यस्यार्षं त्रिष्टुप् छन्दः । रथोऽभिधेयः । वनस्पतिशब्दोऽयम् । 'अथाप्यस्यां तद्धितेन कृत्स्नवन्निगमा भवन्ती'त्येवं वनस्पतिविकारे प्रयुक्तः । हे वनस्पते! वनस्पतिविकार! रथ! । वीड्वङ्गः । वीळूनि संस्तब्धानि दृढान्यङ्गान्यवयवा यस्य स वीड्वङ्गः । हिः पादपूरणः । दृढावयववान् । भूयाः भवेः । त्वम् अस्मत्सखा अस्मत्सखिस्थानीयः व्यसनेष्वस्माकं सहायो भवेत्यर्थः । प्रतरणः । प्रतीर्यते येन स प्रतरणः । संग्रामनिवर्तने समर्थ इत्यर्थः । सुवीरः शोभनवीरयुक्तः । वीरो योद्धा स शोभनः अभीरुरित्यर्थः ।

गोभिः संनद्धोऽसि । गोशब्देनात्र तद्विकारश्चर्माणि श्लेष्मा चोच्यते । अत्रै-कवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यस्माद् गोविकारैश्चर्मभिः श्लेष्मणा च सन्नद्धः । 'नह बन्धने' । सम्यक् बद्धः । असि भवसि । तस्मात् कृतदार्ढ्यत्वात् वीळयस्व । वीळयतिः संस्तम्भकर्मा । संस्तम्भय दृढीकुर्वात्मानम् । दृढे च त्वयि आस्थाता आरोढा ते तव जयतु जेत्वानि । कृत्यार्थेऽयं त्वन्प्रत्ययः । जेतव्यानि । कानि । सामर्थ्यात् शत्रुवृन्दानि शत्रुसैन्यानि वा ॥

'स्थिरौ गावौ भवतां वीळुरक्ष' इति रथाङ्गमभिमृशेत् ।

स्थिरौगावौभवतांवीळुरक्षोमेषाविवर्हिमायुगंविशारि ।

इन्द्रःपातल्येददतांशरीतोररिष्टनेमेअभिनःसचस्व ॥

(अष्ट० ३. अध्या० ३. व० २२. ऋ० १७.)

विश्वामित्रार्षी त्रिष्टुप् । रथाङ्गान्यभिधेयानि । स्थिरौ अचलौ भवतां भूयास्तां गावौ । गोशब्दश्चात्राश्ववचनः 'एतौ मे गावौ प्रमरस्य युक्ता[1]वि'ति यथा । अथवा गोजातिवचन एव । तस्मिन् पक्षे बलीवर्दयुगलमभिप्रेतम् । वीळुर्दृढः । अक्षः रथावयवः । भवत्वित्यनुषङ्गः । ईषा रथावयवः कश्चित् । सा मा विवर्हि । वर्हिरुद्यमनार्थः । उद्यमनेन पृथग्भावो लक्ष्यते । मा पृथग् भूयाद् इत्यर्थः । पृथग्भावेन चास्थैर्यं लक्ष्यते । स्थिरा भूयादित्यर्थः । मा युगम् । युज्यन्तेऽस्मिन्निति युगं काष्ठविशेषः । विशारि । शृणातिर्हिंसाकर्मा । हिंसया चात्र शैथिल्यमभिप्रेतम् । मा शिथिलीभूयादित्यर्थः । इन्द्रः देवराजः । पातल्ये । पातल्यशब्दोऽत्र सामर्थ्याच्चक्रवचनः । कथम् । पततिर्गत्यर्थः । तस्मात् करणसाधनेऽरप्रत्यये रेफोपजने वृद्धौ च पातर्यमिति रूपं भवति । ततश्च रेफस्य लत्वापत्त्या पातल्यमिति । रथस्य पतनसाधने चक्रे इत्यर्थः । ददतां प्रयच्छतु । स्थिरे इति वाक्यशेषः अनुषङ्गो वा । शरीतोः । शृणातिर्हिंसाकर्मा । शरीतुं शत्रून् हिंसितुमित्यर्थः । चतुर्थः पादः प्रत्यक्षकृतः । अतो भिन्नं वाक्यम् । इन्द्रो रथो वाभिधेयः । हे अरिष्टनेमे । नेमिरिति वज्रनाम । अहिंसितवज्र ! इन्द्र ! । रथपक्षे अहिंसितवज्रोपलक्षितायुध ! अहिंसितचक्रनेमे ! वा । नः अस्मान् अभिसचस्व । 'सच सेवायाम्' । आभिमुख्येन सेवस्व ॥

1. 'त । पु' ख. ग. पाठः ।

'सुत्रामाणं पृथिवीं द्यामनेहसमि'ति नावम् । आरोहेदित्यनुषङ्गः । नौरभिधेया । व्याख्यातेयं प्रत्यवरोहणे स्वस्त्ययनत्वेन ।

अथ व्यवहारार्थं संसदमुपयायाद् । 'अस्माकमुत्तमं कृधी'त्यादित्यमीक्षमाणो जपित्वावरोहेत् ।

अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य ।

वर्षिष्ठं द्यामिवोपरि ।

(अष्ट० ३. अध्या० ६. व० २६. ऋ० १५.)

वामदेवस्य गायत्री । आदित्योऽभिधेयः । हे सूर्य! आदित्य! अस्माकं श्रवः श्रव इत्यन्ननाम धननाम कीर्तिपर्यायो वा । अन्नादीनामन्यतमम् । उत्तमत्कृष्टं कृधि कुरु । देवेषु । देवशब्देनात्र हविषो दातृत्वाद् यजमाना अभिप्रेयन्ते । निर्धारणे च सप्तमी । हविषो दातॄणां यजमानानां मध्येऽस्मानेवोत्कृष्टश्रवसः कुर्वित्यर्थः । किंविशिष्टं श्रवः । वर्षिष्ठम् । अतिशयेन वृद्धम् । किञ्च द्यामिव उपरि । यथा दिवं सर्वेभ्यो लोकेभ्य उपरि करोषि तद्वदस्मानपि सर्वयजमानेभ्यः उपरिभूतान् कुर्वित्यभिप्रायः । अथवा श्रवश्शब्दो हविर्लक्षणान्नवचनः । देवशब्दोऽप्यमर्यादिदेववचनः । अयं च वाक्यार्थः — अस्माकं स्वभूतमुत्तमं हविर्लक्षणमन्नं देवेषु कुरु । अथवा देवेषु श्रव इति सम्बन्धः । देवेषु स्थितं यदन्नम् उत्तमं वर्षिष्ठं च तदस्माकं कुरु । अस्मभ्यं देहीत्यर्थः । दृष्टान्तयोजना तु सदृशी ॥

'ऋषभं मे'त्यभिक्रामन् । जपतीति शेषः ।

ऋषभं मा समानानां सपत्नानां विषासहिम् ।

हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥

(अष्ट० ८. अध्या० ८. व० २४. ऋ० १.)

ऋषभं मेति पञ्चर्चं सूक्तमानुष्टुभं महापङ्क्त्यन्तमृषभो वैराजः शाक्वरो वा ददर्श । अनादिष्टदेवतात्वाद् विष्णुरग्निर्वा देवता । तृतीयाया वाचस्पतिः । हे विष्णो! । अग्ने! वा । ऋषभं प्रधानम् । मा मां समानानां समानजातीयानां मनुष्याणां मध्ये । कृधीत्युत्तरत्र श्रूयमाणमिहानुषक्तव्यम् । ज्ञातीनां मध्ये मां प्रधानं कुर्वित्यर्थः । किञ्च सपत्नानां शत्रूणां विषासहिम् । विविधं सोढारम् अभिभवितारं न्यक्कर्तारमित्यर्थः । कुरु । किञ्च हन्तारं हिंसितारं मारयितारं शत्रूणामतिबलानां कृधि कुरु । विराजं विविधं राजितारं शरीरदीप्त्या

१. 'त्यो देवता । हे' घ. ङ. पाठः. २. 'षासहिम्' ख. पाठः.

दीनं च कुरु। गोपतिं गवाम्। गोपतिशब्दो यद्यपि गवां पतिर्गोपतिरित्यन्वाख्यायते, तथापि यथा प्रवीणशब्दः प्रकृष्टो वीणायामित्येवमन्वाख्यायमानोऽपि प्रकृष्टमात्रस्य वाचको न वीणायामेव प्रकृष्टस्य, प्रवीणो मीमांसायां प्रवीणो व्याकरणे इति, एवमधिपतिमात्रस्य वाचको न गवामेवाधिपतेः। तेन गवामित्यस्य गवामित्येतेन न पौनरुक्त्यम्। गवां स्वामिनं कुर्वित्यर्थः। अथवा ऋषभमिति मन्त्रदृशोऽभिधानम् ऋषभनामानं मामिति। अस्मिन् पक्षे समानानामिति सपत्नविशेषणम्। समानवीर्याणां[1] सपत्नानां विससहिमिति॥

अहमस्मिसपत्नहेन्द्रइवारिष्टोअक्षतः।

अधःसपत्नामेपदोरिमेसर्वेअभिष्ठिताः[2]।

(अष्ट० ८. अध्या० ८. व० २४. ऋ० २.)

अहमस्मि। अस्मि भूयासमित्यर्थः। सपत्नहा शत्रूणां हन्ता। क इव इन्द्र इव। यथेन्द्रः शत्रुहा। अरिष्टः स्वसैनिकर्हिंसया अहिंसितः। अक्षतः क्षतवर्जितः शत्रून् हन्त्येव च। किञ्च उच्चैरुपविष्टस्य मे मम स्वभूतयोः पदोः पादयोः अधः अधस्तात् अभिस्थितीः अभिमुखस्थिताः। सन्त्विति शेषः। के। सपत्नाः। इमे हतशिष्टाः सर्वे। विष्णोरमेर्वा प्रसादेनेति शेषः॥

अत्रैववोपिनह्याम्युभेआर्त्नीइवज्यया।

वाचस्पतेनिषेधेमान्यथामदधरंवदान्॥

(अष्ट० ८. अध्या० ८. व० २४. ऋ० ३.)

अत्रैव। किञ्च, अत्रैव मम पादयोरधः स्थितान् वः युष्मान् अपि नह्यामि। अपिरत्र धात्वर्थानुवादी। 'नह बन्धने'। बध्नामि। किमिव। उभे आर्त्नी इव ज्यया। यथा उभे आर्त्न्यौ धनुष्कोट्यौ ज्यया बध्नाति कश्चिद् धानुष्कः, एवं[3] बध्नाम्यसतः। हे वाचस्पते! मध्यमस्थानदेव! निषेध नियमेन साधय वशीकुरु। इमान् सपत्नान्। यथा येन प्रकारेण मत् मत्तः अधरं न्यग्भूतम् अत्यन्तदीनं वदान् वदन्ति, तथा निषेध॥

अभिभूरहमागमंविश्वकर्मेणधाम्ना।

आवश्चित्तमावोव्रतमावोहंसमितिंददे॥

(अष्ट० ८. अध्या० ८. व० २४. ऋ० ४.)

१. 'च' ख. ग. घ. पाठः, २. 'ताः सन्तु' ख. ग. पाठः. ३. 'वं बद्धांश्च सतः' क. पाठः.

अभिभूरहम् । अभिभूः अभिभविता युष्माकम् । अहम् आगमम् आगच्छामि युष्मान् प्रति । विश्वकर्मेण । वृद्धिलोपोऽत्र छान्दसः प्रत्ययलोपश्च । वैश्वकर्मणेनेत्यर्थः । विश्वकर्मेन्द्रः । तत्सम्बन्धिना धाम्ना प्रतापेन । युक्त इति शेषः । आगत्य च वो युष्माकं स्वमूतं चित्तमाददे गृह्णामि । न चैतावदेव । किन्तर्हि । वः युष्माकं व्रतं सर्वप्रकारं कर्म आददे । वः समितिम् । सङ्ग्रामनामैतत् । युष्मत्सङ्ग्रामं युद्धश्रद्धामित्यर्थः । आददे सर्वत्राऽस्वतन्त्रान् मदनुकूलान् युष्मान् करोमीति ॥

योगक्षेमंवआदायाहंभूयासमुत्तमआवोमूर्धानमक्रमीम् ।
अधस्पदान्मउद्वदतमण्डूकाइवोदकान्मण्डूकाउदकादिव ॥

(अष्ट० ८. अध्या० ८. व० २४. ऋ० ५.)

योगक्षेमम् । अलब्धलाभो योगः । लब्धस्य परिपालनं क्षेमः । तदुभयं वः युष्माकं सम्बन्धि आदाय आत्मायत्तं कृत्वेत्यर्थः । अहं भूयासमुत्तमः उत्कृष्टतमः । आकारोऽक्रमीमित्यनेन सम्बध्यते । पादयोश्च पततां वः युष्माकं मूर्धानं शिरः आक्रमीम् आक्रमामि । किञ्च अधस्पदात् मे मम पादयोरधः-प्रदेशो यः तस्मात् प्रसादाकाङ्क्षया मम मुखं निरीक्षमाणा यूयम् उद्वदत ऊर्ध्वमुखं वदत । किमिव । मण्डूका इवोदकात् । यथा मण्डूकाः पर्जन्यप्रसाद-मिच्छन्तस्तन्मुखमीक्षमाणा उदकादुन्मुखं वदन्ति एवम् । मण्डूका उदकादिव यथा मण्डूका उदकादृते न जीवन्ति एवमस्मदृते स्वातन्त्र्येणान्यतो मा जीविष्ट यूयमित्यभिप्रायः ॥

'वयमद्येन्द्रस्य प्रेष्ठाः' इत्येतं यात्यादित्ये । जपतीति शेषः ।

वयमद्येन्द्रस्यप्रेष्ठावयंश्वोवोचेमहिसमर्ये ।
वयंपुरामहिचनोअनुद्यून्तन्नऋभुक्षानरामनुष्यात् ॥

(अष्ट० २. अध्या० ४. वर्ग० १. ऋ० १०.)

अगस्त्यो मैत्रावरुणिर्ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । मरुतां गणो वा । वयमद्यास्मिन्नहनि इदानीं वर्तमाने काले इत्यर्थः । इन्द्रस्य प्रेष्ठाः अतिशयेन प्रियाः । काः । सामर्थ्यात् स्तुतीः वोचेमहि उच्चारयेमेत्याशास्महे । क । समर्ये । सङ्ग्रामनामैतदन्यत्र । इह तु सामर्थ्याद् यज्ञे वर्तते । शास्त्रार्थविजिगीषया वादि-

प्रतिवादिरूपेण विप्रतिपद्यमानसदस्यत्वाद् यज्ञोऽपि सङ्ग्रामसदृशः । अथवा समर्यशब्दो योगाद् यज्ञे वर्तते । कथं कृत्वा । मर्या इति मनुष्यनाम । ते च ऋत्विग्यजमानसदस्यलक्षणा इहाभिप्रेयन्ते न योद्धृलक्षणाः । ऋत्विग्यजमानसदस्यलक्षणैर्मर्यैः सह वर्तते इति समर्यः । तस्मिन् समर्ये यज्ञे । सप्तमीनिर्देशात् वर्तमाना इति वाक्यशेषः । नच केवलमिदानीमेव । किं तर्हि । वयं श्वः । आगामिन्यहनि, आगामिन्यपि काले इत्यर्थः । वोचेमहि, स्तुतीरित्यनुषङ्गः । न च श्व एव । किन्तर्हि । वयं पुरा । उत्तरत्र श्रूयमाणश्वशब्दोऽनेन सम्बन्धयितव्यः । पुरा च । अतीतेऽपि काले इत्यर्थः । अवोचाम स्तुतीरिति सम्बन्धः । महिसामर्थ्यात् तत् स्तोत्रमिति शेषः । महि महत् । नः अस्माकं नराम् ऋत्विग्यजमानलक्षणानां मनुष्याणां स्वभूतम् । ऋभुक्षा । महन्नामैतत् । महानिन्द्रः । अनु स्यात् । अस्तिर्भवतिना समानार्थः । 'अस भुवि' इति स्मरणात् । अनुभवेत् अनुभूयादित्यर्थः । किं सकृत् । नेत्युच्यते । अनुद्यून् अन्वहं सततमित्यर्थः । एतदुक्तं भवति — अतीते काले वर्तमाने भविष्यति चेन्द्रमेव स्तुयाम । तच्च स्तोत्रमिन्द्रः सदा शृणुयादिति । केचित्त्वेतामृचं मारुतीं मन्यन्ते । तस्मिन् पक्षे इन्द्रशब्दो यौगिको द्रष्टव्यः । एकवचनं च गणाभिप्रायम् । शिष्टपदयोजना सदृशी ॥

'तद्वो दिवो दुहितरो विभातीरि'ति व्युष्ट्याम् । जपतीति शेषः ।

तद्वो॑ दि॒वो दु॑हितरो वि॒भा॒तीरुप॑ ब्रुव उषसो य॒ज्ञके॑तुः ।

व॒यं स्या॑म य॒शसो॒ जने॑षु॒ तद् द्यौश्च॑ ध॒त्तां पृ॑थि॒वी च॑ दे॒वी ॥

(अष्ट० ३. अध्या० ८. व० २. ऋ० ११.)

वामदेवार्षी त्रिष्टुप् । उषस्या । तदिति तच्छब्दश्रुतेर्योग्यसम्बन्धो यच्छब्दोऽध्याहार्यः । यत् स्तोत्रमन्येऽपि स्तोतारः कुर्वन्ति तत् स्तोत्रम् । वः तादर्थ्ये चतुर्थ्यन्तमेतत् । युष्माकमर्थाय । हे उषसः ! । एकस्या एव पूजनार्थे बहुवचनम् । दिवो दुहितरः ! । उषसां विशेषणमेतत् । कथं दिवो दुहितृत्वम् । उषसामिति चेद्, दिव उत्पन्नत्वात् । तथा चोक्तं प्रस्कण्वेन — 'अबद्वेषो मघोनी दुहिता दिव' इति । सत्यश्रवसाप्युक्तम् — 'एषा प्रतीची दुहिता दिवो नॄनि'ति । वसिष्ठेनाप्युक्तं 'विदिवो देवी दुहिते'ति । विभातीः । इदमप्युषसां विशेषणम् । सम्बोधन-

प्रथमायाः स्थाने द्वितीयैषा। विविधं दीप्यमाना इत्यर्थः। उपब्रुवे युष्मत्समीपमुपेत्य ब्रवीमि। यज्ञकेतुः। स्तोतृविशेषणमेतत्। विशेषणेन चात्मनः स्तुत्यधिकारसम्पत्तिं दर्शयति। 'कित ज्ञाने' इत्यस्य केतुशब्दो ज्ञानवचनः। 'केतुं कृण्वन्न केतवे' इति यथा। यज्ञे केतुर्ज्ञानं यस्य स यज्ञकेतुः, यज्ञस्य स्वरूपतो ज्ञातेत्यर्थः। युष्मत्स्तुतियोगेऽहमधिकारीत्यर्थः। वयं स्याम युष्मत्प्रसादाद् भवेमेत्याशास्महे। यशसः। मत्वर्थीयप्रत्ययलोपो द्रष्टव्यः। यशस्विन इत्यर्थः। जनेषु। निर्धारणे ह्येषा सप्तमी। जनानां मध्ये। तत् यदेतन्मया प्रार्थ्यते, तद् युष्मत्प्रसादात् द्यौश्च पृथिवी च। कीदृशी पृथिवी। देवी दानादिगुणयुक्ता। धत्ताम्। दधातिर्दानार्थः। दत्तामनुजानीतामित्यर्थः। युष्मत्प्रसादेन द्यावापृथिव्यौ धत्तामिति द्यावापृथिव्योरप्राधान्यं मन्त्रस्योषस्यत्वाविरोधाय द्रष्टव्यम्॥

'अथातो वास्तुपरीक्षे'त्यारभ्य 'तच्छमीशाखयौदुम्बरशाखया च शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षति। 'शं न इन्द्राग्नी' इत्येतत् सूक्तं शन्तातीयमाचक्षते। 'शं न इन्द्राग्नी' इति सूक्तं पञ्चदशर्चं त्रैष्टुभं वैश्वदेवं वसिष्ठो मैत्रावरुणिर्ददर्श। प्रथमा महानाम्न्यनुवचनाङ्गभूतभूम्युपस्पर्शने विनियुक्ता व्याख्याता॥

शंनो॒भग॒ःशमु॒न॒ःशंसो॒अस्तु॒शंनः॒पुरं॑धि॒ःशमु॑सन्तु॒राय॑ः।

शंनः॑स॒त्यस्य॑सु॒यम॑स्य॒शंस॒ःशंनो॑अर्य॒मापु॑रुजा॒तो॑अस्तु॥

(अष्ट० ५. अध्या० ३. व० २८. ऋ० २.)

शं नो भगः। शं सुखं नः अस्माकं भगः आदित्यानामन्यतमः देवतान्तर वा। अस्त्वित्युत्तरत्र श्रूयमाणमाख्यातमपकृष्टव्यम्। अस्तु भवतु। शम्। उः पादपूरणः। नः अस्माकम्। शंसः स्तुतिः। किंविषया। सामर्थ्याद् देवपितृमनुष्यविषया। अस्तु भवतु। शं सुखं नः अस्माकं पुरन्धिः बहुधीः। धीरिति कर्मनाम प्रज्ञानाम वा। बहुप्रज्ञो बहुकर्मा वा। कोऽसौ। भगः। कुतः। तस्य प्रकृतत्वात्। तस्मिन् पक्षे शंशब्दस्याभ्यासोऽनुपपत्तिः शंसव्यवायश्च। तस्माद् देवतान्तरेण भवितव्यम्। एवं तर्हीन्द्रो वरुणो वा।

१. 'धोद्र', २. 'व्यः' क. ग. पाठः. ३ 'नू शं'., ४. 'सस्यानु' ख. पाठः.

यदा धीशब्दः कर्मवचनः परिगृह्यते, तदेन्द्रः । कुत एतत् । बहुकर्मत्वा-दिन्द्रस्य । तदुक्तं भगवता यास्केन— 'या च का च बहुलकृतिरिन्द्रकर्मैव तद्' इति । यदा तु प्रज्ञावचनो धीशब्दः तदा वरुणः । कुत एतत् । बहुप्रज्ञत्वाद् वरुणस्य । तथा चोक्तं भगवता यास्केन— 'कः पुरन्धिर्भगः पुरस्तात् तस्य वादेशम्' इत्येकम् । इन्द्र इत्यपरम् । स हि बहुकर्मतमः । पुरां च दारयितृतमो वरुणः इत्यपरम् । तत् प्रज्ञाय स्तौति— 'इमामू नुकवितम[१]र्णायुं वरु(णस्य मायामि'ति (?) । इन्द्रो वरुणो वा । किञ्च । शं सुखम् । उकारः पादपूरणः । सन्तु भवन्तु रायः । धननामैतत् । हिरण्यादीनि धनानि । अस्माकमिति वाक्यशेषोऽध्या-हर्तव्यः अनुषङ्गो वा । शं सुखं नः अस्माकं सत्यस्य । सुयमस्य । सत्य-विशेषणमेतत् । यमिर्बन्धनार्थः । शोभने कल्याणे पुरुषं बध्नातीति सुयमः । सत्यमुच्चारणं सत्यवचनमित्यर्थः । अथवा सत्यशब्दः परमार्थवचनः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणवाक्ये श्रुतत्वात् । स हि स्तोतॄन् यष्टॄन् कल्याणे बध्नाति योजयतीति सुयमः । तस्य शंसस्तद्विषया स्तुतिरित्यर्थः । शं सुखम् अस्माकमर्यमा आदित्यानामन्यतमः । किंविशिष्टः । पुरुजातः । पुर्विति बहुनाम । जातं जन्म । बहुदेवे निविष्टः बहुजन्मा । तथाचोक्तं भगवता यास्केन - 'यद्यद्रूपं कामयते तद्देवता भवती'ति । अथवा पुरुजात इति तादर्थ्ये चतुर्थीसमासः । बहूनामर्थं जात इत्यर्थः । अस्तु भवतु ॥

शंनोधाताशमुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः ।

शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसुहवानिसन्तु ॥

(अष्ट० ५. अध्या० ३. व० २८ ऋ० ३.)

शं नो धाता । शं सुखं नः अस्माकं धाता आदित्यानाम् अन्यतमः, देवतान्तरं वा । अस्त्वित्यनुकृष्टव्यम् । शं सुखम् । उः पादपूरणः । धर्त्ता कृत्स्नस्य जगतो धारयिता । कोऽसौ । सामर्थ्यादिन्द्रः । स[२] एव वृष्ट्याद्यनुप्रदानेन कृत्स्नं जगद् धारयति । अग्निर्वा । स चाहवनीयादिरूपापत्त्या यज्ञं निर्वर्तयन् कृत्स्नं जगद् धारयति । नः अस्माकम् अस्तु । शं सुखम् । नः उरूची । उर्विति बहुनाम । अञ्चतिर्गत्यर्थः । बहूनि भूतानि गच्छति व्याप्नोति इत्युरूची ।

१. 'प', २. 'स हि त्व' घ. ङ. पाठः.

कासौ । सामर्थ्यात् पृथिवी । चराचराधारभूता हि सा । भवतु । स्वधाभिः । अन्ननामैतत् । व्रीह्याद्यन्नैः । शं सुखे रोदसी द्यावापृथिव्यौ । किंविशिष्टे । बृहती महत्यौ विस्तीर्णे । स्तामिति शेषः । शं सुखम् । नः अस्माकम् । अद्रिः । मेघनामैतत् । पर्वतनाम वा । मेघो हिमवदादिपर्वतो वा । शं सुखानि नः देवानामिन्द्रादीनाम् । सुहवानि शोभनानि हवनानि कल्याणानि देवाह्वानानीत्यर्थः । सन्तु भवन्तु ॥

शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमित्रावरुणावश्विनाशम् ।

शंनःसुकृतांसुकृतानिसन्तुशंनइषिरोअभिवातुवातः ॥

(अष्ट० ५. अध्या० १. व० २८. ऋ० ४.)

शं नो अग्निः । शं सुखं नः अस्माकम् अग्निः । किंविशिष्टः । ज्योतिरनीकः । अनीकशब्दः समूहवचनः । ज्योतिस्समूहो ज्योतिर्मुखो वा । प्रदीप्तबहुरश्मिः प्रदीप्तज्वालामुखो वा । अस्तु भवतु । शं सुखौ नः अस्माकं मित्रावरुणौ । स्तामिति शेषः । अश्विना अश्विनौ । शं सुखौ । स्तामिति शेषः । शं सुखानि नः सुकृतां शोभनं श्रौतस्मार्तकर्म कृतवतां सुकृतानि शोभनानि कृतानि श्रौतस्मार्तलक्षणानि कर्माणि सन्तु भवन्तु । शं सुखं नः । अभिः "अभिरभागे" इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । अस्मान् प्रति । वातः वायुः इषिरः । वातविशेषणमेतत् । अनवगतसंस्कारं च । इषतेर्गतिकर्मण इषेर्वा इच्छार्थस्य ऋषेर्वा दर्शनार्थस्य कर्तर्यौणादिकसूत्रेण किरच्प्रत्ययान्तस्यैतद्रूपम् । सर्वत्र गन्ता, सर्वर्त्विग्यजमानजनस्यैषिता वा, लोकपालत्वाच्छुभाशुभस्य द्रष्टा वा । वातु गच्छतु अस्मान् सुखयत्वित्यर्थ ॥

शंनोद्यावापृथिवीपूर्वहूतौशमन्तरिक्षंदृशयेनोअस्तु ।

शंनओषधीर्वनिनोभवन्तुशंनोरजसस्पतिरस्तुजिष्णुः ॥

(अष्ट० ५ अध्या० ३ व० २८. ऋ० ५.)

शं नो द्यावापृथिवी । शं सुखे नः अस्माकं । द्यावापृथिवी द्यावापृथिव्यौ । किंविशिष्टे । पूर्वहूतौ । छान्दसोऽयं पुल्लिङ्गनिर्देशः । पूर्वहूते प्रथमहुते ।

---

१. 'को' क. पाठः.

स्तामिति शेषः । शम् अन्तरिक्षम् । दृशये दर्शनाय । दर्शनं चात्र सर्वकरणव्यापारोपलक्षणार्थम् । चक्षुरादिकरणानामनुपरमायेत्यर्थः । नः अस्माकम् । अस्तु भवतु । शं सुखाः । नः । ओषधीः । प्रथमार्थे द्वितीयैषा । ओषधयः फलपाकान्ता व्रीह्याद्याः । वनिनः अन्ये च वृक्षा वनसम्बन्धिनः भवन्तु । शं सुखं नः रजसस्पतिः । रजःशब्दोऽयं पञ्चसु पदार्थेषु रूढः । पांसू रज उच्यते । लोका रजांस्युच्यन्ते । असृगहनी रजसी उच्येते । ज्योतींषि रजांस्युच्यन्ते । ज्योतिरादीनां पतिः स्वामी पाता वा । कोऽसौ । सामर्थ्यादादित्यः । जिष्णुर्जयशीलः । असुरराक्षसादीनां जेतेत्यर्थः । अस्तु भवतु ॥

शंनइन्द्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः ।
शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥

(अष्ट० ५. अध्या० ३. व० २९. ऋ० ६.)

शं न इन्द्रः । शं सुखं नः अस्माकम् । इन्द्रः देवः दानादिगुणयुक्तः । वसुभिः । सहयोगलक्षणैषा तृतीया । वसुभिः सह पृथिवीस्थानैर्देवैः सह । अस्तु भवतु । शं सुखं वरुणः द्युस्थानः आदित्यः सुशंसः शोभनस्तुतिः । आदित्येभिः इतरैरादित्यैः सह । अस्त्वित्यनुषङ्गः । शं सुखं नः रुद्रः । किंविशिष्टः । जलाषः । सुखनामैतत् । अत्र सामर्थ्यादन्तर्णीतमत्वर्थं द्रष्टव्यम् । सुखवानित्यर्थः । अथवा जलाषभेषज इत्यस्य समासस्योत्तरपदलोपो द्रष्टव्यः । तथा चोक्तं मन्त्रान्तरे — 'रुद्रं जलाषभेषजम्' इति । सुखकरौषध इत्यर्थः । रुद्रेभिः मध्यमस्थानैरन्यै रुद्रैः सह । अस्त्वित्यनुषङ्गः । शं सुखं नः त्वष्टा अस्तु । किञ्च । ग्नाभिः । स्त्रीनामैतत् । कुतः । 'मेना ग्ना' इति 'स्त्रीणामि'ति भगवता यास्केनोक्तत्वात् । देवपत्न्यश्चात्र स्त्रियोऽभिप्रेयन्ते । कुत एतत् । त्वष्टुर्देवपत्नीसाहचर्यदर्शनात् 'अग्ने पत्नीरिहावह देवानामुशतीरुपत्वष्टारं सोमपीतय' इति । इन्द्राण्याद्याभिर्देवपत्नीभिः सहेत्यर्थः । इहास्मिन् कर्मणि शृणोतु । किम् । सामर्थ्यात् स्तुतीरिति शेषः ॥

शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसन्तुयज्ञाः ।
शंनःस्वरूणांमितयोभवन्तुशंनःप्रस्व१ःशम्वस्तुवेदिः ॥

(अष्ट० ५. अध्या० ३. व० २९. ऋ० ७.)

---

१. 'षु रूपकम् । पा' घ., 'षु वर्तते पा' ङ. पाठः, २. 'वेत्यर्थं द्र' ख, ग. पाठः.

शं नः सोमः । शं सुखं नः अस्माकं सोमः ओषधिभूतो यज्ञसाधनकर्मात्मा देवतात्मा वा । उभयात्मत्वं देवतायाः प्रतिपादितं भगवता यास्केनापि 'या उभयविधाः स्युरि'त्यादिना भाष्येण । भवतु । ब्रह्म वेदो जगत्कारणं वा सत्यज्ञानादिलक्षणम् । शं सुखं नः भवतु । शं सुखाः नः ग्रावाणः अभिषवपाषाणाः । सन्त्वित्यपकृष्टव्यम् । शमु सन्तु यज्ञाः । उकारः पादपूरणः । सुखाः सन्तु यज्ञाः ऐष्टिकाः पाशुकाः सौमिकाश्च । शं सुखाः । नः स्वरूणाम् । स्वरुर्नाम यूपच्छेदनवेलायां प्रथमनिष्पन्नं शकलम् । बहुयूपे कर्मणि तानि च बहूनि । तदभिप्रायं स्वरूणामिति बहुवचनम् । मितयः । अत्र निसो लोपो द्रष्टव्यः । निर्मितय उत्पत्तयः । भवन्तु । शं सुखाः नः प्रस्वः । प्रकृष्टान् पुत्रान् सूयते इति प्रसूशब्देन सूत्योऽभिप्रेयन्ते । कल्याणप्रसवाः सर्वाः सूत्य इत्यर्थः । भवन्त्वित्यनुषङ्गः । शं सुखाः । उः पादपूरणः । अस्तु वेदिः । ऐष्टिकी पाशुकी सौमिकी च । अस्माकमिति शेषः ॥

शंनःसूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशोभवन्तु ।
शंनःपर्वताध्रुवयोभवन्तुशंनःसिन्धवःशमुसन्त्वापः ॥

(अष्ट० ५. अध्या० ३. व० २९. ऋ० ८.)

शं नः सूर्यः । शं सुखं नः अस्मभ्यं सूर्यः । किंविशिष्टः । उरुचक्षाः । उर्विति बहुनाम । चक्षतिः पश्यतिकर्मा । बहुभिः प्राणिभिर्दृश्यत इति वा बहून् प्राणिनः पश्यतीति वा उरुचक्षाः । अथवा चक्षुःशब्देन दर्शनहेतुत्वाद् रश्मयोऽभिप्रेयन्ते । सहस्ररश्मिरित्यर्थः । उदेतु उदयं करोतु । शं सुखाः नः चतस्रः चतुस्संख्याकाः प्रदिशः प्राच्याद्या भवन्तु । शं सुखाः नः पर्वताः मेरुप्रभृतयः शिलोच्चयाः । किंविशिष्टाः । ध्रुवयः । ध्रुविशब्दोऽयं ध्रुवशब्दपर्यायः । अथवा ध्रुवशब्दस्याकारस्य इकारापत्तिः । शाश्वता अचला इत्यर्थः । भवन्तु । शं सुखाः नः अस्माकम् । सिन्धवः । नदीनामैतत् । गङ्गाद्या नद्यः । भवन्तु । शं सुखाः । उः पादपूरणः । सन्तु आपः सर्वाः । अस्माकमिति शेषः ॥

---

१. 'त्वे बृहद्दे' ख. ग. पाठः.

शंनोअदितिर्भवतुव्रतेभिःशंनोभवन्तुमरुतःस्वर्काः ।

शंनोविष्णुःशमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥

(अष्ट० ५. अध्या० ३. व० २९. ऋ० ९.)

शं नो अदितिः । शं सुखा । नः अस्माकम् । अदितिः देवमाता भवतु । व्रतेभिः । कर्मनामैतत् । हेतौ च तृतीया । प्रयोजनस्य हेतुत्वेन विवक्षा । अस्माकं कर्मनिर्वृत्त्यर्थमित्यर्थः । शं सुखाः नः अस्माकं भवन्तु मरुतः । किंविशिष्टाः । स्वर्काः । अर्कशब्दः स्तोतृवचनः । 'अर्को यद्वो मरुतो हविष्मानि'ति यथा । शोभनस्तोतारः । अथवा अर्कशब्दो मन्त्रवचनः । 'इन्द्रमर्कैभिरार्किण' इति यथा । शोभनमन्त्राः कल्याणस्तुतय इत्यर्थः । अथवा अर्कशब्दोऽन्ननाम । शोभनहविर्लक्षणान्नाः । अथवा अर्कशब्दोऽञ्चतेर्गत्यर्थस्य गतिवचनः । सुगमना इत्यर्थः । अञ्चतेर्वा पूजार्थस्य अर्कशब्दः पूजावचनः । कल्याणपूजना इत्यर्थः । अथवा अर्चिश्शब्दोऽर्कवचनः । स्वर्चिषः शोभनदीप्तय इत्यर्थः । तथा चोक्तं भगवता यास्केन— 'स्वर्काः स्वञ्चनाः स्वर्चनाः स्वर्चिष' इति वेति । शं सुखम् । नः विष्णुः परमात्मा वासुदेवः अस्तु । शं सुखम् । उः पादपूरणः । पूषा आदित्यानामन्यतमो देवतान्तरं वा । नः अस्तु । शं सुखं नः भवित्रम् । भवति उत्पद्यते अनेनेति भवित्रम् । किं तत् । सामर्थ्यात् वृष्टिलक्षणमुदकम् । अथवा पवित्रशब्दस्य उदकनाम्नः पकारस्य भकारापत्तिः । शं सुखम् । उः पादपूरणः । अस्तु वायुः मध्यमस्थानो देवः ॥

शंनोदेवःसविताත्रायमाणःशंनोभवन्तूषसोविभातीः ।

शंनःपर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपतिरस्तुशंभुः ॥

(अष्ट० ५. अध्या० ३. व० २९. ऋ० १०.)

शं नो देवः । शं सुखं नः अस्माकं भवतु । देवः दानादिगुणयुक्तः सविता सूर्यः । त्रायमाणः पालयन् । किम् । सामर्थ्याच्चराचरम् । शं सुखं नः भवन्तु उषसः । एकस्या एव पूजनार्थे बहुवचनम् । विभातीः । प्रथमायाः स्थाने द्वितीयैषा । विभात्यः विविधं दीप्यमानाः । शं सुखं नः पर्जन्यः

१. 'स्व' घ. पाठः

भवतु । प्रजाभ्यः । तादर्थ्ये एषा चतुर्थी । अस्माकं प्रजानामर्थाय । शं सुखं नः क्षेत्रस्य पतिः मध्यमस्थानो देवः अस्तु । किंविशिष्टः । शम्भुः । शमिति सुखनाम । भवतिरत्रान्तर्णीतण्यर्थः । सुखभूः वृष्टिप्रदानद्वारेण सुखस्य भावयिता । शम्भुः देवतान्तरं वा । स च रुद्रः । तस्मिन् पक्षे शं नो अस्त्वित्यनुषङ्गः ॥

शंनोदेवाविश्वदेवाभवन्तुशंसरस्वतीसहधीभिरस्तु ।

शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोअप्याः ॥

(अष्ट० ५. अध्या० ३. व० ३०. ऋ० ११.)

शं नो देवाः । शं सुखाः नः अस्माकम् । देवाः अग्न्यादयः । किंविशिष्टाः । विश्वदेवाः । देवशब्दोऽत्र दीव्यतेः स्तुत्यर्थस्य कर्मसाधनः । सर्वस्तुत्या इत्यर्थः । अथवा विश्वेदेवा इत्येतद् देवतान्तरपदम् । देवा इत्येतत्तु तद्विशेषणम् । देवशब्दश्च दातृवचनः दातारो विश्वेदेवा इति । अथवा देवशब्दो दीपयितृवचनः । वृष्ट्याद्यनुप्रदानेन सर्वस्य जगतो दीपयितार इत्यर्थः । भवन्तु । शं सुखा सरस्वती वाग्देवता नदी वा । सह धीभिः । धीरिति कर्मनाम प्रज्ञानाम वा । कर्मभिः प्रज्ञाभिर्वा । युक्तेति वाक्यशेषः । अस्तु । शं सुखाः । अभिषाचः । 'षच सेवायाम्' । आभिमुख्येन सेवितारः । के । सामर्थ्यात् पुत्रपौत्रादयो दासा वा । भवन्त्विति शेषः । शं सुखाः । उः पादपूरणः । रातिषाचः । रातिर्मित्रं ज्ञातिर्वा । मित्रत्वेन ज्ञातित्वेन सेवितारः, मित्राणि ज्ञातयो वेत्यर्थः । शं सुखाः नः दिव्याः दिवि भवाः । के ते । सामर्थ्याद् द्वादशादित्याः भवन्तु । पार्थिवाः पृथिव्यां भवाः । के ते । सामर्थ्यादष्टौ वसवः । सुखा भवन्तु । शं सुखाः । नः अस्माकम् । अप्याः । आप इत्यन्तरिक्षनाम । तत्र भवा अप्याः । के ते । सामर्थ्याद् एकादश । रुद्राः भवन्तु । अथवा दिव्याः पार्थिवा अप्या इति त्रयस्त्रिंशद् देवाः स्थानत्रयसम्बन्धित्वेन एकादशैकादशाभिप्रेयन्ते । कुत एतत् । मन्त्रान्तरे दर्शनात् । 'ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सु क्षितो महिनैकादश स्थे'ति ॥

शंनःसत्यस्यपतयोभवन्तुशंनोअर्वन्तःशमुसन्तुगावः ।

शंनऋभवःसुकृतःसुहस्ताःशंनोभवन्तुपितरोहवेषु ॥

(अष्ट० ५. अध्या० ३. व० ३०. ऋ० १२.)

शं नः सत्यस्य । शं सुखाः । नः अस्माकम् । सत्यस्य सत्यवचनस्य पतयः पालयितारः । के ते । सामर्थ्याद् देवाः । कुत एतत् । 'सत्यसंहिता वै देवाः' इति श्रुतेः । अथवा सत्यमित्युदकनाम, तस्य पतयोऽग्निवायुसूर्याः । कथमेषामुदकस्वाम्यमिति चेत्, श्रुतिमन्त्रलिङ्गेभ्यः । अग्नेस्तावत् 'अग्निर्वा इतो वृष्टिमुदीरयति' 'धामच्छदिव खलु वै भूत्वा वर्षती'ति वृष्टिहेतुत्वं श्रूयते । तथा 'मरुतः सृष्टां वृष्टिं नयन्ती'ति वायोरपि वृष्टिहेतुत्वं श्रूयते । मरुच्छब्दो हि वायुपर्यायः । तथा सूर्यस्यापि 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षती'ति । मन्त्रवर्णाः — अग्नेस्तावत् 'समानमेतदुदकमि'ति । वायोः पर्जन्यात्मनः 'धामच्छदिवे'त्यादयो बहवो मन्त्राः । सूर्यस्य 'कृष्णं नियानं हरयः सुवर्णाः' इति । भवन्तु । शं सुखाः नः अर्वन्तः अश्वाः । शं सुखाः । उ- पादपूरणः । सन्तु भवन्तु गावः सान्नाय्यादिहविर्निर्वर्तनेन । शं सुखाः नः ऋभवः । ऋभव इति बहुवचनेन ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गि- रसस्य त्रयः पुत्रा अभिधीयन्ते सर्वत्रार्भवेषु मन्त्रेषु । तथा च भगवता यास्केः नोक्तम्—'ऋजुर्विभ्वा वाजः' इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेनेति । किंविशिष्टाः । सुकृतः । शोभनस्यैकचमसचतुष्टयकरणादेः कर्मणः कर्तारः । तथेममर्थं वामदेवः प्रदर्शितवान् 'ज्येष्ठ आह चमसाद्वा करेति कनीयांस्त्रीन् कृणवामेत्याह कनिष्ठ आह चतुरस्करेति' । सुहस्ताः क्षिप्रहस्ता इत्यर्थः । ऋभूणामेव विशेषणमेतत् । भवन्तु । शं सुखाः नः भवन्तु पितरः पितृपितामहप्रपितामहाः । अथवा ऊमादयः । ते च 'ऊमा वै पितरः प्रातस्सवन ऊर्वा माध्यन्दिने काव्या तृतीय- सवन' इत्युक्ताः । हवेषु आह्वानेषु सत्सु, अस्माभिराहूताः सन्त इत्यर्थः ॥

शंनोअजएकपाद्देवोअस्तुशंनोहिर्बुध्न्यः शंसमुद्रः ।
शंनोअपांनपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा ॥

(अष्ट० ५ अध्या० ३. व० १०. ऋ० ११.)

शं नो अजः । शं सुखः नः अस्माकम् । अजः एकपाद् देवः इति पदत्रयेणादित्योऽभिधीयते । कथं कृत्वा । योगात् । तत्राजशब्दस्तावद् 'अज गतिक्षेपणयोः' इति क्षेपवचनः । स्वरश्मिना अप आकृष्य लोकेष्वजति क्षिपति प्रेरयतीत्यर्थः । एकपात् । एकश्चासौ पादश्चेत्येकपात् । पादशब्दोऽत्र चतुर्भाग-

वचनः । तस्यैकपादः आदित्यः परमात्मनः । कुत एतत् । विज्ञायते हि 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' इति । अथवा एकेन रश्मिना सुषुम्नाख्येन चन्द्रमसमनुप्रविश्य कृत्स्नं जगत् पातीत्येकपात् । तथा च मन्त्रवर्णः — 'सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' इति । देवशब्दोऽत्र दीपयितृवचनः । सर्वस्य जगतो दीपयिता । दातृवचनो वा देवशब्दः । स्तोतॄणां यष्टॄणामैहिकामुष्मिकाभिलषितार्थप्रदाता, मुक्तिपर्यन्तस्य फलस्य तदधीनत्वात् । अस्तु । शं नः अहिः मध्यमस्थानो देवविशेषः । किंविशिष्टः । बुध्न्यः । बुधमन्तरिक्षं तत्र भवः । अस्तु । शं सुखं समुद्रः पार्थिवः । अन्तरिक्षनाम वा समुद्रशब्दः । अस्माकं भवतु । शं सुखं नः अपान्नपात् मध्यमस्थानो वैद्युताग्निः । कुत एतत् । नपाच्छब्दः पौत्रवचनः । तथा च भगवता यास्केन दर्शितं — 'नपादित्यनन्तरायाः प्रजाया नामधेयमि'ति । अपां मेघोदरगतानां पौत्र इत्यर्थः । कुत एतत् । अद आदित्यो जायते । तथा च वेदेनोक्तं 'समुद्रादूर्मिर्मधुमानुदारदि'ति । आदित्याद् वैद्युतोऽग्निः । तथाच श्रूयते 'यदा वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षती'ति । तस्मिन् काले मध्यमोऽग्निर्जायते । अत आदित्याज्जन्म वैद्युतस्य सिद्धम् । अत एवापां पौत्रत्वं वैद्युतस्याग्नेः । पेरुः अपां पाता । अपान्नपाद्विशेषणमेतत् । अस्तु । शं सुखा नः पृश्निः । साधारणनामैतद् दिवश्चादित्यस्य च । इह पुनर्द्यौरेवाभिधीयते । कुतः । देवगोपेति स्त्रीलिङ्गविशेषणत्वात् । द्यौः भवतु । किंविशिष्टा । देवगोपा । देवा गोप्तारो यस्याः सा देवगोपा । अथवा देवानां गोप्त्री देवगोपा । अथवा देवी चासौ गोप्त्री चेति देवगोपा ॥

आदित्यारुद्रावसवोजुषन्तेदंब्रह्मक्रियमाणंनवीयः ।
शृण्वन्तुनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः ॥

(अष्ट० ५. अध्या० ३. व० ३०. ऋ० १४.)

आदित्या रुद्राः । आदित्या द्वादश । रुद्रा एकादश । वसवोऽष्टौ । एते त्रिस्थाना देवगणाः जुषन्त सेवन्तामित्याशास्महे । इदं ब्रह्म स्तुतिलक्षणं वचः । क्रियमाणं मया निर्वर्त्यमानम् । नवीयः नवतरम् अन्यैरकृतपूर्वमित्यर्थः । न च केवलम् आदित्यादयः । किं तर्हि । अन्येऽपि शृण्वन्तु । नः अस्माकं स्वभूतमिदम् । ब्रह्मेत्यनुवर्तते । दिव्याः दिवि भवा अश्विप्रभृतयः । पार्थिवासः

१. 'रा जायमानमभिधे' ब. पाठः.

पृथिवीशब्दोऽत्रान्तरिक्षनाम । तत्र भवाः पार्थिवाः मध्यमस्थाना वायुप्रभृतयः । गोजाता उत । उतशब्दोऽप्यर्थे । अपिश्च समुच्चये । गोशब्दश्चात्र पृथिवीनाम । तत्र जाता गोजाताः पृथिवीस्थाना अग्निप्रभृतयश्च । तान् विशिनष्टि—ये यज्ञियासः यज्ञसम्पादिनः । ते च शृण्वन्त्विति सम्बन्धः ॥

ये॒दे॒वानां॑य॒ज्ञिया॑य॒ज्ञिया॑नां॒मनो॒र्यज॑त्रा॒अमृ॑ता॒ऋत॒ज्ञाः ।

तेनो॑रासन्तामुरु॒गाय॑म॒द्ययू॒यंपा॑तस्व॒स्तिभिः॒सदा॑नः ॥

(अष्ट० ५. अध्या० ३. वर्ग० ३०. ऋ० १५.)

ये देवानां यज्ञियाः । देवानां यज्ञियानाम् । निर्धारणे एते षष्ठ्यौ । यज्ञसम्पादिनां देवानां मध्ये ये देवाः । मनोः मनुनाम्नो राज्ञो यज्ञियाः यज्ञसम्पादिनः यज्ञेऽङ्गत्वं[1] प्रतिपेदिर इत्यर्थः । किंविशिष्टाः । यजत्राः यष्टव्याः । अमृताः मरणवर्जिताः । ऋतज्ञाः । ऋतशब्दः सत्यनाम यज्ञनाम वा । सत्यज्ञा वा यज्ञज्ञा वेत्यर्थः । ते देवाः नः अस्मभ्यं रासन्तां ददतु । उरुगायम् । उर्विति बहुनाम । गायतिः स्तुतिकर्मा । बहुस्तुति । किं तत् । न इति सम्प्रदानचतुर्थीश्रुतेः रासन्तामिति दानश्रुतेश्च संप्रदेयं धनमिहाभिप्रेयते । बहुभिः स्तुत्यं हिरण्यादि धनमित्यर्थः । अद्य इदानीमेव, न कालान्तरे इत्यर्थः । उत्तरः पादः प्रत्यक्षकृतः । अतो भिन्नं वाक्यम् । सर्वे देवाः प्रार्थ्यन्ते । हे देवाः ! यूयं पात रक्षत स्वस्तिभिः अविनाशैरुपायैः सदा नित्यं नः अस्मान् ॥

अविच्छिन्नया चोदकधारया "आपो हि ष्ठा मयोभुवः" इति तृचेन ।

आपो॒हिष्ठा॑म॒यो॒भुव॒स्ता॑न॒ऊ॒र्जेद॑धातन । म॒हेरणा॑य॒चक्ष॑से ॥

(अष्ट० ७. अध्या० ६. व० ५ ऋ० १.)

त्रिशिरसस्त्वष्टुः पुत्रस्याम्बरीषपुत्रस्य सिन्धुद्वीपस्य वार्षम् । गायत्रं छन्दः । आपो देवता । आपो हि । प्रत्यक्षकृतोऽयं मन्त्रः, स्थ दधातनेति च मध्यमपुरुषयोगात् । अतः आप इति सम्बोधनप्रथमान्तम् । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । हे आपः ! या यूयम् । हिशब्दः पादपूरणः । मयोभुवः । मय इति सुखनाम । भवतिरत्रान्तर्णीतण्यर्थः । स्नानपानसम्यग्जरणादिना प्रकारेण

---

१. 'यज्ञेऽङ्ग' ख. पाठः.

सर्वस्य प्राणिजातस्य मयसः सुखस्य भावयित्र्यः उत्पादयित्र्यः । स्थ भवथ । या यूयं चराचरस्य कृत्स्नस्य सुखमुत्पादयथेत्यर्थः । ताः नः अस्मान् ऊर्जे अन्नाय दधातन धत्त अन्नप्राप्तियोग्यान् कुरुत । यथा अन्नं प्राप्नुयाम तथा कुरुतेत्यर्थः । महे महते । रणाय । मकारलोपो द्रष्टव्यः । रमणाय रमणीयाय । चक्षसे दर्शनाय । दधातनेत्यनुषङ्गः । एतदुक्तं भवति —अन्नप्राप्तियोग्यान् रमणीयपुत्रजन्मादिदर्शनयोग्यांश्चास्मान् कुरुतेति । अथवा ऊर्जे इति द्वितीयार्थे चतुर्थी । अस्मिन् पक्षे न इति सम्प्रदानचतुर्थ्यन्तम् । दधातिरपि दानार्थः । युष्मत्संयोगजनितमन्नमस्मभ्यं दत्तेति । किञ्च, महे रणाय चक्षस इति तिस्रोऽपि चतुर्थ्यो द्वितीयार्थे । चक्षःशब्दश्च ज्ञानवचनः । दधातनेत्यनुषङ्गः । महद् रमणीयं च ज्ञानं धत्तेति । ज्ञानस्य महत्त्वं रमणीयत्वं च स्वर्गापवर्गहेतुविषयत्वम् ॥

योवः॑शिवत॑मोरसस्तस्य॑भाजयतेहनः । उशतीरि॑वमातरः ॥

(अष्ट० ७. अध्या० ६. व० ५. ऋ० २.)

यो वः । हे आपः ! यः रसः वः युष्माकं स्वभूतः शिवतमः अतिशयेन शिवः सुखः मृष्टः स्वादुरूपः आरोग्यकरश्च । तस्य रसस्य । षष्ठीनिर्देशादेकदेशमिति शेषः । द्वितीयार्थे वा षष्ठी । तं रसमित्यर्थः । भाजयत सेवयत नः अस्मान् । तं रसमस्मानुपयोजयतेत्यर्थः । इहास्मिन् लोके । किमिव । उशतीरिव मातरः । यथा उशत्यः कामयमाना मातरः । किम् । सामर्थ्यात् पुत्रसमृद्धिम् । यथा स्तन्यरसं परेण हार्देन युक्ताः पुत्रान् भाजयन्ति अन्यदपि रसवस्तु, एवमस्मान् भाजयतेति ॥

तस्मा॒अरं॑गमामवो॒यस्य॒क्षया॑य॒जिन्व॑थ । आपो॑जनय॑थाचनः ॥

(अष्ट० ७. अध्या० ६. व० ५. ऋ० ३.)

तस्मा अरम् । हे आपः! तस्मै । द्वितीयार्थे चतुर्थी । तं रसम् । अरं पर्याप्तं गमाम गच्छेमेत्याशास्महे वः युष्माकं स्वभूतम् ! यस्य रसस्य क्षयाय । 'क्षि निवासगत्योः' । अत्रापि द्वितीयार्थे चतुर्थी । क्षयं निवासं रससंयोगमित्यर्थः । जिन्वथ । जिन्वतिः प्रीतिकर्मा । प्रीणीथ यूयम् । तं रसं गमामेति । किञ्च । जनयथ ।

१. 'थ्यः स्थ' ख. पाठः

व्यत्ययेनायं लोडर्थे लट् । जनयत । पुत्रपौत्रादिव्रीहिहिरण्यादिसम्पन्नान् उत्पादयत च नः अस्मान् ॥

व्रीहियवमतीरप आसेचयेद् 'अच्युताय भौमाय स्वाहे'ति । श्रवणा कर्मणि व्याख्यातमेतद् यजुः । अथैनामुच्छ्रीयमाणामनुमन्त्रयेत 'इहैव तिष्ठे'ति द्वाभ्याम् ।

इहैव तिष्ठ निमिता तिल्विलास्त्वाविरावतीं मध्ये पोषस्व
तिष्ठतीं मा त्वा प्रापन्नघायवः ।
आ त्वा कुमारस्तरुण आ वत्सो जयतां सह आ त्वा परिस्रुतः
कुम्भ आ दध्नः कलशैरयः ॥

वामदेवस्यानुष्टुभौ । स्थूणाभिधेया । हे स्थूणे! इहैव गर्ते तिष्ठ निमिता निखाता सती । तिल्विला । 'तिल स्नेहने' । इलेति पृथिवीनाम । तात्स्थ्यादत्र ताच्छब्द्यम् । तेन पृथिवीस्थं प्राणिजातमभिप्रेयते । एतदुक्तं भवति — त्वयि स्निग्धगृहगतप्राणिजाता इत्यर्थः । अस्तु । मध्यमस्थाने प्रथमपुरुषः । एधि भव । आविः प्रकाशभूता । गृहमध्यगतत्वात् सर्वप्राणिनामाविर्भूतेत्यर्थः । आ अवतीम् । आकारः पादपूरणः । प्रथमार्थे द्वितीयैषा । अवती रक्षन्ती । किम् । सामर्थ्याद् गृहम् । तिल्विला अस्तु इत्यनेन पदद्वयेनावतीत्यस्य सम्बन्धः । किञ्च । मध्ये । कस्य । सामर्थ्याद् गृहस्य । सप्तमीनिर्देशात् स्थितेति वाक्यशेषः । पोषस्व । 'पुष पुष्टौ' इत्यस्यान्तर्णीतण्यर्थस्यैतद्रूपम् । पोषयस्व सर्वाणि भूतानीत्यर्थः । तिष्ठतीम् । एवंभूतां गृहस्य मध्ये तिष्ठन्तीं त्वा त्वाम् । अघायवः अघं पापं तत्कामाश्चोरादयो दुर्मनुष्याः मा प्रापन् न प्राप्नुयुरित्यर्थः । किञ्च, त्वा त्वां कुमारः बालः । आ इत्युपसर्गश्रुतेः योग्यक्रियापदाध्याहारः । उपसर्गाः पुनरेवमात्मकाः—यत्र क्रियापदं श्रूयते तत्र क्रियाविशेषमाहुः । यत्र न श्रूयते तत्र ससाधनां क्रियामाहुः । अत्र तु क्रियापदं न श्रूयते । अतः सामर्थ्याद् गच्छत्वित्यध्याहारो युज्यते । आगच्छतु । न केवलं कुमारः । किन्तर्हि । तरुणः युवा । त्वामागच्छतु इत्यनुषङ्गः । बालयूनोर्ग्रहणाद् वृद्धश्चेति शेषः । आगच्छतु । वत्सः । गोरिति वाक्यशेषः । जयताम् । किम् । सामर्थ्यादितरान् पशून् । (सह) बहुक्षीरत्वाहिंस्रत्वादिगुणोपेतेन मात्रा पशुना सहेत्यर्थः । आगच्छतु च त्वा त्वां परिस्रुतः कुम्भः । परिस्रुच्छब्दः सान्द्रतावचनः । परिस्रुत इति षष्ठीनिर्देशात् पूर्ण इति वाक्यशेषः । परिस्रुतः पूर्णकुम्भः आगच्छतु च । दध्नः । पूर्णैरिति शेषः । कलशैः

१. 'गते प्रा', २. 'रा मनु' ङ. पाठः.

घटादिभिः। सहयोगलक्षणैषा तृतीया। दध्नः पूर्णैः कलशैः सह। अयः। 'अय पय गतौ' इत्यस्यायतेर्धातोरयश्शब्दो गन्तृवचनः। गन्ता। कः। सामर्थ्यात् गोपालः। त्वामित्यनुवर्त्यम्। एतदुक्तं भवति — अस्मद्गवादीनां रक्षणार्थमरण्ये पर्यटनशीलो गोपालश्च दध्ना पूर्णैर्घटादिभिस्त्वामागच्छत्विति ॥

वंशमाधीयमानम् 'ऋतेन स्थूणामि'त्यादिनानुमन्त्रयेत।

**ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधानाः ॥**

वामदेवार्षी[1] द्विपदा। यजुर्वा। वंशोऽभिधेयः। हे वंश! ऋतेन। उदकनामैतदन्यत्र। इह तु सामर्थ्यादुदककार्यमन्नमभिप्रेतम्। हेतौ च तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। अन्नसिद्ध्यर्थमित्यर्थः। अथवा ऋतशब्दः सत्यनाम। सत्यार्थमित्यर्थः। स्थूणामधिरोह। अधीत्येष आ इत्यस्य स्थाने। आरोहेत्यर्थः। अधीत्युपरिभावे वा। अस्मिन् पक्षे स्थूणामिति द्वितीया षष्ठ्यर्थे। आकारश्चाध्याहर्तव्यः। स्थूणाया उपर्यारोहेत्यर्थः। किं कुर्वन्। उच्यते। द्राघीयः अतिशयेन दीर्घं शतसंवत्सरलक्षणमित्यर्थः। आयुः जीवितम्। प्रतरं प्रकृष्टतरं व्याध्यादिदोषरहितं चेत्यर्थः। दधानाः। दधातिर्दानार्थः। बहुवचनं चैकवचनस्थाने। ददन्दित्यर्थः ॥

सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् 'पृथिव्या अधि सम्भवे'ति।

**पृथिव्या अधि सम्भव ॥**

वामदेवार्षं यजुः। मणिकोऽभिधेयः। हे मणिक! पृथिव्याः। विकारे प्रकृतिशब्दोऽयम्। एकवचनं च बहुवचनस्य स्थाने। पृथिवीविकारभूतानां शिलानामित्यर्थः। अधि उपरि। सम्भव। सम्पूर्वो भवतिरत्र सामर्थ्यात् प्रतिष्ठायां वर्तते। प्रतितिष्ठ चतसृषु शिलास्वित्यर्थः ॥

'अरङ्गरो वावदीती'ति वा। मणिकं प्रतिष्ठापयेदित्यनुषङ्गः।

**अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया।**
**इरामुह प्रशंसत्यनिरामवसेधत ॥**

हिरण्यगर्भस्यार्षम्। कुत एतत्। श्रुतेः। 'एष इमं लोकमभ्यर्चदि'त्युपक्रम्य 'एकैव व्याहृतिः प्राण एवे'त्यन्तेन प्राणस्य हिरण्यगर्भस्य सकलवेदद्रष्टृत्वमभिहितमिति। अत एव च शौनकेन ऋषेरनुक्तिः। अनुष्टुप् छन्दः। भूतेच्छदा तृतीयैषा। ताश्चैन्द्र्यः। 'त्वमिन्द्र शर्मरिणा' 'त्वमिन्द्र कपोता-

१, 'र्षद्वि' घ. ङ. पाठः।

ये'ति च द्वयोरिन्द्रश्रवणात् । प्रकरणसामर्थ्यात् तृतीयाप्यन्द्वैव 'नदन्न-भिन्नममुया शयानमि'तिवत् । अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः इन्द्रः अरङ्गरः । अरङ्गरशब्दो भ्रमरवचनः । 'अरङ्गरेव मध्वेरयेथे'ति यथा । अरं पर्याप्तमोषधिवनस्पतीनां रसं गिरतीति अरङ्गरः । लुप्तोपमं चात्रेदं द्रष्टव्यम् । अरङ्गर इव वावदीति अत्यर्थं वदति । स्तुतिभिर्हविर्भिश्च तृप्तः सन्नत्यर्थं गर्जितशब्दं करोतीत्यर्थः । त्रेधा । त्रिशब्दोऽत्रानेकत्ववचनः । 'त्रिर्नो अश्विना यजते'ति यथा । अनेकप्रकारमित्यर्थः । बद्धः नद्धः । कः । सामर्थ्याद्वृषभः । वरत्रया चर्ममय्या रज्ज्वा । इदमपि लुप्तोपमम् । वावदीती-त्यनुषङ्गः । यथानेकप्रकारं वरत्रया बद्धो बलीवर्दोऽत्यर्थं गर्जति तद्वदित्यर्थः । यश्च इराम् । अन्ननामैतत् । हविर्लक्षणमन्नम् । उ ह इत्येतौ पादपूरणौ । प्रशं-सति प्रकर्षेण स्तौति । अनिरामिरारहितां हविर्लक्षणान्नवर्जितामित्यर्थः । काम् । सामर्थ्यात् स्तुतिम् । अवसेधत । अत्र लकारपुरुषवचनव्यत्ययः । अवसेधति निवारयति हविः । प्रदानशून्यां शुद्धस्तुतिं न श्रृणोतीत्यर्थः । तं स्तुमो यजाम-श्चेति वाक्यशेषः । अथवा वावदीतीति दृष्टान्तभूतभ्रमरवृषभयोः समानाधि-करणं, न तु दार्ष्टान्तिकस्येन्द्रस्य । यथातथाशब्दाध्याहारेण च योजना । यथा अरङ्गरो मधुमत्तो वावदीति अत्यर्थं गायति, यथा च वरत्रया अनेकप्रकारं बद्धो वृषभो वाशितां दृष्ट्वात्यर्थं गर्जति, तथायम् इन्द्र इरामुह प्रशंसतीत्यादि-श्लिष्टपदयोजना सदृशी । मणिकेऽपि यथासम्भवं योजयितव्यो मन्त्रः । यत्तच्छब्दाध्याहाराद् विशिष्टं तं प्रतिष्ठापयामीति वाक्यशेषः ॥

अथास्मिन्नप आसेचयति 'ऐतु राजे'ति ।

**ऐतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः ।**
**इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्तु ॥**

वामदेवार्षी त्रिष्टुप् । वरुणो देवता, आपो वा उभयं वा । ऐतु आगच्छतु । राजा अपां स्वामी वरुणः । न च केवलः । किन्तर्हि । रेवतीभिः । रेवतीशब्देनात्राप उच्यन्ते । 'एमा अश्मन् रेवतीर्जीवधन्या' इति यथा । सहयोगलक्षणा चैषा तृतीया । धनवतीभिरद्भिः सह । एत्य च अस्मिन् स्थाने मणिकाख्ये तिष्ठतु मोदमानः हृष्यन् । उत्तरेणार्धर्चेनापः प्रार्थ्यन्ते । इराम् । अन्ननामैतत् । अन्नम् । वहन्तः । वहेर्धातोश्शत्रन्तात् पुंसि द्वितीया-

---

१. 'शाशब्दोऽध्या' घ. ङ. पाठः.

घटादिभिः। सहयोगलक्षणैषा तृतीया। दध्नः पूर्णैः कलशैः सह । अयः । 'अय पय गतौ' इत्यस्यायतेर्धातोरयश्शब्दो गन्तृवचनः । गन्ता । कः । सामर्थ्यात् गोपालः । त्वामित्यनुवर्त्यम् । एतदुक्तं भवति — अस्मद्गवादीनां रक्षणार्थमरण्ये पर्यटनशीलो गोपालश्च दध्ना पूर्णैर्घटादिभिस्त्वामागच्छत्विति ॥

वंशमाधीयमानम् 'ऋतेन स्थूणामि'त्यादिनानुमन्त्रयेत ।

ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधानाः ॥

वामदेवार्षी[1] द्विपदा । यजुर्वा । वंशोऽभिधेयः । हे वंश ! ऋतेन । उदकनामैतदन्यत्र । इह तु सामर्थ्यादुदककार्यमन्नमभिप्रेतम् । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । अन्नसिद्ध्यर्थमित्यर्थः । अथवा ऋतशब्दः सत्यनाम । सत्यार्थमित्यर्थः । स्थूणामधिरोह । अधीत्येष आ इत्यस्य स्थाने । आरोहेत्यर्थः । अधीत्युपरिभावे वा । अस्मिन् पक्षे स्थूणामिति द्वितीया षष्ठ्यर्थे । आकारश्चाध्याहर्तव्यः । स्थूणाया उपर्यारोहेत्यर्थः । किं कुर्वन् । उच्यते । द्राघीयः अतिशयेन दीर्घं शतसंवत्सरलक्षणमित्यर्थः । आयुः जीवितम् । प्रतरं प्रकृष्टतरं व्याध्यादिदोषरहितं चेत्यर्थः । दधानाः । दधातिर्दानार्थः । बहुवचनं चैकवचनस्थाने । ददिदित्यर्थः ॥

सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् 'पृथिव्या अधि सम्भवे'ति ।

पृथिव्या अधि सम्भव ॥

वामदेवार्षं यजुः । मणिकोऽभिधेयः । हे मणिक ! पृथिव्याः । विकारे प्रकृतिशब्दोऽयम् । एकवचनं च बहुवचनस्य स्थाने । पृथिवीविकारभूतानां शिलानामित्यर्थः । अधि उपरि । सम्भव । सम्पूर्वो भवतिरत्र सामर्थ्यात् प्रतिष्ठायां वर्तते । प्रतितिष्ठ चतसृषु शिलास्वित्यर्थः ॥

'अरङ्गरो वावदीती'ति वा । मणिकं प्रतिष्ठापयेदित्यनुषङ्गः ।

अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया ।
इरामुह प्रशंसत्यनिरामवसेधत ॥

हिरण्यगर्भस्यार्षम् । कुत एतत् । श्रुतेः । 'एष इमं लोकमभ्यर्चदि'त्युपक्रम्य 'एकैव व्याहृतिः प्राण एवे'त्यन्तेन प्राणस्य हिरण्यगर्भस्य सकलवेदद्रष्टृत्वमभिहितमिति । अत एव च शौनकेन ऋषेरनुक्तिः । अनुष्टुप् छन्दः । भूतेच्छदा तृतीयैषा । ताश्चैन्द्र्यः । 'त्वमिन्द्र शर्मरिणा' 'त्वमिन्द्र कपोता-

१. 'र्षिद्वि' घ. ङ. पाठः

ये'ति च द्वयोरिन्द्रश्रवणात् । प्रकरणसामर्थ्यात् तृतीयाप्यन्वैव 'नदन्न-भिन्नममुया शयानमि'तिवत् । अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः इन्द्रः अरङ्गरः । अरङ्गरशब्दो भ्रमरवचनः । 'अरङ्गरेव मध्वेरयेथे'ति यथा । अरं पर्याप्तमोषधिवनस्पतीनां रसं गिरतीति अरङ्गरः । लुप्तोपमं चात्रेदं द्रष्टव्यम् । अरङ्गर इव वावदीति अत्यर्थं वदति । स्तुतिभिर्हविर्भिश्च तृप्तः सन्नत्यर्थं गर्जितशब्दं करोतीत्यर्थः । त्रेधा । त्रिशब्दोऽत्रानेकत्ववचनः । 'त्रिर्नो अश्विना यजते'ति यथा । अनेकप्रकारमित्यर्थः । बद्धः नद्धः । कः । सामर्थ्याद्वृषभः । वरत्रया चर्ममय्या रज्ज्वा । इदमपि लुप्तोपमम् । वावदीती-त्यनुषङ्गः । यथानेकप्रकारं वरत्रया बद्धो बलीवर्दोऽत्यर्थं गर्जति तद्वदित्यर्थः । यश्च इराम् । अन्ननामैतत् । हविर्लक्षणमन्नम् । उ ह इत्येतौ पादपूरणौ । प्रशं-सति प्रकर्षेण स्तौति । अनिरामिरारहितां हविर्लक्षणान्नवर्जितामित्यर्थः । काम् । सामर्थ्यात् स्तुतिम् । अवसेधत । अत्र लकारपुरुषवचनव्यत्ययः । अवसेधति निवारयति हविः । प्रदानशून्यां शुद्धस्तुतिं न शृणोतीत्यर्थः । तं स्तुमो यजाम-श्चेति वाक्यशेषः । अथवा वावदीतीति दृष्टान्तभूतभ्रमरवृषभयोः समानाधि-करणं, न तु दार्ष्टान्तिकस्येन्द्रस्य । यथातथाशब्दाध्याहारेण च योजना । यथा अरङ्गरो मधुमत्तो वावदीति अत्यर्थं गायति, यथा च वरत्रया अनेकप्रकारं बद्धो वृषभो वाशितां दृष्ट्वात्यर्थं गर्जति, तथायम् इन्द्र इरामुह प्रशंसतीत्यादि-शिष्टपदयोजना सदृशी । मणिकेऽपि यथासम्भवं योजयितव्यो मन्त्रः । यत्तच्छब्दाध्याहाराद् विशिष्टं तं प्रतिष्ठापयामीति वाक्यशेषः ॥

अथास्मिन्नप आसेचयति 'ऐतु राजे'ति ।

**ऐतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः ।**
**इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्तु ॥**

वामदेवार्षा त्रिष्टुप् । वरुणो देवता, आपो वा उभयं वा । ऐतु आगच्छतु । राजा अपां स्वामी वरुणः । न च केवलः । किन्तर्हि । रेवतीभिः । रेवतीशब्देनात्राप उच्यन्ते । 'एमा अश्मन् रेवतीर्जीवधन्या' इति यथा । सहयोगलक्षणा चैषा तृतीया । धनवतीभिरद्भिः सह । एत्य च अस्मिन् स्थाने मणिकाख्ये तिष्ठतु मोदमानः हृष्यन् । उत्तरेणार्धर्चेनापः प्रार्थ्यन्ते । इराम् । अन्ननामैतत् । अन्नम् । वहन्तः । वहेर्धातोश्शत्रन्तात् पुंसि द्वितीया-

१. 'थाशब्दोऽथ्या' घ. ङ. पाठः.

घटादिभिः । सहयोगलक्षणैषा तृतीया । दध्नः पूर्णैः कलशैः सह । अयः । 'अय पय गतौ' इत्यस्यायतेर्धातोरयश्शब्दो गन्तृवचनः । गन्ता । कः । सामर्थ्यात् गोपालः । त्वामित्यनुवर्त्यम् । एतदुक्तं भवति — असद्गवादीनां रक्षणार्थमरण्ये पर्यटनशीलो गोपालश्च दध्ना पूर्णैर्घटादिभिस्त्वामागच्छत्विति ॥

वंशमाधीयमानम् 'ऋतेन स्थूणामि'त्यादिनानुमन्त्रयेत ।

**ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधानाः ॥**

वामदेवार्षा[1] द्विपदा । यजुर्वा । वंशोऽभिधेयः । हे वंश! ऋतेन । उदकनामैतदन्यत्र । इह तु सामर्थ्यादुदककार्यमन्नमभिप्रेतम् । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । अन्नसिद्ध्यर्थमित्यर्थः । अथवा ऋतशब्दः सत्यनाम । सत्यार्थमित्यर्थः । स्थूणामधिरोह । अधीत्येष आ इत्यस्य स्थाने । आरोहेत्यर्थः । अधीत्युपरिभावे वा । अस्मिन् पक्षे स्थूणामिति द्वितीया षष्ठ्यर्थे । आकारश्चाध्याहर्तव्यः । स्थूणाया उपर्यारोहेत्यर्थः । किं कुर्वन् । उच्यते । द्राघीयः अतिशयेन दीर्घं शतसंवत्सरलक्षणमित्यर्थः । आयुः जीवितम् । प्रतरं प्रकृष्टतरं व्याध्यादिदोषरहितं चेत्यर्थः । दधानाः । दधातिर्दानार्थः । बहुवचनं चैकवचनस्थाने । ददादित्यर्थः ॥

सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् 'पृथिव्या अधि सम्भवे'ति ।

**पृथिव्या अधि सम्भव ॥**

वामदेवार्षं यजुः । मणिकोऽभिधेयः । हे मणिक! पृथिव्याः । विकारे प्रकृतिशब्दोऽयम् । एकवचनं च बहुवचनस्य स्थाने । पृथिवीविकारभूतानां शिलानामित्यर्थः । अधि उपरि । सम्भव । सम्पूर्वो भवतिरत्र सामर्थ्यात् प्रतिष्ठायां वर्तते । प्रतितिष्ठ चतसृषु शिलास्वित्यर्थः ॥

'अरङ्गरो वावदीती'ति वा । मणिकं प्रतिष्ठापयेदित्यनुषङ्गः ।

**अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया ।**
**इरामुह प्रशंसत्यनिरामवसेधत ॥**

हिरण्यगर्भस्यार्षम् । कुत एतत् । श्रुतेः । 'एष इमं लोकमभ्यर्चदि'त्युपक्रम्य 'एकैव व्याहृतिः प्राण एवे'त्यन्तेन प्राणस्य हिरण्यगर्भस्य सकलवेदद्रष्टृत्वमभिहितमिति । अत एव च शौनकेन ऋषेरनुक्तिः । अनुष्टुप् छन्दः । भूतेच्छदा तृतीयैषा । तार्क्ष्यैन्द्यः । 'त्वमिन्द्र शर्मरिणा' 'त्वमिन्द्र कपोता-

---

१. 'र्षद्वि' घ. ङ. पाठः.

ये'ति च द्वयोरिन्द्रश्रवणात् । प्रकरणसामर्थ्यात् तृतीयाप्यन्द्यैव 'नदन्नभिन्नमुया शयानमि'तिवत् । अत्रैकवाक्यताप्रसिद्धयर्थं यत्तच्छब्दावध्याहार्यौ । यः इन्द्रः अरङ्गरः । अरङ्गरशब्दो भ्रमरवचनः । 'अरङ्गरेव मध्वेरयेथे'ति यथा । अरं पर्याप्तमोषधिवनस्पतीनां रसं गिरतीति अरङ्गरः । लुप्तोपमं चात्रेदं द्रष्टव्यम् । अरङ्गर इव वावदीति अत्यर्थं वदति । स्तुतिभिर्हविर्भिश्च तृप्तः सन्नत्यर्थं गर्जितशब्दं करोतीत्यर्थः । त्रेधा । त्रिशब्दोऽत्रानेकत्ववचनः । 'त्रिर्नो अश्विना यजते'ति यथा । अनेकप्रकारमित्यर्थः । बद्धः नद्धः । कः । सामर्थ्याद्वृषभः । वरत्रया चर्ममय्या रज्ज्वा । इदमपि लुप्तोपमम् । वावदीतीत्यनुषङ्गः । यथानेकप्रकारं वरत्रया बद्धो बलीवर्दोऽत्यर्थं गर्जति तद्वदित्यर्थः । यश्च इराम् । अन्ननामैतत् । हविर्लक्षणमन्नम् । उ ह इत्येतौ पादपूरणौ । प्रशंसति प्रकर्षेण स्तौति । अनिरामिरारहितां हविर्लक्षणान्नवर्जितामित्यर्थः । काम् । सामर्थ्यात् स्तुतिम् । अवसेधत । अत्र लकारपुरुषवचनव्यत्ययः । अवसेधति निवारयति हविः । प्रदानशून्यां शुद्धस्तुतिं न शृणोतीत्यर्थः । तं स्तुमो यजामश्चेति वाक्यशेषः । अथवा वावदीतीति दृष्टान्तभूतभ्रमरवृषभयोः समानाधिकरणं, न तु दार्ष्टान्तिकस्येन्द्रस्य । यथातथाशब्दाध्याहारेण च योजना । यथा अरङ्गरो मधुमत्तो वावदीति अत्यर्थं गायति, यथा च वरत्रया अनेकप्रकारं बद्धो वृषभो वाशितां दृष्ट्वात्यर्थं गर्जति, तथायम् इन्द्र इरामुह प्रशंसतीत्यादिश्लिष्टपदयोजना सदृशी । मणिकेऽपि यथासम्भवं योजयितव्यो मन्त्रः । यत्तच्छब्दाध्याहाराद् विशिष्टं तं प्रतिष्ठापयामीति वाक्यशेषः ॥

अथास्मिन्नप आसेचयति 'ऐतु राजे'ति ।

ऐतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः ।
इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्तु ॥

वामदेवार्षा त्रिष्टुप् । वरुणो देवता, आपो वा उभयं वा । ऐतु आगच्छतु । राजा अपां स्वामी वरुणः । न च केवलः । किन्तर्हि । रेवतीभिः । रेवतीशब्देनात्राप उच्यन्ते । 'एमा अग्मन् रेवतीर्जीवधन्या' इति यथा । सहयोगलक्षणा चैषा तृतीया । धनवतीभिरद्भिः सह । एत्य च अस्मिन् स्थाने मणिकाख्ये तिष्ठतु मोदमानः हृष्यन् । उत्तरेणार्धर्चेनापः प्रार्थ्यन्ते । इराम् । अन्ननामैतत् । अन्नम् । वहन्तः । वहेर्धातोश्शत्रन्तात् पुंसि द्वितीया-

१. 'थाशब्दोऽथा' घ. ङ. पाठः.

बहुवचनान्तं षष्ठ्येकवचनान्तं वा पञ्चम्येकवचनान्तं वैतत् पदम् । इह तु व्यत्ययेन स्त्रीलिङ्गप्रथमाबहुवचनान्तं द्रष्टव्यम् । वहन्त्यः धारयन्त्य इत्यर्थः । घृतम् । उदकनामैतत् । उदकं स्वावयवभूतं विन्दुलक्षणम् । उक्षमाणाः सिञ्चन्त्यः । मित्रेण । मित्रशब्देनात्र वरुण उच्यते क्रियायोगात् । कृत्स्नं जगदुदकेन मेदयति स्नेहयतीति । किमर्थमत्रे न रूढ्या व्यवहारः क्रियते । बरुणस्यापामीशितृत्वात् । तथा च मन्त्रवर्णः 'वरुणोऽपामधिपतिरि'ति । श्रूयते 'आपो वै वरुणस्य पत्न्य आसन्नि'ति । वरुणेन । साकं सह । उभयमप्येतन्निपातद्वयं साहित्यार्थम् । अत्र पौनरुक्त्यपरिहारार्थमेकस्य पादपूरणार्थत्वं द्रष्टव्यम् । 'अथवा अभ्यासे भूयांसमर्थं मन्यन्त' इत्यर्थभूयस्त्वाभिप्रायं वेदितव्यम् । संविशन्तु अस्मिन् मणिके यावदुपयोगं शेरतामित्यर्थः ॥

अथैनच्छमयति व्रीहियवमतीभिरद्भिः । हिरण्यमवधाय शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षत्यविच्छिन्नया चोदकधारया 'आपो हि ष्ठा मयोभुव' इति तृचेन । शन्तातीयापोहिष्ठीयौ व्याख्यातौ । मध्येऽगारस्य स्थालीपाकं श्रपयित्वा 'वास्तोष्पते प्रतिजानीह्यस्मान्' इति चतसृभिः प्रत्यृचं हुत्वा ॥

वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः ।

यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥

(अष्ट० ५. अध्या० ४. व० २१ ऋ० १.)

वसिष्ठो मैत्रावरुणिः ऋषिः । तिस्रस्त्रिष्टुभः । चतुर्थी गायत्री । चतसृणां वास्तोष्पतिर्देवता । हे वास्तोष्पते! अस्मान् प्रतिजानीहि प्रतिबुध्यस्व । एते मदीयाः स्तोतारो यष्टारश्चेत्येवमस्माननुगृहाणेत्यर्थः । किञ्च । स्वावेशः सु आवेशः सूपसर्पणः । समीप एव स्थित्वा परिचरितुं योग्य इत्यभिप्रायः । अनमीवश्च । अमीवा रोगजातिः तद्रहितोऽनमीवः । रोगाणां नाशकरश्चेत्यर्थः । नः अस्माकं भव एधि । किञ्च । यद् वयं त्वा त्वां प्रति ईमहे याचामहे, तत् काम्यमानं वस्तु नः अस्मान् जुषस्व । जुषिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । जोषय । सेवयेत्यर्थः किञ्च । शं भव । भवतिरत्रान्तर्णीतण्यर्थः । भावय उत्पादयेत्यर्थः । नः अस्माकं स्वभूताय द्विपदे मनुष्यप्राणिने शं भव ।

---

१. 'ति क्लेदयतीति' ख. पाठः.    २. 'न्न रूढ्यपहारः' घ. ङ. पाठः.

चतुष्पदे गवादिप्राणिने च सुखमुत्पादयेत्यर्थः । द्विपदे चतुष्पद इति जात्यभिप्रायमेकवचनम् । द्विपाद्भ्यश्चतुष्पाद्भ्यश्चेत्यर्थः ॥

वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिन्दो ।
अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ।

(अष्ट० ५. अध्या० ४. व० २१. ऋ० २.)

वास्तोष्पते प्रतरणः । हे वास्तोष्पते ! प्रतरणः प्रकर्षेण तारयिता । सर्वापद्भ्य इति शेषः । नः अस्माकम् । एधि भव । किञ्च गयस्फानः । गयशब्दो गृहवचनः । 'स्फायी ओ प्यायी वृद्धौ' । गृहस्य वर्धयिता । तात्स्थ्यादत्र ताच्छब्द्यं मञ्चक्रोशनवत् । अस्मद्गृहगतानां प्राणिनां वर्धयितेत्यर्थः । एधीत्यनुषङ्गः । गोभिः अश्वेभिः अश्वैश्च । अस्मान् संयोजयेति वाक्यशेषः । अथवा गोभिरश्वेभिरिति करणे तृतीया । गयस्फान इत्यनेन चानयोः सम्बन्धः । गोभिरश्वेभिर्गयस्फान एधीति । हे इन्दो ! । वास्तोष्पतिविशेषणमेतत् । इन्धेर्दीप्त्यर्थस्योन्दतेर्वा क्लेदनार्थस्य सम्बुद्धावेतद्रूपम् । स्वदीप्त्या दीप्त ! वृष्ट्युदकेन क्लेदयितर्वेत्यर्थः । किञ्च अजरासः जरावर्जिताः । स्याम भवामेत्याशास्महे । ते तव स्वभूते सख्ये सखिभावे । सख्यं चात्र स्तुत्यस्तोतृत्वयष्टव्ययष्टृत्वलक्षणः सम्बन्धः । सप्तमीनिर्देशाद् वर्तमानान् इति शेषः । एतज्ज्ञात्वा त्वमपि नः अस्मान् प्रतिजुषस्व । प्रतिरत्र धात्वर्थानुवादी लम्बते प्रलम्बते इति यथा । सेवस्व प्रीणय वा । किमिव । पितेव पुत्रान् । यथा पिता पुत्रानिष्टान् इष्टप्रदानादिना सेवते प्रीणयति वा तद्वत् अस्माकमिष्टप्रदो भवेत्यभिप्रायः ॥

वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ।
पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥

(अष्ट० ५. अध्या० ४. व० २१. ऋ० ३.)

वास्तोष्पते शग्मया । हे वास्तोष्पते ! शग्मया । सुखनामैतत् । सुखया सुखकार्ययेत्यर्थः । संसदा । सदिर्गत्यर्थः । सङ्गत्या सङ्गमनेन । ते तव स्वभूतया रण्वया रमयित्र्या रमणीयया । गातुमत्या । गम्यतेऽनेनेति गातुः मार्गः तद्वत्या यज्ञागमनमार्गयुक्तयेत्यर्थः । अथवा गत्यर्थत्वाद् गातुशब्देन ज्ञानमिहाभिप्रेतम् । ज्ञानयुक्तया बुद्धिपूर्वयेत्यर्थः । बुद्धिपूर्वमागतेन त्वया सङ्गत्येत्यर्थः । सक्षीमहि ।

'षच सेवायाम्' । सेवेमहि । स्तुतिभिर्हविर्भिस्त्वां स्तुमो यजामश्चेत्यर्थः । एतद् ज्ञात्वा नः अस्मान् पाहि रक्ष । क्षेमे । लब्धस्य परिपालनं क्षेमः । तृतीयार्थे सप्तमी । क्षेमेण लब्धपरिपालनेन । उत अपि । योगे । अलब्धस्य लाभो योगः । अत्रापि तृतीयार्थे सप्तमी । योगेनालब्धलाभेनेत्यर्थः । एतदुक्तं भवति — यदस्माभिः प्राप्तं धनादि तत् परिपालय । अन्यद् यच्च प्राप्तव्यं तच्च प्रापय । नः अस्मान् पाहीति । वरं श्रेष्ठमुत्कृष्टमसम्बाधमित्यर्थः । किं तत् । सामर्थ्याद् गृहम् । तच्च पाहीत्यनुषङ्गः । अथवा न इति षष्ठयन्तं, न द्वितीयान्तम्[1] । अस्माकं वरं गृहं योगक्षेमाभ्यां पाहीति । उत्तरः पादो वैश्वदेवः । अतो भिन्नम् । हे देवाः! यूयं सर्वे नः अस्मान् पात रक्षत स्वस्तिभिः अविनाशिभिरुपायैः सदा । अथवा सूक्तस्य वास्तोष्पतित्वाविशेषाद् देवानाममाधान्यम् । तस्मिन् पक्षे वास्तोष्पतेः प्रसादाद् यूयमस्मान् पातेति योज्यम् । अथवा चतुर्थोऽपि पादो वास्तोष्पत्य एव । तस्मिन् पक्षे वचनव्यत्ययः कार्यः । त्वं पाहि स्वस्तिभिः सदेति । अस्मिन् पक्षे पाहीति पुनर्वचनं स्वस्तिभिः सदेति गुणविधानार्थत्वाददोषः ॥

अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् । सखासुशेवएधिनः ॥

(अष्ट० ५. अध्या० ४. व० २२. ऋ० १.

अमीवहा वास्तोष्पते । अमीवा हिंसिता सर्पादिः रोगो वा । तस्य हन्ता अमीवहा । 'बहुलं छन्दसि' इति क्विप् । नाशयिता । एधीत्युत्तरस्मिन्नर्धर्चे श्रूयमाणमिहापकृष्टव्यम् अमीवहा भवेति । विश्वा विश्वानि सर्वाणि रूपाणि यैरसौ हन्यते नकुलबिडालादिरूपैरोषधिरूपैर्वा तानि । आविशन् प्रतिपद्यमानः तत्तद्रूपी भवन्नित्यर्थः । सखा सुशेवः सुसुखः कल्याणसुखकरश्चेत्यर्थः । एधि भव नः अस्माकम् ॥

ब्राह्मणान् भोजयित्वा 'शिवं वास्तु शिवं वास्त्व'ति वाचयीत ।

शिवं वास्तु शिवं वास्तु ॥

वामदेवार्षं यजुः । गृहमभिधेयम् । शिवम् । सुखनामैतत् । सुखकरमित्यर्थः । वास्तु । वसन्त्यस्मिन् प्राणिन इति वास्तुशब्देन गृहमभिप्रेतम् । अस्त्विति शेषः । अभ्यास आदरार्थः । तथाच भगवता यास्केनोक्तम् — 'अभ्यासे भूयांसमर्थं मन्यन्ते यथा अहो दर्शनीया अहो दर्शनीये'ति ॥

---

१. 'न् । अविद्यमानः प्र' ग. पाठः.

उक्तं गृहप्रपदनम् । बीजवतो गृहान् प्रपद्येत ।

येन मन्त्रेण प्रपद्यते गृहान् तत् प्रपदनमिति करणव्युत्पत्त्या प्रपदनशब्देन मन्त्रोऽभिधीयते । तदुक्तमिति । प्रवासोपस्थानान्ते प्रपद्येत 'गृहानहं सुमनसः प्रपद्ये' इति, तदिहापि कर्तव्यमित्यर्थः । 'गृहानहं सुमनसः प्रपद्ये' इत्यनयर्चा गृहान् प्रपद्येत । एषा ऋक् 'प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपती'त्यत्रैव व्याख्याता ॥

क्षेत्रस्यानुवातं 'क्षेत्रस्य पतिना वयमि'ति प्रत्यृचं जुहुयात् जपेद्वा ।

क्षेत्रस्यपतिनावयंहितेनेवजयामसि ।

गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० १.)

इदं सूक्तमष्टर्चं वामदेवार्षम् । प्रथमानुष्टुप् । द्वितीयातृतीये त्रिष्टुभौ । चतुर्थ्यनुष्टुप् । पञ्चमी उष्णिक् । षष्ठीसप्तम्यौ अनुष्टुभौ । अष्टमी त्रिष्टुप् । आद्यास्तिस्रः क्षैत्रपत्यः । चतुर्थी शुनदेवत्या । पञ्चम्याः शुनासीरौ देवता । षष्ठीसप्तम्यौ सीतादेवत्ये । अष्टम्याः शुनासीरौ देवता । क्षेत्रस्य पतिना । क्षियतेर्निवासार्थस्य हेतौ त्रप्रत्यये क्षेत्रं भवति । तस्य पाता पालयिता क्षेत्रस्य पतिः । तेनात्र चतुर्थे पादे आ इत्युपसर्गश्रुतेर्भरेति मध्यमपुरुषैकवचनान्तं क्रियापदमध्याहर्त्रा भाष्यकारेण भगवता यास्केन 'प्रत्यक्षकृतोऽयं मन्त्र' इति प्रदर्शितम् । अत्र एकवाक्यतायै त्वया क्षेत्रस्य पतिना सहानुगृह्यमाणा इति वाक्यशेषाध्याहारः कर्तव्यः । वयं हितेनेव । यथा हितेन केनचिन्मित्रेण कश्चित् शत्रून् जयेत् एवं जयामसि जयेम शत्रूनित्याशास्महे । किञ्च गामश्वम् । जातावेकवचनम् । गाश्चाश्वांश्चेत्यर्थः । पोषयित्नु । पोषयतेः कर्म तद्धेतुत्वे इत्नुच् । पोषकर्मसामर्थ्यात् स्वयं च पुष्टमस्माकं च पोषयितृ इत्यर्थः । आभरेति शेषः । सः स च भवान् नः अस्मान् मृळाति मृळतिरुपदार्थः । उपदा च रक्षा । पूजार्थो वा मृळतिः । आशिषि लोडर्थे पञ्चमो लकारः । रक्षतु । केन । सामर्थ्यात् स्वेन बलेन । पूजयतु वा धनप्रदानेन । ईदृशे । तादर्थ्यचतुर्थ्यन्तमेतत् । ईदृशाय । ईदृशं कामं प्रापयितुमित्यर्थः । अथवा परोक्षकृतोऽयं मन्त्रः, मृळातीति प्रथमपुरुषयोगात् । एवं च योजना कार्या—चतुर्थे पादे स न इति तच्छब्दश्रुतेः प्रथमे पादे क्षेत्रस्य पतिना समानाधि-

१. 'हरता' घ. ङ. पाठः,

करणः तृतीयान्तो यच्छब्दोऽध्याहार्यः। येन क्षेत्रस्य पतिना। तृतीयानिर्देशादनुगृह्यमाणा इति शेषः। वयम्। किंविशिष्टेन। हितेन हितकरेण बन्धुभूतेनेव। इवशब्दस्योपमार्थीयत्वात् अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग इति पादपूरणः। जयामसि जयामः। किम्। गामश्वं गाश्चाश्वांश्च। अन्यदपि पोषयित्नु स्वयं पुष्टं पोषयितृ च। किं तत्। सामर्थ्याद् गजमहिषादि। आकारः पादपूरणार्थः। सः क्षेत्रस्य पतिः नः अस्मान् मृळाति। 'मृल सुखने'। लोडर्थे पञ्चमो लकारः। सुखयत्वित्यर्थः। ईदृशे एतादृशे। कस्मिन्। सामर्थ्यात् कर्मणि। सप्तमीनिर्देशाद् वर्तमानानिति वाक्यशेषः। एतदुक्तं भवति — येन क्षेत्रस्य पतिनानुगृह्यमाणाः सन्तो वयं गवादि प्राप्नुमः स इदानीं स्वदेवत्ये कर्मणि वर्तमानानभिलषितार्थप्रदानेनास्मान् सुखयत्विति॥

क्षेत्रस्यपतेमधुमन्तमूर्मिंधेनुरिवपयोअस्मासुधुक्ष्व।

मधुश्चुतंघृतमिवसुपूतमृतस्यनःपतयोमृळयन्तु॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० २.)

क्षेत्रस्य पते। हे क्षेत्रस्य पते!। मधुमन्तम्। मध्वित्युदकनाम। भूम्नि चायं मतुप्। बहुनोदकेन युक्तम्। रसवचनो वा मधुशब्दः। मधुस्वादुयुक्तम्। ऊर्मिम् उदकसङ्घातम्। धेनुरिव पयः। यथा धेनुः क्षीरं क्षारयते तद्वत्। अस्मासु। निमित्ते एषा सप्तमी। 'चर्मणि द्वीपिनम्' इतिवत्। अस्मदर्थमित्यर्थः। धुक्ष्व। कम्। सामर्थ्यान्मेघम्। द्विकर्मको हि दुहिः। कीदृशं मेघम्। मधुश्चुतम्। श्चुतिः क्षरणे। मधुस्वादस्योदकस्य क्षरितारम् ऊर्मिम्। कीदृशम्। घृतमिव। याज्ञे कर्मणि सुपूतं पवित्रं निर्मलं चेत्यभिप्रायः। किञ्च य एते त्वदनुचरा माध्यमिका देवगणा मरुदादयः ते च त्वदनुग्रहात् ऋतस्योदकस्य अपां पतयः पालयितारः नः अस्मान् मृळयन्तु। अस्मभ्यं सुखं ददत्वित्यर्थः॥

मधुमतीरोषधीर्द्यावआपोमधुमन्नोभवत्वन्तरिक्षम्।

क्षेत्रस्यपतिर्मधुमान्नोअस्त्वरिष्यन्तोअन्वेनंचरेम॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० ३.)

मधुमतीः । प्रथमार्थे द्वितीयैषा । मधुमत्यः मधुरसाः मधुस्वादूपेता इत्यर्थः । ओषधीः । इयमपि द्वितीया प्रथमार्थे । ओषधयो व्रीह्याद्याः । उत्तरत्र श्रूयमाणो भवतिरिहापकृष्टव्यः न इति च । भवन्तु अस्माकम् । किञ्च द्यावः एकस्या एव पूजनार्थे बहुवचनम् । द्यौः । बहुवचनसामर्थ्याद्वा द्युव्यक्तिबहुत्वं प्रतीमः । यथा वसिष्ठेनोक्तं — 'तिस्रो द्यावो निहिता अन्तरस्मिन्'ति । मधुमत्यो भवन्त्वस्माकमित्यनुषङ्गः । आपः वृष्टिलक्षणाश्चापोऽस्माकं मधुमत्यो भवन्तु । मधुमत् नः अस्माकं भवतु अन्तरिक्षम् । किञ्च क्षेत्रस्य पतिर्मधुमान् नः अस्माकम् अस्तु भवतु । वयं च क्षेत्रस्य पतेः प्रसादात् अरिष्यन्तः । 'रुष रिष हिंसायाम्' । कर्मणि चायं व्यत्ययेन कर्तृप्रत्ययः । अहिंस्यमानाः केनापीत्यर्थः । एनं क्षेत्रस्य पतिमनुचरेम । व्यत्ययेनायमनुः परेरर्थे । स्तुतिभिर्हविर्भिश्चैनं परिचरेमेत्याशास्महे इत्यर्थः । अस्यैव प्राधान्यं वेदितव्यम् । ओषध्यादयस्तु निपातभाजः । तथा च भगवता यास्केनोक्तं — 'विशः क्षेत्रपत्याः' इति । अतः क्षेत्रस्य पतेः प्रसादादिति वाक्यशेषेण भवितव्यम् ॥

शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।

शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० ४.)

शुनं वाहाः । अनिरुक्तेयं प्रत्यक्षकृता च । उदिङ्गयेति मध्यमपुरुषयोगात् । शुनमिति सुखनाम । क्रियाविशेषणं चैतत् । वाहाः बलीवर्दाः । अत्र यथासामर्थ्यं क्रियापदमध्याहार्यम् । सामर्थ्यादेव युगशब्दश्च द्वितीयान्तोऽध्याहार्यः । सुखं युगं वहन्तु वाहाः । शुनं सुखं नरः मनुष्याः कर्षकाः । कर्षन्त्विति शेषः । शुनं कृषतु विलिखतु । भूमिमिति शेषः । लाङ्गलं हलम् । शुनं सुखं वरत्राः चर्ममय्यो रज्जवः बध्यन्तां युगादिभिः सह नद्धा भवन्त्वित्यर्थः । शुनं सुखम् अष्ट्राम् । अष्ट्राशब्देनारावचनेनात्र तीक्ष्णलाङ्गलाग्रमुच्यते । हे शुन ! उदिङ्गय । इङ्गिरित्यर्थः । उदित्येषोऽवेत्येतस्य स्थाने । अवेङ्गय भूमेरधः प्रवेशयेत्यर्थः । अपरेऽत्र श्रूयमाणं शुनपदं देवतापदं मन्यन्ते । तस्मिन् पक्षे विभक्तिव्यत्ययेन भाव्यम् । एवं च योजना — शुनो वाहान् वाहयतु । शुनो नृन् कर्षयतु । शुनो लाङ्गलं विलेखयतु । शुनो वरत्राः बध्नातु बन्धयतु वा । अथवा शुनेन वरत्रा बध्यन्तामिति । शुनोऽष्ट्रामुदिङ्गयतु ॥

१. 'शौनकेनोक्तम्' घ. पाठः.

शुनासीराविमांवाचंजुषेथांयद्दिविचक्रथुःपयः ।
तेनेमामुपसिञ्चतम् ॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० ५.)

शुनासीरौ । हे शुनासीरौ ! वाय्वादित्यौ ! । इमां मयोच्चार्यमाणां स्तुतिलक्षणां वाचं जुषेथां सेवेथां शृणुतमित्यर्थः । जुषित्वा च यत् पयः । उदकनामैतत् । वृष्टिलक्षणमुदकम् । दिवि । द्युग्रहणमन्तरिक्षस्योपलक्षणार्थम् । दिव्यन्तरिक्षे च । चक्रथुः कृतवन्तौ स्थः । स्वमण्डले मेघोदरेषु विस्तारितवन्तावित्यर्थः । तेन पयसा इमां पृथिवीमुपासिञ्चतम् उपगम्य सिञ्चतम् । महत्या वृष्ट्या पृथिवीं क्लेदयतमित्यर्थः ॥

अर्वाचीसुभगेभवसीतेवन्दामहेत्वा ।
यथानःसुभगाससियथानःसुफलाससि ॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० ६.)

अर्वाची सुभगे । हे सीते ! । सीताशब्दो लाङ्गलपर्यायः । तस्याः सम्बोधनम् । अर्वाची अस्मदभिमुखी भव । सुभगे ! सुधने ! शोभनस्य धनस्य हेतुभूते इत्यर्थः । वयं च वन्दामहे । वदिरत्र स्तुत्यर्थः । त्वा त्वाम् । कथं स्तूयत इति । उच्यते । यथा येन प्रकारेण स्तुता सती नः अस्माकं सुभगा शोभनस्य भगस्य व्रीह्यादेर्धनस्य प्रापिका । अससि भवसि । यथा नः अस्माकं सुफला । फलशब्देनात्र धनजन्यं सुखमभिप्रेयते । धनप्राप्तिद्वारेण कल्याणसुखजननीत्यर्थः । अससि भवसि तथा वन्दामहे इति सम्बन्धः ॥

इन्द्रःसीतांनिगृह्णातुतांपूषानुयच्छतु ।
सानःपयस्वतीदुहामुत्तरामुत्तरांसमाम् ॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० ७.)

इन्द्रः सीताम् । इन्द्रः सीतां लाङ्गलं निगृह्णातु न्यग् गृह्णातु भूमेरधः प्रवेशयत्वित्यर्थः । तां सीतां पूषा आदित्यः देवतान्तरं वा अनुयच्छतु । अन्वित्येष उदित्येतस्य स्थाने । कृषिव्यापारे उद्यच्छतु व्यापारयत्वित्यर्थः ।

सा च सीता नः अस्माकम् । पयस्वती । पयःशब्देन अत्र कृषिजन्यं व्रीहियवाद्यन्नमभिप्रेतम् । तद्वती । व्रीहियवाद्यन्नस्योत्पादिकेत्यर्थः । दुहां दुग्धां पूरयतु । केन । सामर्थ्याद् व्रीहियवाद्यन्नाद्येन । किं सकृदेव । न । किं तर्हि । उत्तरामुत्तरां समाम् । समाशब्दः संवत्सरपर्यायः । 'कालाध्वनोरत्यन्तसंयोगे —'(२-३-५) इति द्वितीया । उत्तरस्मिन्नुत्तरस्मिन् संवत्सरे । यावज्जीवं सातत्येनेत्यर्थः । अथवा पयस्वतीशब्दो धेनुवचनो लुप्तोपमश्च । यथा पयस्वती दध्याज्यादिभिः गोमिनः पूरयति तद्वत् । अस्यामृचि पूर्वस्मिन्नर्धर्चे इन्द्रापूषणौ नैपातिकौ, सीतादेवतात्वस्य शौनकादिभिरुक्तत्वात् ॥

शुनं॑ नः॒ फाला॒ वि कृ॑षन्तु॒ भूमिं॑ शु॒नं की॒नाशा॑ अ॒भि य॑न्तु वा॒हैः ।

शु॒नं प॒र्जन्यो॒ मधु॑ना॒ पयो॑भिः॒ शुना॑सीरा शु॒नम॒स्मासु॑ धत्तम् ॥

(अष्ट० ३. अध्या० ८. व० ९. ऋ० ८.)

शुनं नः । शुनं सुखम् । नः । तादर्थ्यचतुर्थ्यन्तमेतद् । अस्मदर्थम् । फालाः । फालशब्दो लाङ्गलाग्रवचनः । लाङ्गलाग्राणि । विकृषन्तु । विशब्दो वैविध्ये । कृषिर्विलेखार्थः । विविधं नानाप्रकारं लिखन्तु । भूमिम् अस्मत्क्षेत्रलक्षणाम् । शुनं सुखं कीनाशाः कर्षकाः अभियन्तु आभिमुख्येन गच्छन्तु । इतस्ततः परिभ्रमन्त्वित्यर्थः । वाहैः सहयोगलक्षणैषा तृतीया । बलीवर्दैः सह । बलीवर्दान् युगधूर्षु नियुज्येत्यर्थः । शुनं सुखं पर्जन्यो देवः । मधुना पयोभिः । उभे अप्येते उदकनामनी । पौनरुक्त्यपरिहारार्थं विशेषणविशेष्यत्वम् । पयोभिरिति बहुवचनमेकवचनस्य स्थाने द्रष्टव्यम् । मधुनेत्यनेन सामानाधिकरण्यात् । मधुना पयसा मध्वास्वादेनोदकेन वृष्टिलक्षणेन । साकाङ्क्षत्वादस्मान् तर्पयत्विति शेषः । उत्तरः पादः प्रत्यक्षकृतः, धत्तमिति मध्यमपुरुषयोगात् । शुनासीरा शुनासीरौ । 'सुपां सुलुक् —' (७-१-३९) इत्यादिनामन्त्रितप्रथमाद्विवचनस्यायमाकारः । हे शुनासीरौ ! । वाय्वादित्यौ । कुत एतत् । यास्कवचनात् । 'शुनासीरौ शुनो वायुः सीर आदित्योऽन्तरिक्षे सरणादि'ति । शुनं सुखं अस्मासु धत्तम् । दधातिर्धारणार्थः । धारयतमस्मासु । अस्यामृचि शुनासीरावेव प्रधानाविति केचित् । तस्मिन् पक्षे फालादयो निपातभाजः । अपरे फालादीनां सर्वेषां देवतात्वं वदन्ति ॥

१. 'यन्नाद्यम', २. 'यन्नाद्यस्यो' ख. ग. पाठः.

गाः प्रतिष्ठमाना अनुमन्त्रयेत 'मयोभूर्वातो अभिवातूस्रा' इति द्वाभ्याम् ।

मयोभूर्वातोऽअभिवातूस्राऊर्जस्वतीरोषधीराऽरिशन्ताम् ।

पीवस्वतीर्जीवधन्याःपिबन्त्ववसायपद्वतेरुद्रमृळ ।

(अष्ट० ८. अध्या० ८. व० २७. ऋ० १.)

श्वभरः काक्षीवतः ऋषिः । त्रिष्टुभौ । गावो देवता । मयोभूः । सुखस्य भावयिता । वातः वायुः उस्रा अभिवातु । उस्रेति गोनाम । अभिः प्रतिना समानार्थः । अस्मदीया गाः प्रतिगच्छतु सुखयत्वित्यर्थः । ता अपि वातेन सुख्यमानाः ऊर्जस्वतीः रसवतीः ओषधीः व्रीह्याद्याः आरिशन्ताम् । रिशतिर्हिंसार्थः । आङर्वागर्थे अर्वागाकृष्य दन्तैर्हिंसन्तु । भक्षयन्त्वित्यर्थः । किञ्च पीवस्वतीः । पीवा बलं तद्वतीः बलसम्पादिकाः । जीवधन्याः । धिनोतिः प्रीणनार्थः । जीवानां प्रीणयित्रीः । कास्ताः । सामर्थ्याद् अपः । पिबन्तु । हे रुद्र ! अवसाय पद्वते । अवसमिति पथ्यादनमुच्यते । गावश्च पथ्यादनमुच्यन्ते तत्प्रभवस्य पयसोऽग्रमानत्वात् । पथ्यादनाय पद्वते पादवते गोलक्षणाय मृळ मृडय सुखय सुखो भव । अवसाय पद्वत इति द्वितीयार्थे वा चतुर्थी । अवसं पद्वत् सुखयेति । अस्यामृचि पद्वत्या देवतात्वं वेदितव्यं, न रुद्रस्य । कुत एतत् । यास्कवचनात्—'अथात्र प्रत्यक्षकृता हि स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि' इति । 'माचिदन्यद् विशंसत', 'कण्वम् अभिप्रगायते'ति । यथा अनयोर्मन्त्रयोः प्रत्यक्षभूतानामपि सखीनां कण्वानां चादेवतात्वम्, इन्द्रस्य मरुतां परोक्षभूतानामेव देवतात्वम्, एवमत्रापि प्रत्यक्षकृतस्य रुद्रस्यादेवतात्वं परोक्षभूतानां गवामेव देवतात्वमवगन्तव्यम् । अयं न्यायः सर्वत्रैवम्प्रकारेषु मन्त्रेषु द्रष्टव्यः ॥

याःसरूपाविरूपाएकरूपायासामग्निरिष्ट्यानामानिवेद ।

याअङ्गिरसस्तपसेहचक्रुस्ताभ्यःपर्जन्यमहिशर्मयच्छ ॥

(अष्ट० ८. अध्या० ८. व० २७. ऋ० २.)

---

१. 'य' ख. ग. पाठः. २. 'दा' ङ. पाठः.

याः सरूपाः । या गावः सरूपाः समानरूपाः । जातेरैक्यात् समानरूपत्वम् । विरूपाः विविधरूपाः । शौक्ल्यादिवर्णनानात्वाद् विविधरूपत्वम् । एकरूपाः । वाहनदोहनादिफलस्यैकरूपत्वादैकरूप्यम् । यासां च गवां नामानि भव्ये इळे काम्ये चन्द्रे इत्येवमादीनि इष्ट्या इष्ट्यानि इष्टौ भवानि यज्ञसम्बन्धीनि कर्माङ्गभूतानीत्यर्थः । अग्निर्वेद । या गाः अङ्गिरसो ऋषयः तपसा महता चक्रुः सृष्टवन्तः । (इह) यज्ञे वा कर्माङ्गभावाय चक्रुः कृतवन्तः । ताभ्यो गोभ्यः हे पर्जन्य! महि महत् शर्म सुखं यच्छ देहि । वृष्ट्या यवसोदकं कुर्वन् ॥

गव्यूतेरायतीर्गा अनुमन्त्रयेत — 'यासामूधश्चतुर्बिलमि'त्यनया ।

यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च ।
ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः ॥

वामदेवार्षानुष्टुप् गोदेवत्या । यासां गवामूधः पयःस्थानं चतुर्बिलं चतुस्तनम् । मधोः मधुरसस्य क्षीरस्य पूर्णं घृतस्य च पूर्णं ता गावः पयस्वतीः । भूम्नि चायं मतुप् । पयस्वत्यः बहुक्षीरा इत्यर्थः । बह्वीर्बह्व्यश्च । घृताच्यः । घृतमाज्यम् । 'अञ्चु गतिपूजनयोः' । घृतेन स्वकीयेन पूज्याः बहुघृताश्चेत्यर्थः । नः गोष्ठे गोशालायां सन्तु भवन्तु । अस्माकं गोष्ठमित्थंभूतानां गवां परिपूर्णं सदा भवेदित्यर्थः ॥

'या देवेषु तन्वमैरयन्ते'ति च सूक्तशेषम् । आयतीनामनुमन्त्रणे प्रयुञ्जीतेति वाक्यशेषः ।

यादेवेषुतन्व१मैरयन्तयासांसोमोविश्वारूपाणिवेद ।

ताअस्मभ्यंपयसापिन्वमानाःप्रजावतीरिन्द्रगोष्ठेरिरीहि ।

(अष्ट० ८. अध्या० ८. व० २७. ऋ० ३.)

शबरः काक्षीवतः ऋषिः । त्रिष्टुभौ । गावो देवता । या गावः देवेषु अग्न्यादिषु तन्वं शरीरमात्मीयम् ऐरयन्त । ईरयतिर्गतिकर्मा । ईरयन्ति गमयन्ति । किमुक्तं भवति । या गाव आत्मीयां तनुं हृदयाद्यवदानरूपेण हविष्ट्वमापादयन्ति । अग्न्यादिदेवानां सवनीयादिषु पशुष्वङ्गभावं प्रतिपद्यन्ते इत्यर्थः । अथवा पयोदधिघृतादिरूपेण देवानां प्रीतिं कुर्वन्तीत्यर्थः । यासां गवां सोमः विश्वा विश्वानि सर्वाणि रूपाणि आकारान् वेद जानाति ।

कुत एतत्। 'सोम ओषधीनामधिपतिरि'ति मन्त्रवर्णात्, 'ओषध्यात्मा पशुरि'ति श्रुतिलिङ्गाच्च। ता गावः पयसा क्षीरेण (पिन्वमानाः) बहुक्षीरत्वात् भूमिं सिञ्चतीः प्रजावतीः जीवदपत्याः हे इन्द्र! गोष्ठे। स्थिता इति शेषः। अस्मभ्यं रिरीहि। (री)याच्ञाकर्मा। याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते अस्मभ्यमिति सम्प्रदानचतुर्थीश्रुतेः। देहीत्यर्थः॥

प्रजापतिर्मह्यमेतारराणोविश्वैर्देवैःपितृभिःसंविदानः।
शिवाःसतीरुपनोगोष्ठमाकस्तासांवयंप्रजयासंसदेम॥

(अष्ट० ८. अध्या० ८. व० २७. ऋ० ४.)

प्रजापतिः प्रजानां पाता हिरण्यगर्भः मह्यमेता गा रराणः ददत्। विश्वैर्देवैः पितृभिश्च सह संविदानः। सम्प्रतिपद्यमान इत्यर्थः। प्रजापतेर्गवां दानं सर्वे देवाः पितरश्चानुमन्यन्तामित्यभिप्रायः। किंविशिष्टाः। शिवाः सतीः प्रभूतक्षीरादिदानेन सुखा भवन्तीः नः गोष्ठं गोशालाम्। उप आ अकः। उपशब्दः समीपवचनः। गोष्ठसमीपे गोष्ठ इत्यर्थः। आ अकः आकृष्य करोतु। प्रतिष्ठापयत्वित्यर्थः। तासां तासां च प्रजापतिदत्तानां गोष्ठे प्रतिष्ठापितानां गवां प्रजया पुत्रपौत्रादिलक्षणया वयं संसदेम सङ्गच्छेम संयुज्येमहीत्यर्थः॥

'आगावीयमे'के। एके आचार्या गव्यूतेरायतीनां गवामनुमन्त्रणे साधनं मन्यन्ते।

आगावोअग्मन्नुतभद्रमक्रन्त्सीदन्तुगोष्ठेरणयन्त्वस्मे।
प्रजावतीःपुरुरूपाइहस्युरिन्द्रायपूर्वीरुषसोदुहानाः॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० १.)

आगाव इत्येतत् सूक्तमष्टर्चं गोदेवत्यं भरद्वाजो बार्हस्पत्यो ददर्श। प्रथमा त्रिष्टुप्। द्वितीयाद्यास्तिस्रो जगत्यः। पञ्चम्याद्यास्तिस्रस्त्रिष्टुभः। अष्टम्यनुष्टुप्। आ गावः। आ इत्यस्य अग्मन्नित्याख्यातेन सम्बन्धः। गावः आग्मन्। लकारव्यत्ययः। आगच्छन्तु। गोष्ठं प्रतीति वाक्यशेषः। उत अपि भद्रं कल्याणं शोभनं गोष्ठमक्रन् कुर्वन्तु। सीदन्तु उपविशन्तु। गोष्ठे उपविश्य च रणयन्तु शब्दयन्तु रमयन्तु वा गोष्ठे अस्मे अस्माकम्। किञ्च

प्रजावतीः प्रजावत्यः बह्वपत्या इत्यर्थः । पुरुरूपाः बहुरूपाश्च इहास्मद्गृहे स्युर्भवेयुः । इन्द्राय इन्द्रार्थं पूर्वीरुषसः । सप्तम्यर्थे द्वितीया । पूर्वासूषस्सु । एकस्यामेव पूजार्थे बहुवचनम् । प्रथमायामुषसि उदयवेलायामित्यर्थः । दुहानाः । व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः । दुह्यमानाः । इन्द्रशब्दश्चात्र परमैश्वर्ययोगात् प्रातरग्निहोत्रदेवतां सूर्यमाह, नेन्द्रं, तदर्थस्य दोहनस्योषा उदयवेलायामसम्भवात् । इन्द्रार्थो हि सान्नाय्यदोहः । स चान्यस्मिन् काले, नोषा उदयवेलायाम् ॥

इन्द्रो॒ यज्व॑ने पृण॒ते च॑ शिक्ष॒त्युपेद्द॑दाति॒ न स्वं मु॑षायति ।
भूयो॑भूयो र॒यिमिद॑स्य व॒र्धय॒न्नभि॑न्ने खि॒ल्ये नि द॑धाति देव॒युम् ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० २.)

इन्द्रो यज्वने । इन्द्रः यज्वने यष्ट्रे पृणते ददते च । शिक्षतिर्दानकर्मा । लोडर्थे लट् । शिक्षतु ददात्वित्यर्थः । किम् । सामर्थ्याद् गाः । न च क्लेशयन् । किं तर्हि । उपेद् ददाति । इत् पादपूरणः । उपेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । लट् च लोडर्थे । उपगम्य ददात्वित्यर्थः । न च स्वमात्मानं मुषायति मोषयति मोषयतु । यष्टुर्दातुश्च यावदभिलषितं ददात्वित्यर्थः । अथवा स्वं धनं न मुषायति यष्टुर्दातुश्च धनं नापहरतीत्यर्थः । किं कुर्वन् । भूयो भूयः पुनः पुनश्च रयिं गोलक्षणं धनम् । इदिति पादपूरणः । अस्य यष्टुर्दातुश्च वर्धयन् शिक्षतीति सम्बन्धः । किञ्च शरीरपातोत्तरकालं देवयुं देवकामं यष्टारं दातारं च अभिन्ने अविदारिते अनिभृते अन्येनाभुक्तपूर्व इत्यर्थः । खिल्ये । खिल एव खिल्यः स्वार्थिकस्तद्धितः । खिले । खिलशब्दः स्वर्गवचनः । कथं कृत्वा । कमिति सुखनाम । तद्वन्तः किनः सुखिनः लीयन्तेऽस्मिन्निति किलः सन् ककारस्य खकारापत्त्या खिलो भवति । तस्मिन् खिले । सुखिभिः स्वर्गिभिः लीने स्वर्गप्रदेश इत्यर्थः । निदधाति निदधातु स्थापयतु । अस्यामृचि यद्यपि गोशब्दो न पठितः, तथापि यज्वने पृणते च शिक्षतीत्यत्र देयविशेषस्याश्रणात् प्रकरणसामर्थ्याद् गा एव देयाः स्युः । एवं चेत् तासामेव प्राधान्यमवगन्तव्यं, नेन्द्रस्य । कुत एतत् । कृत्स्नस्य सूक्तस्य गवामनुमन्त्रणे विनियोगात् ॥

---

१. 'न इंद' घ. ङ. पाठः.

नतानशन्तिनदभातितस्करोनासामामित्रोव्यथिरादधर्षति ।

देवाँश्चयाभिर्यजतेददातिचज्योगित्ताभिःसचतेगोपतिःसह ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ३.)

न ता नशन्ति । ता गावः न नशन्ति । छान्दसो विकरणाभावः । न नश्यन्तीत्यर्थः । न दभाति हिनस्ति हरतीत्यर्थः । तस्करः । नापि आसां गवामामित्रः । अमित्राः शत्रवः । तत्सम्बन्धी आमित्रः । अमित्रप्रभव इत्यर्थः । व्यथिः । क्रोधनामैतत् । क्रोधः । आदधर्षति धर्षणं करोति । शत्रवोऽप्याभ्यो न क्रुध्यन्तीत्यर्थः । किञ्च देवांश्च याभिर्गोभिर्यजते, ददाति च या ब्राह्मणेभ्यः, ताभिर्गोभिः ज्योक् चिरात् सचते । व्यत्ययेनायं कर्मणि शप् । सच्यते सेव्यते गोपतिः गोस्वामी सन् सह सहभूत एव अपृथक्कृत एवेत्यर्थः । अथवा सचत इति कर्तर्येव शप् । ताभिः सह चिरं कालं सेवते । किम् । सामर्थ्याद् देवान् । चिरं कालं देवान् यजत इत्यर्थः ॥

नताअर्वारेणुककाटोअश्नुतेनसंस्कृतत्रमुपयन्तिताअभि ।

उरुगायमभयंतस्यताअनुगावोमर्तस्यविचरन्तियज्वनः ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ४.)

न ता अर्वा । ता गावः । अर्वा । अर्तेर्गत्यर्थस्येदं रूपम् । नाश्वः । गन्ता शीघ्रगतिरित्यर्थः । रेणुककाटः । कोऽयं रेणुककाटः । मरुभूमिप्रदेशे गोखादः सर्पजातिविशेषः कोऽपि । स नाश्नुते न व्याप्नोति न खादतीत्यर्थः । अथवा अर्वाञ्चो रेणवः पांसव एव ककाटः । 'कटे आवरणे' इत्यस्य यङ्लुगन्तस्य[3] रूपम् । शत्रूणां योऽश्वः दूरागतत्वात् पांसुभिरपावृतः आच्छादितः स रेणुककाटः । स नाप्नोति । शत्रवोऽपि दूरादश्वैरागत्य नापघ्नन्तीत्यर्थः । नापि संस्कृतत्रम् । संस्कृत्य गोमांसं भक्षयन् तेनात्मानं त्रायते संस्कृतत्रः, तम् । उपयन्ति उपगच्छन्ति ता गावः अभि आभिमुख्येन । गोमांसखादिनापि न खाद्यन्ते इत्यर्थः । किञ्च उरुगायं बहुगतिं नानाप्रकारमित्यर्थः । अभयं तस्य मर्तस्य मनुष्यस्य यज्वनः यष्टुः स्वभूताः ता गावः अनुविचरन्ति आनुपूर्व्येण विविधं गच्छन्ति प्राप्नुवन्तीत्यर्थः ॥

---

१. 'व्थी अमित्रप्रभव' ष. ङ. पाठः. २. 'लं य' ख. ग. पाठः. ३. 'यङन्तस्य' ष. पाठः.

गावोभगोगावइन्द्रोमेअच्छान्गावःसोमस्यप्रथमस्यभक्षः ।
इमायागावःसजनासइन्द्रइच्छामीद्धृदामनसाचिदिन्द्रम् ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ५.)

गावो भगः । गावः भगः । कः । धनम् । किमन्यैर्धनैरित्यभिप्रायः । गावः । द्वितीयार्थे प्रथमैषा । गाः । इन्द्रः मे मम स्वभूताः । अच्छान् । अच्छ इत्यस्य कान्तिकर्मण एतद् रूपम् । कामयतां सान्नाय्यार्थमित्यर्थः । गावः सोमस्य प्रथमस्य सर्वत उत्कृष्टस्य भक्षः । भक्ष्यतेऽनेनेति भक्षः भक्षसाधनमन्नम् । पयआदि(क्लिष्टा ? निष्पा)दनद्वारेण भक्षसाधनभूता इत्यर्थः । इमा या गावः सः इन्द्रः इमा या गावः ता एवेन्द्र इत्यर्थः । हे जनासः! मनुष्याः! । गवां प्रत्यासत्तिरिन्द्रं प्रत्येतेन आख्यायते । यथा लोके यो देवदत्तः स एव राजेति । एवं चेद् योऽहं गा इच्छामि सः । इदिति पादपूरणः । हृदा मनसा । चित् । चिच्छब्दोऽत्र चार्थे । हृदयेन मनसा च इन्द्रं प्रार्थये इति । चिरन्तनो मनोरथो[1] हृदयमुच्यते । ईदानीन्तनो मनः । तेनानयोर्न पौनरुक्त्यम् । हृदा मनसा इति हेतौ तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । चिरन्तनस्य मनोरथस्याधुनातनस्य च प्राप्त्यर्थमिन्द्रमिच्छामि प्रार्थये इति । अथवा मनःशब्दो मन इत्यस्य क्रियाशब्दो हृदयस्यैव विशेषणम् । मन्त्रज्ञात्रा हृदयेनेति । अस्मिन् पक्षे करण एव तृतीया । चिच्छब्दस्तु पादपूरणः ॥

यूयंगावोमेदयथाकृशंचिदश्रीरंचित्कृणुथासुप्रतीकम् ।
भद्रंगृहंकृणुथभद्रवाचोबृहद्वोवयउच्यतेसभासु ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ६.)

यूयं गावः । हे गावः! यूयं मेदयथ मेदस्विनं बलवन्तं कुरुत । कृशं चित् कृशमपि दुर्बलमपीत्यर्थः । अश्रीरं चित् । रो मत्वर्थे । अश्रीमन्तमपि विरूपमपीत्यर्थः । कृणुथ कुरुथ सुप्रतीकं सुदर्शनं सुरूपमित्यर्थः । किञ्च भद्रं कल्याणं गृहं वेश्म कृणुथ । हे भद्रवाचः! कल्याणशब्दाः! गावः! बृहत् महच्च सारतः, वः युष्माकं स्वभूतं वयः अन्नं क्षीरदध्यादिलक्षणम् उच्यते कीर्त्यते सभासु जनसंसत्सु ॥

१. 'थः इयाद्धृद' घ. पाठः. २. 'त' ख. घ. पाठः.

नतानंशन्तिनदंभातितस्करोनासांमामित्रोव्यथिरादंधर्षति ।

देवाँश्चयाभिर्यजंतेददातिचज्योगित्ताभिःसचतेगोपंतिःसह ॥

(अष्ट० ४, अध्या० ६. व० २५, ऋ० ३.)

न ता नशन्ति । ता गावः न नशन्ति । छान्दसो विकरणाभावः । न नश्यन्तीत्यर्थः । न दभाति हिनस्ति हरतीत्यर्थः । तस्करः । नापि आसां गवामामित्रः । अमित्राः शत्रवः । तत्सम्बन्धी आमित्रः । अमित्रप्रभव इत्यर्थः । व्यथिः । क्रोधनामैतत् । क्रोधः । आदधर्षति धर्षणं करोति । शत्रवोऽप्याभ्यो न क्रुध्यन्तीत्यर्थः । किञ्च देवांश्च याभिर्गोभिर्यजते, ददाति च या ब्राह्मणेभ्यः, ताभिर्गोभिः ज्योक् चिरात् सचते । व्यत्ययेनायं कर्मणि शप् । सच्यते सेव्यते गोपतिः गोस्वामी सन् सह सहभूत एव अपृथक्कृत एवेत्यर्थः । अथवा सचत इति कर्तर्येव शप् । ताभिः सह चिरं कालं सेवते । किम् । सामर्थ्याद् देवान् । चिरं कालं देवान् यजत इत्यर्थः ॥

नताअर्वारेणुकंकाटोअश्नुतेनसंस्कृतत्रमुपंयन्तिताअभि ।

उरुगायमभंयंतस्यताअनुगावोमर्तस्यविचंरन्तियज्वनः ॥

(अष्ट० ४, अध्या० ६. व० २५. ऋ० ४.)

न ता अर्वा । ता गावः । अर्वा । अर्तेर्गत्यर्थस्येदं रूपम् । नाश्वः । गन्ता शीघ्रगतिरित्यर्थः । रेणुककाटः । कोऽयं रेणुककाटः । मरुभूमिप्रदेशे गोखादः सर्पजातिविशेषः कोऽपि । स नाश्नुते न व्याप्नोति न खादतीत्यर्थः । अथवा अर्वाञ्चो रेणवः पांसव एव ककाटः । 'कटे आवरणे' इत्यस्य यङ्लुगन्तस्य रूपम् । शत्रूणां योऽश्वः दूरागतत्वात् पांसुभिरपावृतः आच्छादितः स रेणुककाटः । स नाप्नोति । शत्रवोऽपि दूरादश्वैरागत्य नापघ्नन्तीत्यर्थः । नापि संस्कृतत्रम् । संस्कृत्य गोमांसं भक्षयन् तेनात्मानं त्रायते संस्कृतत्रः, तम् । उपयन्ति उपगच्छन्ति ता गावः अभि आभिमुख्येन । गोमांसखादिनापि न खाद्यन्ते इत्यर्थः । किञ्च उरुगायं बहुगतिं नानाप्रकारमित्यर्थः । अभयं तस्य मर्तस्य मनुष्यस्य यज्वनः यष्टुः स्वभूताः ता गावः अनुविचरन्ति आनुपूर्व्येण विविधं गच्छन्ति प्राप्नुवन्तीत्यर्थः ॥

---

१. 'न्धी अमित्रप्रभव' घ. ङ. पाठः. २. 'लं य' ख. ग. पाठः. ३. 'यङन्तस्य' घ. पाठः.

गावोभगोगावइन्द्रोमेअच्छान्गावःसोमस्यप्रथमस्यभक्षः ।
इमायागावःसजनासइन्द्रइच्छामीद्धृदामनसाचिदिन्द्रम् ॥

(अष्ट० ४, अध्या० ६, व० २५, ऋ० ५.)

गावो भगः । गावः भगः । कः । धनम् । किमन्यैर्धनैरित्यभिप्रायः । गावः । द्वितीयार्थे प्रथमैषा । गाः । इन्द्रः मे मम स्वभूताः । अच्छान् । अच्छ इत्यस्य कान्तिकर्मण एतद् रूपम् । कामयतां सान्नाय्यार्थमित्यर्थः । गावः सोमस्य प्रथमस्य सर्वत उत्कृष्टस्य भक्षः । भक्ष्यतेऽनेनेति भक्षः भक्षसाधनमन्नम् । पयआदि(क्लिष्टा ? निष्पा)दनद्वारेण भक्षसाधनभूता इत्यर्थः । इमा या गावः सः इन्द्रः इमा या गावः ता एवेन्द्र इत्यर्थः । हे जनासः! मनुष्याः! । गवां प्रत्यासत्तिरिन्द्रं प्रत्येतेन आख्यायते । यथा लोके यो देवदत्तः स एव राजेति । एवं चेद् योऽहं गा इच्छामि सः । इदिति पादपूरणः । हृदा मनसा । चित् । चिच्छब्दोऽत्र चार्थे । हृदयेन मनसा च इन्द्रं प्रार्थये इति । चिरन्तनो मनोरथो[1] हृदयमुच्यते । ईदानीन्तनो मनः । तेनानयोर्न पौनरुक्त्यम् । हृदा मनसा इति हेतौ तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । चिरन्तनस्य मनोरथस्याधुनातनस्य च प्राप्त्यर्थमिन्द्रमिच्छामि प्रार्थय इति । अथवा मनःशब्दो मन इत्यस्य क्रियाशब्दो हृदयस्यैव विशेषणम् । मन्त्रज्ञात्रा हृदयेनेति । अस्मिन् पक्षे करण एव तृतीया । चिच्छब्दस्तु पादपूरणः ॥

यूयंगावोमेदयथाकृशंचिदश्रीरञ्चित्कृणुथासुप्रतीकम् ।
भद्रंगृहंकृणुथभद्रवाचोबृहद्वोवयउच्यतेसभासु ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ६.)

यूयं गावः । हे गावः ! यूयं मेदयथ मेदस्विनं बलवन्तं कुरुत । कृशं चित् कृशमपि दुर्बलमपीत्यर्थः । अश्रीरं चित् । रो मत्वर्थे । अश्रीमन्तमपि विरूपमपीत्यर्थः । कृणुथ कुरुथ सुप्रतीकं सुदर्शनं सुरूपमित्यर्थः । किञ्च भद्रं कल्याणं गृहं वेश्म कृणुथ । हे भद्रवाचः! कल्याणशब्दाः! गावः! बृहत् महच्च सारतः, वः युष्माकं स्वभूतं वयः अन्नं क्षीरदध्यादिलक्षणम् उच्यते कीर्त्यते सभासु जनसंसत्सु ॥

१. 'थः इयाद्धृद' घ. पाठः. २. 'त' ख. घ. पाठः.

प्रजावतीः सूयवसंरिशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ७.)

प्रजावतीः । प्रजावतीरित्याद्या द्वितीयाः षष्ठ्यर्थे वेदितव्याः । प्रजातीनामविच्छिन्नप्रजासन्तानानां सुयवसं शोभनं यवसं तृणादिभक्षम् । रिशन्तीः रिशन्तीनां हिंसन्तीनामास्वादयन्तीनामित्यर्थः । शुद्धाः अकल्मषाः अपः उदकानि । सुप्रपाणे । सुखं प्रपीयते यत्र तत् सुप्रपाणं, तत्र तीर्थे । पिबन्तीः पिबन्तीनाम् । वः युष्माकं स्तेनः चोरो मा ईशत मा ईशिष्ट मा स्वामितां गच्छन्तु । मा च अघशंसः अघं पापं मरणादि तस्य शंसिता प्रार्थयिता । ईशतेत्यनुवर्तितव्यम् । किञ्च वः युष्माकं हेतिरायुधं हिंसा वा तत्कार्या रुद्रस्य स्वभूता परिवृज्याः । व्यत्ययेन मध्यमः प्रथमस्य स्थाने । परिव्रज्यात् परिवर्जयेत् । रुद्रोऽपि युष्मान् मा हिंसीदित्यर्थः ॥

उपेदमुपपर्चनमासु गोषूप पृच्यताम् ।
उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥

(अष्ट० ४. अध्या० ६. व० २५. ऋ० ८.)

उपेदम् । उपशब्दोऽत्र समित्यस्य स्थाने । इदमुपपर्चनम् । खलतुषककंटकादीनि सम्पृच्यन्ते अस्मिन् तदुपपर्चनं गोभक्तम् । आसु गोषु । तृतीयार्थे सप्तमीयम् । आभिर्गोभिः । उपपृच्यताम् । उपेत्येतत् समित्यस्य स्थाने । उपसर्गाभ्यासादाख्यातस्याभ्यासः । अभ्यासाच्चार्थभूयस्त्वम् । सम्पृच्यतां, भक्षितं सद् रसादिभावेन सम्यक् परिणम्य शरीरेष्वासां व्यवतिष्ठतामित्यर्थः । न च केवलाभिर्गोभिः । किं तर्हि । उप ऋषभस्य । तृतीयार्थेऽत्र षष्ठी । ऋषभेणापि सम्पृच्यताम् । किमर्थमुच्यते । रेतसि । निमित्त एषा सप्तमी । फलभूतस्य रेतसो निमित्तत्वम् । रेतसि निमित्ते, रेतोनिर्वृत्त्यर्थमित्यर्थः । अथवा उपपर्चनं क्षीरादिरुच्यते । आसु गोषु यत् क्षीरादि तत् सम्पृच्यताम् । केन सह । सामर्थ्यादस्माभिः । क्षीरं प्रभूतं गोपा अस्मदर्थं क्षरन्त्वित्यर्थः । उप ऋषभस्य रेतसि । प्रथमार्थे सप्तमीयम् । ऋषभस्य यद्रेतः तच्च सम्पृच्यताम् । केन

सह । सामर्थ्याद् गोभिः । गर्भिण्यो भवन्तु च गाव इत्यर्थः । हे इन्द्र ! तव तृतीयार्थ एषा षष्ठी । त्वया सम्पृच्यताम् । किं तत् । सामर्थ्याद् आसां गवां पयः । श्रपणादिसाधनभावापत्त्या आसां पयः सोमेन सह त्वदुदरं प्रविशे-दित्यर्थः । किमर्थम् । वीर्ये । वीर्यार्थमित्यर्थः ॥

गणानामासुपतिष्ठेत 'भूताः स्थे'ति ।

**भूताः स्थ प्रशस्ताः स्थ शोभनाः प्रियाः प्रियो भूयासं शं मयि जानीध्वं शं मयि जानीध्वम् ॥**

वामदेवार्षा उष्णिग्वा यजुर्वा । गावोऽभिधेयाः । हे गावः ! भूताः । प्रशब्द-लोपो द्रष्टव्यः । प्रभूता बह्व्यः इत्यर्थः । स्थ लोडर्थे लट् । स्थ भवतेत्यर्थः । प्रशस्ताः प्रशंसनीयाश्च बहुक्षीरत्वादिगुणेन । स्थ भवत । शोभनाः क-ल्याण्यः प्रिया इष्टाः सर्वस्य[1] गृहजनस्य । भवतेत्यनुषङ्गः । अहमपि वो युष्माकं प्रिय इष्टः । घासपानीयप्रदानादिना तर्पयेयमित्यर्थः[2] । भूयासं भवेयमित्या-शासे । यत एवम्, अतो यूयमपि मयि शं सुखं जानीध्वम् । जानातिरत्र शुद्धोऽपि अनुपूर्वो द्रष्टव्यः । अनुजानीत । पयोदधिघृतादिप्रदानद्वारेण मह्यं सुखं प्रयच्छतेत्यर्थः ॥

इति गृह्यमन्त्रव्याख्यायां द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

ब्रह्मयज्ञे प्रणवव्याहृतिसावित्र्यो गताः । परिधानीया —

**नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यो नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि ।**

इति । नमो ब्रह्मणे । ब्रह्मा चतुर्मुखो ब्रह्म वा परमात्मा । अग्न्यादयः प्रसिद्धाः । ओषधीष्वधिष्ठात्र्यो देवताः । विष्णवे महते । बृहते आकार-प्रभावाभ्याम् ॥

तर्पणमन्त्रा निगदसिद्धाः । 'भूतान्येवमन्तानी'त्ययं मन्त्रो न भवतीति गृह्यव्याख्याने वयमवोचाम । 'गार्गी वाचक्नवी'त्येको मन्त्रः ॥

---

१. 'स्य भ' ख. ग. पाठः.   २. 'यितेत्यर्थः' ख. पाठः.

अथ प्राचीनावीती पितृतीर्थेन सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यन्तु । जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डूकेयास्तृप्यन्तु । गर्गी वाचक्नवी तृप्यतु । बडवा प्रातिथेयी तृप्यतु । सुलभा मैत्रेयी तृप्यतु ॥

गर्गीति गोत्रव्यपदेशः । वाचक्नवीत्यपत्यान्तो व्यपदेशः । वचक्नोरपत्यम् । एवं तावद् वाजसनेयिनामुपनिषदि पाठः । इह त्वन्यथा पठन्ति. गर्गिवाचक्नवीति । बडवा प्रातिथेयीति । प्रतिथिशब्दः शुभ्रादिषु द्रष्टव्यः । सुलभा मैत्रेयीति । मित्रयुशब्दः शुभ्रादिः । गार्ग्यादयो ब्राह्मणादिष्वुपनिषत्सु प्रसिद्धाः ॥

उपाकरणे आज्याहुतिषु सावित्र्यादयो नव निगतसिद्धाः । दधिसक्तून् जुहोति 'अग्निमीळे'त्यादिभिर्मण्डलायन्तर्भूतैर्विंशद्भिर्मन्त्रैः ।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥

(अष्ट० १. अध्या० १. व० १. ऋ० १.)

अग्निमहमीळे । 'ईड स्तुतौ' । प्रातिशाख्यवशेन ळकारः । स्तुवे । पुरोहितं पूर्वस्यां दिश्याहवनीयात्मना निहितम् । यज्ञस्य देवम् । दिविरैश्वर्यकर्मा । ईश्वरम् । न केवलं देवमेव यज्ञस्य । किन्तर्हि । ऋत्विजम् । कतमम् । होतारम् । 'अग्निर्वै देवानां होता' । तदधिष्ठितो मानुषो होता प्रवर्तते । रत्नधातमम् अतिशयेन रत्नादीनां दातारम् ॥

कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः ।
वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥

(अष्ट० १. अध्या० ५. व० १६. ऋ० १६.)

कुषुम्भकः । अगस्त्यस्य विषदष्टस्यार्षम् । कुषुम्भक इत्यादित्याभिधानं मन्यते । व्युत्पत्तिस्तु 'कुषुभ क्षेपे' इति कण्ड्वादिषु पठ्यते । तमांसि कुषुम्यति क्षिपतीति कुषुम्भकः । यगन्ताद् ण्वुल् । मकारश्छान्दसः उपजनः । गिरेरुदयगिरेः प्रवर्तमानकः । स्वार्थे कः । प्रवर्तमानः उद्यन् । एवम्भूतः कुषु-

म्भकः तदब्रवीत् । किं तत् । वृश्चिकस्य विषकीटस्य विषम् अरसं निर्वीर्यमिति । अतश्च हे वृश्चिक! ते विषम् अरसं निर्वीर्यमकिञ्चित्करं भवत्विति ॥

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥

(अष्ट० २ अध्या० ५. व० १७. ऋ० १.)

त्वमग्ने! द्युभिः । गृत्समदस्यार्षम् । हे अग्ने! त्वं द्युभिरित्थंभूतः । त्वमेवाशुशुक्षणिः आशुशुचा दीप्त्या क्षणिता हिंसिता तमसाम् । त्वमेव चाद्भ्यो जायसे वैद्युतात्मना । त्वमेवाश्मनस्परि । परिः पञ्चम्यर्थानुवादी । अश्मान्तरेण घृष्यमाणादश्मनोऽपि त्वं जायसे । सजातीयोऽपदिश्यते । योऽश्मनोरन्तरग्निः जायमानः स त्वमेव वनेभ्योऽपि जायसे दावरूपेण । त्वमेव चौषधीभ्यः शरवंशादिभ्यो जायसे । एवं त्वं ततस्ततो जायसे । नृणां नृपते! । नृणां पत इत्येतावानेवार्थः । शुचिर्दीप्तः ॥

आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।
यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥

(अष्ट० २. अध्या० ८. व० १२. ऋ० ३.)

आवदंस्त्वम् । गृत्समदेन स्तुत इन्द्रस्तस्मै कामान् दत्त्वा तं पथि गच्छन्तं शकुनिर्भूत्वा न्यषेधत् । पुनरपि तत्स्तुतीः शुश्रूषमाणं तमिन्द्रं गृत्समदो वदति—हे शकुने! आवदन् आभिमुख्येन वदन् त्वं भद्रं कल्याणमावद । तूष्णीं निश्शब्द आसीनो नोऽस्माकमुपरि सुमतिं शोभनां मतिम् अनुग्रहात्मिकां बुद्धिं चिकिद्धि । 'कित ज्ञाने' । इह तु ज्ञानपूर्वके करोत्यर्थे द्रष्टव्यः । ज्ञात्वा कुरु । अथवा नः अस्माकं सुमतिं शोभनां स्तुतिं तूष्णीमासीनः चिकिद्धि जानीहि । यद् यस्त्वं वदसि कर्करिर्यथा । कर्करिति शब्दस्य कर्ता कर्कराख्यः पक्षी । स यथा वदति तथा यस्त्वमुत्पतन् वदसि स आवदन् भद्रमावदेति सम्बन्धः । वयं च ते प्रसादाद् विदथे यज्ञे बृहत् महार्थं स्तोत्रं शस्त्रं च सुवीराः सुपुत्रा भूत्वा वदेम वदितुं लभेमहि ॥

सोमस्यमातवसंवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ।

देवाँअच्छादीद्यद्युञ्जेअद्रिंशमायेअग्नेतन्वंजुषस्व ॥

(अष्ट० २. अध्या० ८. व० १३. ऋ० १.)

सोमस्य मा । वैश्वामित्री । हे अग्ने! त्वं मा मां सोमस्य सोमयागस्य तवसं वृद्धिं वक्षि वह प्रापय । यथा मे सोमयागवृद्धिर्भवति तथा कुरु । वह्निं हविषां वोढारम् आहवनीयादिकमग्निं चकर्थ । लोडर्थे[2] लिट् । कुरु॰। देवतारूपोऽग्निः प्रार्थ्यते यस्य व्यष्टयोऽन्येऽग्नयः । यस्यैवं भवति । 'वया इदग्नेऽग्नयस्ते अन्ये' इति । वयाः शाखाः । विदथे यज्ञे यजध्यै यष्टुं याग-निर्वृत्तये । विदथे वह्निं कुरु । अहं च दीद्यद् दीप्यमानो भूत्वा देवान् अच्छ । अच्छेत्यभेरर्थे । देवानभि उद्दिश्य । अद्रिम् अभिषवग्रावाणं युञ्जे । लोडर्थे लट् । युनजै अभिषवे व्यापारयाणि । हे अग्ने! त्वं च शमाये शं सुखम् ईयते प्राप्यते येन तत्र यज्ञे तन्वं त्वदीयां तनुं जुषस्व । अन्तर्भावितण्यर्थः । जोषय अस्माभिर्दत्तैर्हविर्भिः प्रीणय ॥

गृणानाजमदग्निनायोनावृतस्यसीदतम् ।

पातंसोममृतावृधा ॥

(अष्ट० ३. अध्या० ४. व० ११. ऋ० १८.)

गृणाना । जमदग्नेरार्षम् । जमदग्निना मया गृणाना । व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः । गीर्यमाणौ स्तूयमानौ युवां हे मित्रावरुणौ ! । ऋतस्य योनौ यज्ञस्य स्थाने वेद्याख्ये सीदतमुपविशतम् । उपविश्य च सोमं पातं पिबतं हे ऋतावृधा ! ऋतस्य सत्यस्य वृष्ट्युदकस्य यज्ञस्य वा वर्धयितारौ ! ॥

त्वांह्यग्नेसदमित्समन्यवोदेवासोदेवमरतिंन्येरिरइतिक्रत्वान्येरिरे ।

अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंविश्वमादेवंजनतप्रचेतसम् ॥

(अष्ट० ३ अध्या० ४. व० १२. ऋ० १.)

त्वां ह्यग्ने! । वामदेवार्षम् । हे अग्ने! सदमित् सदैव देवासः देवाः । समन्यवः । मन्युरिति क्रोधनाम । इह तु चित्त[3]विकारत्वसाम्यादभिनिवेशे

१. 'सि' क. पाठः. २. 'षा' ख. पाठः. ३. 'वि', ४. 'सामान्याद' ङ. पाठः

द्रष्टव्यः । साभिनिवेशाः तात्पर्यवन्तो भूत्वा । देवमरतिम् । 'ऋ गतौ' । हविर्गृहीत्वा देवान् प्रति गन्तारं त्वां न्येरिरे निश्चयेनेरितवन्तः प्रवर्तितवन्तः । हिः प्रसिद्धौ । एवमेतत् प्रसिद्धं—'विश्वेदेवाः शास्तनमायथेहे'त्यादौ । इतिः प्रकारे । उक्तप्रकारेण । क्रत्वा क्रतुना कर्मणा हविर्वहनलक्षणेन न्येरिरे । के । देवाः । एवं क्रत्वेति विशेषणविवक्षायां पुनर्वचनम् । सर्वत्रैवमेव दृश्यते पारुच्छेपे (?)। मनुष्याश्चेति शेषः । देवाश्च मनुष्याश्च त्वामेव हव्यवाहं चक्रिर इति । वीतहव्योऽप्याह — 'त्वां दूतमग्ने ! अमृतं युगे युगे हव्यवाहं दधिरे वायुमीड्यं देवासश्च मर्तासश्च जागृविमि'ति । त्वं च हे यजत! यष्टव्य! मर्त्येषु मध्ये देवम् । दीव्यतिरत्र दानकर्मा । हविषां दातारं यजमानम् । अमर्त्यममरणधर्माणम् आदेवं आगतदेवत्वं देवत्वं प्राप्तं च आजनत । 'जन जनने' । अन्तर्भावितण्यर्थः । लोट् । मध्यमपुरुषैकवचनव्यत्ययः । आजनय अमर्त्यमादेवं चाभिमुख्येन कुरु । प्रचेतसं प्रकृष्टज्ञानं चाजनत । न चैकमेव केवलम् । किन्तर्हि । विश्वमादेवं जनत प्रचेतसम् । विश्वमिति विशेषणविवक्षायां पुनर्वचनम् ॥

धामन्तेविश्वंभुवनमधिश्रितमन्तःसमुद्रेहृद्य१न्तरायुषि ।

अपामनीकेसमिथेयआभृतस्तमश्यामम मधुमन्तंतऊर्मिम् ॥

(अष्ट० ३. अध्या० ८. व० ११. ऋ० ११.)

धामन्ते । वामदेवार्षम् । अनिरुक्ता सौरी । हे सूर्य! ते तव धामन् धामनि स्थाने मण्डलाख्ये । विश्वं भुवनम् उदकनामैतत् । उदकम् । अधिः सप्तम्यर्थानुवादी । रश्मिभिराहृत्य स्थापितं श्रितं भवति । तथान्तः समुद्रे । समुद्रमित्यन्तरिक्षनाम । अन्तरिक्षस्य मध्ये रश्मिभिर्मेघेषु विसृष्टं श्रितं भवति । आयुषि । आयवो मनुष्याः । तस्यैव सकार उपजनः । षष्ठ्यर्थे सप्तमी । जातावेकवचनम् । आयूनां मनुष्याणाम् । हृदि हृदयसमीपवर्तिनि उदरेऽन्तः श्रितम् । मेघैर्विसृष्टं मनुष्यैः पानीयादिरूपेणोपयुक्तं तत्र श्रितं भवति । एवमेषोदकस्य गतिस्त्वदायत्ता । वयं च त्वत्प्रसादात् तासामपामनीके समूहे । समिथे । सङ्ग्रामनामैतत् । तत्सदृशे सङ्कुले । य ऊर्मिस्तरङ्ग आभृतः तं मधुमन्तं मधुस्वादुयुक्तं ते उक्तेन मकारेण तव स्वभूतम् अश्याम अश्नवामहै प्राप्नुयाम ॥

१. 'त्वा ग' क. पाठः. २. 'श्च गागविम्' ख. पाठः. ३. 'मि' ङ. पाठः.

अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासम् ।
यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥
(अष्ट० ३. अध्या० ८. व० १२. ऋ० १.)

अबोध्यग्निः । बुधगविष्ठिरावृषी । अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । योऽग्निरबोधि बोध्यते उद्दीप्यते समिधा पालाश्या आहुतिधारणार्थया । जनानाम् । विभक्तिव्यत्ययः । जनैरग्निहोत्रिभिः । कदा । आयतीमुषासं प्रति उषस्युदितायाम् । धेनुमिव यथा धेनुमायतीं प्रति वत्सो बोध्यते तद्वत् । तस्याग्नेर्भानवो रश्मयः नाकमच्छ स्वर्गं प्रति सिस्रते प्रसरन्ति । प्रशब्दस्य पादपूरणे द्विर्वचनम् । अत्र दृष्टान्तः — यह्वा उज्जिहाना वयामिव । यह्वा इति महन्नाम । उज्जिहाना इति पक्षिनाम । 'ओहाङ् गतौ' । उज्जिहते उत्पतन्तीति । वयेति शाखाभिधानम् । यथा वृक्षस्योच्चां शाखां महान्तः पक्षिणः प्रसरन्ति प्रसर्पन्ति तद्वत् ॥

गन्तानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएवयामरुत् ।
ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदः ॥
(अष्ट० ४. अध्या० ४. व० ३४. ऋ० ९.)

गन्ता नः । एवयामरुदृषिः । मारुती । हे यज्ञियाः ! यागार्हा मरुतः ! नोऽस्माकं यज्ञं गन्त । केवलोऽपि गमिराङ्पूर्वस्यार्थे द्रष्टव्यः । आगन्त आगच्छत । सुशमि । शमीति कर्मनाम । क्रियाविशेषणमिदम् । शोभनं गतिकर्म यथा भवति तथा आगन्त । आगत्य च श्रोत श्रृणुत हवं स्तुतिम् अरक्षः एवयामरुत् । उभयत्रापि षष्ठ्या लुक् । युष्माभिरेव यज्ञादपनीतरक्षस एवयामरुतो मम यज्ञमागन्तेति । एवयामरुदहमरक्षो रक्षारहितः । अतश्चागन्तेति वा । किञ्च ज्येष्ठासो न पर्वतासः यथातिशयेन वृद्धा हिमवदादयः पर्वता दुर्धराः व्योमनि व्योम्नि एवं यूयं तस्य । हृदये वर्तमानस्य शत्रोरयं निर्देशः । तस्य मम शत्रोः । प्रचेतसः प्रकृष्टज्ञानस्य मद्बाधोपायज्ञस्य । दुर्धर्तवो दुर्धराः स्यात भवत निदः निन्दितुः । मम शत्रुमाक्रम्य तस्य पर्वतवद् दुर्धरा भूत्वा तं मारयतेति ॥

त्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ।
त्वंसींवृषन्नकृणोर्दुष्टरीतुसहोविश्वस्मैसहसेसहध्यै ॥
(अष्ट० ४, अध्या० ४. व० ३५. ऋ० १.)

त्वं ह्यग्ने । भरद्वाजस्यार्षम् । 'अग्निर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतानि' इति ब्राह्मणम् । ओतानीति 'वेञ् तन्तुसन्तान' इत्यस्याङ्पूर्वस्य रूपम् । देवानां मनांसि यस्मिन्नाभिमुख्येन सन्ततानि, यः सन्ततं मनसा देवैर्हविरानयनार्थिभिर्ध्यातः स मनोता । मनश्शब्दस्य टिलोपश्छान्दसः स्त्रीत्वं च । हे अग्ने! मनोतारूपस्त्वम् अस्या धियोऽस्य कमर्णः श्रौतस्मार्तलक्षणस्य प्रथमो होता अभवः त्वयाधिष्ठितस्तु मानुषो होता प्रवर्तते । हे दस्म! दर्शनीय! तमसां वोपक्षपयितः! । त्वं सीम् । सींशब्द एवार्थे । त्वमेव च । हे वृषन्! वर्षितः! 'अग्नौ प्रास्ताहुतिरि'ति न्यायेन । अकृणोः करोषि । दुष्टरीतु दुष्टरं दुरभिभवं सहः बलं विश्वस्मै सहसे । षष्ठ्यर्थे चतुर्थी । सहश्शब्दे च मतुपो लुग् द्रष्टव्यः । सर्वस्य सहस्वतो बलवतो रक्षःप्रभृतेः सहध्यै अभिभवाय ॥

योनःस्वोअरणोयश्चनिष्ट्योजिघांसति ।
देवास्तंसर्वेधूर्वन्तुब्रह्मवर्ममान्तरम् ॥

(अष्ट० ५. अध्या० १. व० २२. ऋ० १९.)

यो नः स्वः । भरद्वाजस्यैव । यः पुरुषो नोऽस्मान् स्वः स्वभूतो ज्ञात्यादिः अरणः अस्मास्वरममाणोऽप्रीयमाणः, यश्च निष्ट्यः स्वेभ्यो निर्गतः परं जिघांसति, तं स्वं च परं च तं सर्वे देवाः धूर्वन्तु हिंसन्तु । मम तु ब्रह्म मन्त्रः वर्म तनुत्राणम् अन्तरं व्यवधायकं भवतु । ब्रह्मरूपेण वर्मणा वेष्टितं मां शत्रवो मा हिंसिषुः ॥

अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयन्तप्रशस्तम् ।
दूरेदृशंगृहपतिमथर्युम् ॥

(अष्ट० ५. अध्या० १. व० २३. ऋ० १.)

अग्निं नरः । वासिष्ठी । नरो मनुष्या ऋत्विजः । दीधितिरित्यङ्गुलिनाम । ताभिर्दीधितिभिः । अरण्योः । विभक्तिव्यत्ययः । अरणिभ्याम् । हस्तच्युती । तृतीयैकवचनस्य पूर्वसवर्णः । हस्तच्युत्या हस्तयोर्गत्या गतागतरूपेण व्यापारेण अरणिभ्यामृत्विजः प्रशस्तमग्निं जनयन्ति । किञ्च दूरेदृशमाहवनीयम् । स हि गार्हपत्याद् दूरे दृश्यते । गृहपतिं गार्हपत्यम् । अथर्युं दक्षिणाग्निम् । दृश्यते

च — 'अथर्यंति दक्षिणाग्नौ प्रवत्स्यदुपस्थाने दक्षिणमथर्यं पितुं मे पाही'ति । अथर्यतिः कण्ड्वादियगन्तः ॥

प्रतिचक्ष्वविचक्ष्वेन्द्रश्चसोमजागृतम् ।

रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यः ॥

(अष्ट० ५. अध्या० ७. व० ९. ऋ० २५.)

प्रतिचक्ष्व । वसिष्ठो रक्षोभिरभिभूयमान इन्द्रासोमौ प्रार्थयते । हे सोम! प्रतिचक्ष्व प्रतिब्रूहि रक्षांसि भर्त्सय । विचक्ष्व विरूपं च ब्रूहि कटुकानि वचनानि । इन्द्रश्च त्वं जागृतम् अवधत्तम् । रक्षोभ्यो वधं वधसाधनं वज्रम् अस्यतं क्षिपतम्, अशनिं च यातुमद्भ्यः । यातयतेर्वधकर्मणो यातवो रक्षःस्वेवावान्तरजातयः । तद्वद्भ्यस्तैर्युक्तेभ्यो रक्षोभ्यः । तानुद्दिश्य वधमशनिं चास्यतमिति ॥

माचिदन्यद्विशंसतसखायोमारिषण्यत ।

इन्द्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसत ॥

(अष्ट० ५. अध्या० ७. व० १०. ऋ० १.)

मा चिद् । घौरः[1] प्रगाथ ऋत्विजो ब्रूते । चिच्छब्द एवार्थे । मैवान्यत् किञ्चिदपि विशंसत । विर्धात्वर्थानुवादी । शंसनं वचनमात्रं न स्तुतिः । मैवान्यत् किञ्चिदपि वोचत । हे सखायः! ऋत्विजो मा च रिषण्यत । रिषण्यतिर्हिंसाकर्म । वागिन्द्रियस्यान्यत्र व्यापारेणात्मानं मा हिंसिष्ट । हिंसैव तत्र शिष्यते । किन्तर्हि कुर्मः । इन्द्रमित् स्तोता इन्द्रमेव स्तुत । वृषणं वर्षितारं सचा सह सर्वे सम्भूय सुते सोमे । उद्गातॄन् प्रत्येतदुक्तम् । स्तुतिर्हि तेषां कर्म । अथ होतॄन् प्रति — मुहुः, वीप्सालोपो द्रष्टव्यः । मुहुर्मुहुः । उक्था उक्थानि शस्त्राणि च शंसत ॥

आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये ।

सोभर्याउपसुष्टुतिंमादयस्वस्वर्णरे ॥

(अष्ट० ६. अध्या० ७. व० १५. ऋ० १४.)

---

१. 'घो' ङ. पाठः, २. 'त्मनो मा' क. पाठः,

अग्ने याहि । सोभरेरार्षम् । हे अग्ने ! आयाहि । मरुत्सखा मरुतः सखायो यस्य स त्वमायाहि रुद्रेभिः[1] रुद्रपुत्रैः मरुद्भिः सह सोमपीतये सोमपानाय । कदायाहि । सोभर्याः सोभरेर्मम सुष्टुतिमुप शोभनायाः स्तुतेरनन्तरम् । पीत्वा च मादयस्वात्मानम् । स्वर्णरे । स्वःशब्दः सर्वपर्यायः । सर्वे नरा ऋत्विग्यजमानाः अस्मिन्निति स्वर्णरो यज्ञः ॥

स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ।
इन्द्रायपातवेसुतः ॥

(अष्ट० ६. अध्या० ७. व० १६. ऋ० १.)

स्वादिष्ठया । माधुच्छन्दसी । स्वादिष्ठयातिशयेन स्वाद्या । मदिष्ठया अतिशयेन मदकर्या धारया पवस्व क्षर हे सोम ! लतात्मक ! इन्द्राय पातवे इन्द्रस्य पानार्थं सुतः अस्माभिरभिषुतः सन् ॥

यत्तेराजञ्छृतंहविस्तेनसोमाभिरक्षनः ।
अरातीवामानस्तारीन्मोचनःकिंचनाममदिन्द्रायेन्दोपरिस्रव ॥

(अष्ट० ७. अध्या० ५. व० २८. ऋ० ४.)

यत्ते राजन् ! । कश्यपो दुर्भिक्षे वृत्तिकर्शितो यया कया च विधया वर्तित्वा सुभिक्षे प्राप्ते सोमेनायष्ट । तस्य सोमो नाक्षरत् पापवृत्त्यायमजीवदिति । तं कश्यपः प्रार्थयते—हे सोम ! राजन् ! यत् ते अस्माभिः शृतं हविः पयसा ओदनेन (परिवेषन्त्या ?) क्रयादित्येतदभिप्रायमेतत् । तेन हविषा नोऽस्मानभिरक्ष । त्वत्प्रसादाच्चारातीवा । अरातिः शत्रुरिह भावपरः । वनिर्मत्वर्थीयः । अरातित्ववान् । अरातिरिति यावत् । नोऽस्मान् मा तारीत् मातिक्रमीत । मो च । मा उ मो । उः पादपूरणः । मा च नोऽस्माकम् । 'रुजार्थानां भाववचनानाम्—' (२-३-५४) इति कर्मणि षष्ठी । किञ्चन किमपि रोगजातम् आममत् । 'अम रोगे' । रुग्णान् मा कार्षीत् । हे इन्दो ! । 'इदि क्लेदने' । क्लेदयितः ! । सोमो हि क्षरन् क्लेदयति । इन्द्राय इन्द्रादीनां देवानामर्थाय । परिस्रव परितः क्षर । अस्माकं पापवृत्तिं जीगणः ॥

१. 'भिः सह' क. पाठः.

अग्ने॑बृ॒हन्नु॒षसा॑मू॒र्ध्वो अ॑स्थान्निर्ज॒गन्वान्तम॑सो॒ज्योति॒षागा॑त् ।
अ॒ग्निर्भा॒नुना॒रुश॑ता॒स्वङ्ग॒आजा॒तो॒विश्वा॒सद्मा॒न्यप्राः ॥

(अष्ट० ७. अध्या० ५. व० २९. ऋ० १.)

अग्ने बृहन् । त्रितस्यार्षम् । अर्थानुगुण्याद् द्वितीये पादे व्याख्या आरभ्यते । तमसो रात्रेर्निर्जगन्वान् निष्क्रान्तो रात्रावनुपशान्तस्ततो निर्गतोऽग्निर्ज्योतिषा स्वेन तेजसा युक्तः उषसामग्रे उदये बृहन् भूत्वा आ अगात् गार्हपत्यात् प्रणीत आहवनीयदेशमागात् आगमत् । आगत्य च बृहन्नूर्ध्वः अस्थात् प्रज्वलितः सन् ज्वालारूपेणोर्ध्वं तिष्ठति । स्थित्वा च कर्मार्थं जातः समिद्धः सन् स्वङ्गः शोभनाङ्गः भानुना स्वेन तेजसा रुशता अत्यन्तदीप्तेन विश्वानि सद्मानि यज्ञगृहाणि आ अप्राः । पुरुषव्यत्ययः । आ अप्रात् आपूरयति । य एवं करोति तस्मै स्वाहा ॥

स॒मा॒नी॒व॒आकू॑तिःसमा॒ना॒हृद॑यानिवः ।
स॒मा॒नम॑स्तु॒वो॒मनो॒यथा॒वः॒सु॒सहा॑सति ॥

(अष्ट० ८. अध्या० ८. व० ४९. ऋ० ४.)

समानी वः । संवनन ऋषिः । आकूतिरभिप्रायः । वो युष्माकमाकूतिः समानी अस्तु परस्परतो मया वा भिन्नाभिप्रायो मा भूत् । हृदयान्यन्तःकरणानि, तानि च (समाना) समानानि सन्तु । यदेवैकस्य हृदयं सङ्कल्पयति तदेवान्यस्यापि सङ्कल्पयतु । मनुत इति मनः आत्मा । तदपि वः समानमस्तु । यादृश एकस्यात्मा तादृश एवान्यस्याप्यस्तु । यथासति वो युष्माकं सर्वमेव सुसह सुष्ठु सह इवासति स्यात् न किञ्चित् पृथक्, तथा व आकूत्यादयः समानाः सन्तु । इयं शाकल्यानामन्त्या ॥

अथ बाष्कलानाम्—

तच्छंयोरावृणीमहे गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥

शंयोरार्षम् । शंयोर्ममार्थाय तद्वयमावृणीमहे । किं तत् । गातुं यज्ञाय । षष्ठ्यर्थ एषा चतुर्थी । यज्ञस्य । गातुं गमनं प्राप्तिम् । गातुं यज्ञपतये । एषा च षष्ठ्यर्थे चतुर्थी । यज्ञपतेः मम स्वर्गे गमनम् । किञ्च दैवी

देवैः कृता स्वस्तिः अविनाशिता नोऽस्तु । मानुषेभ्यः मनुष्येभ्यश्च नः स्वस्तिरस्तु । देवाश्च मनुष्याश्च नः स्वस्ति दिशन्त्वित्यर्थः । इदं च भेषजं सर्वस्य भेषजभूतम् अस्माभिः कृतं कर्म ऊर्ध्वं जिगातु देवान् प्रति गच्छतु । तथा नः अस्माकं सम्बन्धिने द्विपदे मनुष्यप्राणिने पुत्रपौत्रादिकाय शम् अस्तु । शमस्तु चतुष्पदे गवादिकाय ॥

समाप्तमुपाकरणम् ॥

---

अथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वा षडाहुतिश्चरु'र्मुञ्चामि त्वा हविषा जीवनाय कमि'त्येतेन ।

मुञ्चामित्वाहविषाजीवनायकमज्ञातयक्ष्मादुतराजयक्ष्मात् ।
ग्राहिर्जग्राहयदिवैतदेनंतस्याइन्द्राग्नीप्रमुमुक्तमेनम् ॥

(अष्ट० ८. अध्या० ८. व० १९. ऋ १.)

मुञ्चामि त्वा । यक्ष्मनाशनः ऋषिः । प्रथमोऽर्धर्चो रुग्णं प्रति । हे रुग्ण ! त्वा त्वाम् अहमनेन हविषा मुञ्चामि । किमर्थम् । जीवनाय । कं पादपूरणाय । सुखं यथा तथा जीवनायेति वा । कस्मान्मुञ्चसि । अज्ञातयक्ष्माद् अविस्पष्टलिङ्गाद् यक्ष्मणः । उतापि राजयक्ष्मात् स्पष्टलिङ्गाद् राजयक्ष्मणः । अथेन्द्राग्नी प्रति । ग्राहिर्ग्रहणीरोगः । एनं पुरुषम् । यदि वा यद्येव ग्राहिर्जग्राह । एतत् । पञ्चम्या लुक् । तस्या एतस्या ग्राह्याः हे इन्द्राग्नी! एनं प्रमुमुक्तं प्रकर्षेण मुञ्चतम् ॥

यदिक्षितायुर्यदिवापरेतोयदिमृत्योरन्तिकंनीतएव ।
तमाहरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशारदाय ॥

(अष्ट० ८. अध्या० ८. व० १९. ऋ० २.)

यदि क्षितायुः । यद्यप्ययं क्षीणायुः यदि वा परेतः चक्षुरादिभिः करणैः परागतः, यदि वा स्वयमेव मृत्योरन्तिकं नीत एव, तथापि तं पुरुषम् आहरामि । कुतः । निर्ऋतेर्मृत्युदेवताया उपस्थात् । आहृत्य च एनं पुरुषं शतशारदाय शतं शरदो यद् भावि जीवनं तस्मै । तदस्य यथा स्यादिति अस्पार्षम् । स्पृणोतिः पालयतिकर्मा । 'ते ते प्राणान् स्परिष्यन्ती'ति दर्शनात् । पालयामि अपीपलं वा ॥

सहस्राक्षेणशतशारदेनशतायुषाहविषाहार्षमेनम् ।
शतंयथेमंशरदोनयातीन्द्रोविश्वस्यदुरितस्यपारम् ॥
(अष्ट० ८. अध्या० ८. व० १९. ऋ० ३.)

सहस्राक्षेण । सहस्रमिति बहुनाम । अक्षाणीन्द्रियाणि । बह्विन्द्रियेण । 'शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय' इति ब्राह्मणम् । इह तु तद्धेतौ तच्छब्दः । बहूनामिन्द्रियाणां निमित्तभूतेन । शतशारदेन । शतं शरदो भावि वीर्यं शतशारदम् । तद्धेतुत्वाद्धविरपि शतशारदम् । शतायुषा वर्षशतं जीवनहेतुना । अनेन हविषा एतद्धविर्हुत्वा । एनं यक्ष्मगृहीतं पुरुषम् आहरामि । यथा आहरणे सति इन्द्रो हविषा तर्पितः इमं शतं शरदो नयाति नयेत् प्रापयेत्, विश्वस्य च दुरितस्य यक्ष्मनिमित्तस्य पारं नयाति, तथा आहरामीति ॥

शतंजीवशरदोवर्धमानःशतंहेमन्ताञ्छतमुवसन्तान् ।
शतमिन्द्राग्नीसवितावृहस्पतिःशतायुषाहविषेमंपुनर्दुः ॥
(अष्ट० ८, अध्या० ८. व० १९. ऋ० ४.)

शतं जीव । यक्ष्मगृहीतं प्रत्युच्यते । हे यक्ष्मिन्! त्वं यक्ष्मणो मुक्तः उपर्युपरि वर्धमान एव शतं शरदः ऋतून् जीव । तथा हेमन्तानप्यृतून् शत जीव । शतमु । उः पादपूरणः अप्यर्थे वा । वसन्तानपि शतं जीव । शतम् । अत्र संख्यया सापेक्षयानुक्ता ऋतवो गम्यन्ते शतं वर्षाः शतं शिशिरानिति । किञ्च इन्द्राग्न्यादयः शतायुषा शतायुर्निमित्तेनानेन हविषा तर्पिताः सन्तः इमं मृतकल्पं पुनर्ददतु ॥

आहार्षंत्वाविदंत्वापुनरागाःपुनर्नव ।
सर्वाङ्गसर्वंतेचक्षुःसर्वमायुश्चतेविदम् ॥
(अष्ट० ८. अध्या० ८. व० १९. ऋ० ५.)

आहार्षम् । त्वामहमाहृतवानस्मि मृत्योः सकाशात् । अविदं त्वा लब्धवांश्चास्मि त्वा । त्वं च पुनरागाः यक्ष्मणो विमुक्तः पुनरागतोऽसि । हे पुनर्नव! व्याधिनाशेन पुनर्नवीभूत! सर्वाङ्ग! सम्पूर्णसर्वावयव! सर्वं च ते चक्षुः चक्षुरादीन्द्रियं सर्वं पूर्णं चायुः ते तव अविदं लब्धवानस्मि ॥

स्वप्नममनोज्ञं दृष्ट्वा 'अद्या नो देव सवितः' 'यच्च गोषु दुःष्वप्न्यम्' इति पञ्चभिरादित्यमुपतिष्ठेत ।

अद्यानोदेवसवितःप्रजावत्सावीःसौभगम् ।
परादुःष्वप्न्यंसुव ॥

(अष्ट० ४. अध्या० ४. व० २५. ऋ० ४.)

अद्यानः । श्यावाश्व ऋषिः । देव! हे सवितः! नः अस्मभ्यं प्रजावत् पुत्रादिभिः प्रजाभिस्तद्वत् सौभगं सौभाग्यम् अद्य सावीः अनुजानीहि देहि । दुःस्वप्ने भवं दुःष्वप्न्यं दुःस्वप्नसूचितमर्थजातं तत् पराङ्गुव परागमय अपनय ॥

यच्चगोषुदुःष्वप्न्यंयच्चास्मेदुहितर्दिवः ।
त्रिताायतद्विभावर्याप्त्यायपरावहानेहसोवऊतयःसुऊतयोवऊतयः ॥

(अष्ट० ६. अध्या० ४. व० ९. ऋ० १४.)

यच्च गोषु । त्रितस्यार्षम् । दुःस्वप्नसूचितं गोविषयमर्थजातं यच्च, यच्चास्मे अस्मासु, तद् हे विभावरि! । उषोनामैतत् । हे उषः! । तस्या विशेषणं— हे दिवो दुहितः! । दिव आविर्भवन्ती तस्या दुहितेत्युपचर्यते । त्रिताय । विभक्तिव्यत्ययः । त्रितात् । तस्य विशेषणम् — आप्त्याय । आप्त्याद् अद्भ्य उत्पन्नात् । श्रूयते च 'यदद्भ्योऽजायन्त तदाप्त्यानामाप्त्यत्वमि'ति । तकार उपजनः । आप्त्यात् त्रितनाम्नो मन्त्रः तद् दुःष्वप्न्यं परावह परागमय । अपर आह — प्रतिमन्वन्तरमृषयो भिद्यन्ते । सनामानस्तु भवन्ति । तत्र मन्त्रदर्शी त्रितः पूर्वातीते त्रिते दुःष्वप्न्यं परावहेति प्रार्थयते । दृश्यते चान्यत्राप्येवंविधो वादः । 'त्रिते देवा अमृजतैतदेन' इति, 'ते देवा आप्त्येष्वमृतेमेजन्ते'ति च । परयोः पादयोरादित्याः प्रार्थ्यन्ते । प्रत्यहमुद्यन्नसावादित्यस्तेष्वेवान्यतम इ ते तदुपस्थानस्याविरोधः । उषसस्तु सहचारित्वेनाभिधानम् । हे आदित्याः !। वः ऊतयः युष्मत्कर्तृकाणि पालनानि । अनेहसः । एह इति पापनाम । अपापाः । न केवलमनेहसः । सु ऊतयश्च व ऊतयः । अन्येषां देवानां न तादृश्य ऊतयः यथा युष्माकम् । अतश्च ताभिरस्मानव्यवतेत्यभिप्रायः ॥

निष्कंवांघाकृणवतेस्रजंवादुहितर्दिवः ।
त्रितेदुःष्वप्न्यंसर्वमाप्त्येपरिदद्मस्यनेहसोवऊतयःसुऊतयोवऊतयः ॥

(अष्ट० ६. अध्या० ४. व० ९. ऋ० १५)

---

१. 'दुस्स्व', २. 'तज' ग. पाठः.

स॒ह॒स्रा॒क्षेण॑श॒तशा॑रदेनश॒तायु॑षाह॒विषाहा॑र्षमेनम् ।
श॒तंय॒थेमंश॒रदो॒नयाती॒न्द्रोविश्व॑स्यदु॒रि॒तस्य॒पार॒म् ॥
(अष्ट० ८. अध्या० ८. व० १९. ऋ० ३.)

सहस्राक्षेण । सहस्रमिति बहुनाम । अक्षाणीन्द्रियाणि । बह्विन्द्रियेण । 'शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय' इति ब्राह्मणम् । इह तु तद्धेतौ तच्छब्दः । बहूनामिन्द्रियाणां निमित्तभूतेन । शतशारदेन । शतं शरदो भावि वीर्यं शतशारदम् । तद्धेतुत्वाद्धविरपि शतशारदम् । शतायुषा वर्षशतं जीवनहेतुना । अनेन हविषा एतद्धविर्हुत्वा । एनं यक्ष्मगृहीतं पुरुषम् आहरामि । यथा आहरणे सति इन्द्रो हविषा तर्पितः इमं शतं शरदो नयाति नयेत् प्रापयेत्, विश्वस्य च दुरितस्य यक्ष्मनिमित्तस्य पारं नयाति, तथा आहरामीति ॥

श॒तंजी॑वश॒रदो॒वर्ध॑मानःश॒तंहे॑म॒न्ताञ्छ॒तमु॑वस॒न्तान् ।
श॒तमि॑न्द्रा॒ग्नीस॑वि॒ताबृह॒स्पतिः॑श॒तायु॑षाह॒विषे॒मंपुन॑र्दुः ॥
(अष्ट० ८. अध्या० ८. व० १९. ऋ० ४.)

शतं जीव । यक्ष्मगृहीतं प्रत्युच्यते । हे यक्ष्मिन् ! त्वं यक्ष्मणो मुक्तः उपर्युपरि वर्धमान एव शतं शरदः ऋतून् जीव । तथा हेमन्तानप्यृतून् शत जीव । शतमु । उः पादपूरणः अप्यर्थे वा । वसन्तानपि शतं जीव । शतम् । अत्र संख्यया सापेक्षयानुक्ता ऋतवो गम्यन्ते शतं वर्षाः शतं शिशिरानिति । किञ्च इन्द्राग्न्यादयः शतायुषा शतायुर्निमित्तेनानेन हविषा तर्पिताः सन्तः इमं मृतकल्पं पुनर्ददतु ॥

आहा॑र्षत्वावि॑दं॒त्वा॒पुन॒रागाः॑पुनर्नव ।
सर्वा॑ङ्ग॒सर्वं॑ते॒चक्षुः॒सर्व॒मायु॑श्चते॒विदम् ॥
(अष्ट० ८. अध्या० ८. व० १९. ऋ० ५.)

आहार्षम् । त्वामहमाहृतवानस्मि मृत्योः सकाशात् । अविदं त्वा लब्धवांश्चास्मि त्वा । त्वं च पुनरागाः यक्ष्मणो विमुक्तः पुनरागतोऽसि । हे पुनर्नव ! व्याधिनाशेन पुनर्नवीभूत ! सर्वाङ्ग ! सम्पूर्णसर्वावयव ! सर्वं च ते चक्षुः चक्षुरादीन्द्रियं सर्वं पूर्णं चायुः ते तव अविदं लब्धवानस्मि ॥

स्वप्नममनोज्ञं दृष्ट्वा 'अद्यानो देव सवितः' 'यच्च गोषु दुःष्वप्न्यम्' इति पञ्चभिरादित्यमुपतिष्ठेत ।

अद्यानोदेवसवितःप्रजावत्सावीःसौभगम्।
परादुःष्वप्न्यंसुव॥

(अष्ट० ४. अध्या० ४. व० २५. ऋ० ४.)

अद्यानः। श्यावाश्व ऋषिः। देव! हे सवितः! नः अस्मभ्यं प्रजावत् पुत्रादिभिः प्रजाभिस्तद्वत् सौभगं सौभाग्यम् अद्य सावीः अनुजानीहि देहि। दुःस्वप्ने भवं दुःष्वप्न्यं दुःस्वप्नसूचितमर्थजातं तत् परासुव परागमय अपनय॥

यच्चगोषुदुःष्वप्न्यंयच्चास्मेदुहितर्दिवः।
त्रितायतद्विभावर्याप्त्यायपरावहानेहसोवऊतयःसुऊतयोवऊतयः॥

(अष्ट० ६. अध्या० ४. व० ९. ऋ० १४.)

यच्च गोषु। त्रितस्यार्षम्। दुःस्वप्नसूचितं गोविषयमर्थजातं यच्च, यच्चास्मे अस्मासु, तद् हे विभावरि!। उषोनामैतत्। हे उषः!। तस्या विशेषणं— हे दिवो दुहितः!। दिव आविर्भवन्ती तस्या दुहितेत्युपचर्यते। त्रिताय। विभक्तिव्यत्ययः। त्रितात्। तस्य विशेषणम् — आप्त्याय। आप्त्याद् अद्भ्य उत्पन्नात्। श्रूयते च 'यदद्भ्योऽजायन्त तदाप्त्यानामाप्त्यत्वमि'ति। तकार उपजनः। आप्त्यात् त्रितनाम्नो मत्तः तद् दुःष्वप्न्यं परावह परागमय। अपर आह — प्रतिमन्वन्तरमृषयो भिद्यन्ते। सनामानस्तु भवन्ति। तत्र मन्त्रदर्शी त्रितः पूर्वातीते त्रिते दुःष्वप्न्यं परावहेति प्रार्थयते। दृश्यते चान्यत्राप्येवंविधो वादः। 'त्रिते देवा अमृजतैतदेन' इति, 'ते देवा आप्त्येष्वमृजत' ति च। परयोः पादयोरादित्याः प्रार्थ्यन्ते। प्रत्यहमुद्यन्नसावादित्यस्तेष्वेवान्यतम इति तदुपस्थानस्याविरोधः। उषसस्तु सहचारित्वेनाभिधानम्। हे आदित्याः!। वः ऊतयः युष्मत्कर्तृकाणि पालनानि। अनेहसः। एह इति पापनाम। अपापाः। न केवलमनेहसः। सु ऊतयश्च व ऊतयः। अन्येषां देवानां न तादृश्य ऊतयः यथा युष्माकम्। अतश्च ताभिरस्मानप्यवतेत्यभिप्रायः॥

निष्कंवाघाकृणवतेस्रजंवादुहितर्दिवः।
त्रितेदुःष्वप्न्यंसर्वमाप्त्येपरिदद्मस्यनेहसोवऊतयःसुऊतयोवऊतयः॥

(अष्ट० ६. अध्या० ४. व० ९. ऋ० १५)

---

१. 'दुस्स्व', २. 'तज' ग. पाठः.

निष्कं वा। निष्कमिति सुवर्णनाम। 'तस्मान्निष्कतमाः स्त्रियः' इति मानवदर्शनात्। वाशब्दो विकल्पे समुच्चये वा। घः पादपूरणः। कृणवते। षष्ठ्यर्थे चतुर्थी। क्रियासामान्यवचनः करोतिरिह खादित्वावगिरणे वर्तते। तद्धि स्वप्ने प्रतिकूलं सुवर्णं खादित्वावगिरतीति। स्वप्ने सुवर्णं खादित्वावगिरतो मम यद् दुःष्वप्न्यं तत्सूचितं भयम्। स्रजं वा कृणवतः। अत्र करोतिर्धारणे। 'नलदमाली दक्षिणामुखः प्राजयती'त्यादिप्रतिषिद्धस्रग्धारणसूचितं वा यद् दुःष्वप्न्यं तदुभयमपि। अन्यच्चैवंविधं सर्वं दुःष्वप्न्यम्। हे दिवो दुहितः! त्वत्प्रसादादाप्त्ये त्रिते परिदद्मसि। परिः परापदार्थे परादद्मः। यथा पुनर्नोपसर्पति तथा त्रिते निर्मृज[1]। अनेहस इत्यादि गतम्॥

तदन्नाय तदपसे तं भागमुपसेदुषे।

त्रिताय च द्विताय चोषो दुःष्वप्न्यं वहानेहसो व ऊतयः सुऊतयो व ऊतयः॥

(अष्ट० ६ अध्या० ४. व० १०. ऋ० १६.)

तदन्नाय। हे उषः! मदीयं दुःष्वप्न्यं दुःस्वप्नसूचितं दुरितं त्रिताय तज्ज्येष्ठाय द्विताय च वह। त्रितं तज्ज्येष्ठं द्वितं च प्रापय। तयोर्विशेषणं— तदन्नायेत्यादि। तदेव देवादिभिर्निमृष्टं दुरितमन्नं यस्य तस्मै। तदेव निमृष्टस्य दुरितस्य धारणमपः कर्म यस्य तदपाः। तस्मै। तदेव च भागत्वेनोपसेदुषे प्राप्ताय। स एव हि देवैस्तस्मै भागो दत्तः। अनेहसः॥

यथा कलां यथा शफं यथ ऋणं संनयामसि।

एवा दुःष्वप्न्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऊतयः सुऊतयो व ऊतयः॥

(अष्ट० ६. अध्या० ४. व० १०. ऋ० १७.)

यथा कलाम्। ऋणस्य वृद्धिः कला। यथा तां वयं सन्नयामसि सन्नयामः। यथा शफं गवादेः खुरमतिप्रमाणं जित्वा सन्नयामसि। यथा वा ऋणमेवं दुःष्वप्न्यं सर्वमाप्त्ये त्रिते सन्नयामसि। अनेहसः॥

अजैष्माद्यासनाम चाभूमानागसो वयम्।

उषो यस्माद्दुःष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व ऊतयः सुऊतयो व ऊतयः॥

(अष्ट० ६. अध्या० ४. व० १०. ऋ० १८.)

---

१ 'मृजः' घ., 'मृज्यः' ङ. पाठः.

अजैष्म। लिङर्थे लुङ्। अद्य वयं जयेम यज्जेतव्यम्। असनाम च। 'वन षण सम्भक्तौ'। सनेम सम्भजेम च यत् सम्भक्तव्यम्। अनागसः अपापाश्च वयमभूम भवेम। हे उषः! त्वं यस्माद् दुःष्वप्न्याद् वयमभैष्म बिभिमः, तद् अपोच्छतु। पुरुषव्यत्ययः। अपोच्छ। यथा तदपगतं भवति तथोच्छ व्युष्टा भव। अनेहसः॥

यो मे राजन्! युज्यो वा सखा वेति वा—

योमेराजन्युज्योवासखावास्वप्नेभयंभीरवेमह्यमाह।
स्तेनोवायोदिप्सतिनोवृकोवात्वंतस्माद्वरुणपाह्यस्मान्॥

(अष्ट० २. अध्या० ७. व० १०. ऋ० १०.)

यो मे राजन्। गार्त्समदी वरुणदेवत्या। वरुणश्चादित्यानामन्यतम इत्यादित्योपस्थानस्याविरोधः। हे राजन्! वरुण! यो यन्मे मम स्वभूतो युज्योऽन्तरङ्गः सम्बन्धी पुत्रो भ्राता जामातेति वा सखा वा। भीरवे भयशीलाय मह्यम्। स्वप्ने भयमाह इदं ते दुरितमागामीति। यद्वा नः स्तेनः स्वप्ने दिप्सति। दभ्नोतेर्हिंसार्थस्य सनि रूपम्। दिप्सतीति भूते लेट्। अदिप्सीत्। वृको वा यत् स्वप्ने दिप्सति। अरण्यश्वा वृकः। त्वं तस्मात् सर्वस्मादस्मान् पाहि॥

क्षुत्वा जृम्भित्वामनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च 'सुचक्षा' इत्यादि जपेद्।

सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत् कर्णाभ्यां मयि दक्षक्रतू॥

ई च द्विवचने। अक्षिभ्यां सुचक्षाः। चक्षिः पश्यतिकर्मा। तस्मादहं सुष्ठु चक्षो दर्शनं सुदर्शनो भूयासम्। अक्षिभ्यां सुष्ठु पश्येयम्। मुखेन च सुवर्चाः सुदीप्तिर्भूयासम्। जृम्भणजनितं मुखे वैरूप्यं मा भूत्। कर्णाभ्यां च सुश्रुत् सुश्रोता भूयासम्। मा तु ध्वननसूचितं बाधिर्यं भूत्। दक्षः उत्साहः। क्रतुः कर्म प्रज्ञा वा। तौ च मयि स्ताम्॥

अगमनीयां गत्वायाज्यं याजयित्वाप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं वोपहत्य 'पुनर्मामै-त्वि'ति।

पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः पुनर्द्रविणमैतु मा पुनर्ब्राह्मणमैतु मा स्वाहा॥

इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पन्तां वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरमृतस्य केतुः स्वाहा ॥

अगमनीयागमनेन यन्मया परासिक्तमिन्द्रियं तद् मां पुनरैतु आ एतु आगच्छतु । तदपायनिमित्तो दोषो मे मा भूत् । आयुश्च पुनरैतु । भगो भाग्यं, स च पुनरैतु । द्रविणं धनं बलं वा । तच्च मां पुनरैतु । अकृत्यानुष्ठाननिमित्ता आयुरादीनां हानिर्मा मे भूत् । ब्रह्मणो भावो ब्राह्मणं तच्च मां पुनरैतु मा अपगमत् ।

"जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ।"

इति स्मृतिः ।

इमे ये । य इमे देवाः इन्द्रियाणामधिष्ठातारः । इह शरीरे धिष्ण्यासः । स्वं स्वं स्थानं धिष्ण्यम् । तत्र भवाः स्थिताः अग्नयः अग्न्यादयः 'वाच्यग्निर्मित्र उत्सर्गे' इत्यादि मानवे निर्दिष्टाः । 'सूर्यं चक्षुर्गमयतादि'त्यादिके च मन्त्रे । ये इति वचनात् ते इति गम्यते । ते यथास्थानं यथाविषयं यो यस्य विषयः शास्त्रेष्वप्रतिषिद्धस्तत्र कल्पन्ताम् । अग्न्यादिभिरधिष्ठितानीन्द्रियाणि अप्रतिषिद्धेष्वेव विषयेषु प्रवर्तन्तां, प्रतिषिद्धेषु मा प्रवृतन् । वैश्वानरो जठराग्निः,

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥"

इति भगवद्गीतायां निर्दिष्टः । स च वावृधानः वर्धमानः मे मनः अन्तर्यच्छतु यथा अकृत्येषु विक्षिप्तं न भवति तथा करोतु । अन्तरित्युक्तं, कुत्रान्तरित्याह—हृद्यन्तःहृदयस्य मध्ये । अमृतस्य केतुः अमरणस्य केतयिता प्रज्ञापयिता वैश्वानर एवं करोतु । तस्मै स्वाहा ॥

अभ्याधितं चेत् स्वपन्तं 'येन सूर्ये'ति पञ्चभिः । प्रत्यवरोहणे गताः । अभ्युदियाच्चेदुत्तराभिश्चतसृभिरुपस्थानम् । एता अपि तत्रैव गताः ॥

'कपोतश्चेदगारमुपहन्यादनुपतेद् वा 'देवाः कपोत' इति प्रत्यृचं जुहुद् जपेद्वा ।

देवाः꣡कपोत꣡इषितोयदिच्छन्दूतोनिर्ऋत्याइदमाजगाम꣡ ।
तस्मा꣡अर्चाम꣡कृणवाम꣡निष्कृतिंशंनोअस्तुद्विपदेशंचतुष्पदे ॥

(अष्ट० ८. अध्या० ८. व० २१. ऋ० १.)

कपोतस्यार्षम् । हे देवाः ! । यत् । लिङ्गव्यत्ययः । यः कपोतः निर्ऋत्या दूतः इषितस्तयैव प्रेषितः । इदमस्मदगारम् आजगाम इच्छन्नस्माकमनर्थमिच्छन् । तस्मै । विभक्तिव्यत्ययः । तं कपोतम् । अर्चाम । लडर्थे लोट् । अर्चामः पूजयामः । निष्कृतिं प्रायाश्चित्तं च तस्य दुर्निमित्तस्य कृणवाम कुर्मः । अतश्च नोऽस्माकं संबन्धिने द्विपदे पुत्रादिकाय शमस्तु । चतुष्पदे गवादिकाय शमस्तु ॥

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥

(अष्ट० ८. अध्या० ८. व० २१. ऋ० २.)

शिवः । हे देवाः ! निर्ऋत्या इषितः प्रेषितोऽयं कपोताख्यः शकुनः पक्षी नोऽस्माकं गृहेषु शिवोऽस्तु । अनागाः अनपराधश्चास्तु । अग्निर्हि । हिश्चार्थे । अग्निश्चायं नो हविः अस्माभिर्हुतमिदमाज्यलक्षणं हविः जुषतां विप्रः मेधावी चायम् । पक्षिणी कपोतस्य स्त्री कपोतिका । कीदृशी । हेतिः हन्त्री हननं सूचयन्ती । सा च नः परिवृणक्तु सर्वतो वर्जयतु ॥

हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने ।
शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ॥

(अष्ट० ८. अध्या० ८. व० २१. ऋ० ३.)

हेतिः पक्षिणी । व्याख्यातं पदद्वयम् । सा अस्मान् न दभाति न दभ्नोतु न हिनस्तु । आष्ट्र्याम् । अत्रैकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽध्याहार्यः । या पक्षिणी आष्ट्र्यां दधिपिडकायां पदं कृणुते । अग्निर्यत्र निधीयते तदग्निधानं आष्ट्रम् । तत्र च या पदं कृणुते, सा न दभात्यस्मानित्यन्वयः । अगारस्योपरि कपोते आसीने तस्य प्रदेशस्यार्जवेनाधःप्रदेशे यदि दधिधानी आष्ट्रं वा भवति तदा तयोः कपोतस्य पदमुद्रा दृश्यते । तच्च दुर्निमित्तमिति प्रसिद्धिः । अयं च कपोत इह गृहे आसीनः मा नो हिंसीत् । किन्तु गोभ्यः पुरुषेभ्यश्च शमस्तु हे देवाः ! ॥

यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥

(अष्ट० ८. अध्या० ८. व० २१. ऋ० ४.)

इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पन्तां वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरमृतस्य केतुः स्वाहा ॥

अगमनीयागमनेन यन्मया परासिक्तमिन्द्रियं तद् मां पुनरैतु आ एतु आगच्छतु । तदपायनिमित्तो दोषो मे मा भूत् । आयुश्च पुनरैतु । भगो भाग्यं, स च पुनरैतु । द्रविणं धनं बलं वा । तच्च मां पुनरैतु । अकृत्यानुष्ठाननिमित्ता आयुरादीनां हानिर्मा मे भूत् । ब्रह्मणो भावो ब्राह्मणं तच्च मां पुनरैतु मा अपगमत् ।

"जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ।"

इति स्मृतिः ।

इमे ये । य इमे देवाः इन्द्रियाणामधिष्ठातारः । इह शरीरे धिष्ण्यासः । स्वं स्वं स्थानं धिष्ण्यम् । तत्र भवाः स्थिताः अग्नयः अग्न्यादयः 'वाच्यग्निर्मित्र उत्सर्गे' इत्यादि मानवे निर्दिष्टाः । 'सूर्यं चक्षुर्गमयतादि'त्यादिके च मन्त्रे । ये इति वचनात् ते इति गम्यते । ते यथास्थानं यथाविषयं यो यस्य विषयः शास्त्रेष्वप्रतिषिद्धस्तत्र कल्पन्ताम् । अग्न्यादिभिरधिष्ठितानीन्द्रियाणि अप्रतिषिद्धेष्वेव विषयेषु प्रवर्तन्तां, प्रतिषिद्धेषु मा प्रवृतन् । वैश्वानरो जठराग्निः,

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥"

इति भगवद्गीतायां निर्दिष्टः । स च वावृधानः वर्धमानः मे मनः अन्तर्यच्छतु यथा अकृत्येषु विक्षिप्तं न भवति तथा करोतु । अन्तरित्युक्तं, कुत्रान्तरित्याह— हृद्यन्तःहृदयस्य मध्ये । अमृतस्य केतुः अमरणस्य केतयिता प्रज्ञापयिता वैश्वानर एवं करोतु । तस्मै स्वाहा ॥

अव्याधितं चेत् स्वपन्तं 'येन सूर्ये'ति पञ्चभिः । प्रत्यवरोहणे गताः । अभ्युदियाच्चेदुत्तराभिश्चतसृभिरुपस्थानम् । एता अपि तत्रैव गताः ॥

'कपोतश्चेदगारमुपहन्यादनुपतेद् वा 'देवाः कपोत' इति प्रत्यृचं जुहुद् जपेद्वा ।

देवाःकपोतइषितोयदिच्छन्दूतोनिर्ऋत्याइदमाजगाम ।

तस्माअर्चामकृणवामनिष्कृतिंशंनोअस्तुद्विपदेशंचतुष्पदे ॥

(अष्ट० ८. अध्या० ८. व० २१. ऋ० १.)

कपोतस्यार्षम् । हे देवाः ! । यत् । लिङ्गव्यत्ययः । यः कपोतः निर्ऋत्या दूतः इषितस्तयैव प्रेषितः । इदमस्मदगारम् आजगाम इच्छन्नस्माकमनर्थमिच्छन् । तस्मै । विभक्तिव्यत्ययः । तं कपोतम् । अर्चाम । लडर्थे लोट् । अर्चामः पूजयामः । निष्कृतिं प्रायाश्चित्तं च तस्य दुर्निमित्तस्य कृणवाम कुर्मः । अतश्च नोऽस्माकं संबन्धिने द्विपदे पुत्रादिकाय शमस्तु । चतुष्पदे गवादिकाय शमस्तु ॥

शिवःकपोतइषितोनोअस्त्वनागादेवाःशकुनोगृहेषु ।

अग्निर्हिविप्रोजुषतांहविर्नःपरिहेतिःपक्षिणीनोवृणक्तु ॥

(अष्ट० ८. अध्या० ८. व० २३. ऋ० २.)

शिवः । हे देवाः ! निर्ऋत्या इषितः प्रेषितोऽयं कपोताख्यः शकुनः पक्षी नोऽस्माकं गृहेषु शिवोऽस्तु । अनागाः अनपराधश्चास्तु । अग्निर्हि । हिश्चार्थे । अग्निश्चायं नो हविः अस्माभिर्हुतमिदमाज्यलक्षणं हविः जुषतां विप्रः मेधावी चायम् । पक्षिणी कपोतस्य स्त्री कपोतिका । कीदृशी । हेतिः हन्त्री हननं सूचयन्ती । सा च नः परिवृणक्तु सर्वतो वर्जयतु ॥

हेतिःपक्षिणीनदभात्यस्मानाष्ट्र्यांपदंकृणुतेअग्निधाने ।

शंनोगोभ्यश्चपुरुषेभ्यश्चास्तुमानोहिंसीदिहदेवाःकपोतः ॥

(अष्ट० ८. अध्या० ८. व० २३. ऋ० ३.)

हेतिः पक्षिणी । व्याख्यातं पदद्वयम् । सा अस्मान् न दभाति न दभ्नोतु न हिनस्तु । आष्ट्र्याम् । अत्रैकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽध्याहार्यः । या पक्षिणी आष्ट्र्यां दधिपिडकायां पदं कृणुते । अग्निर्यत्र निधीयते तदग्निधानं आष्ट्रम् । तत्र च या पदं कृणुते, सा न दभात्यस्मानित्यन्वयः । अगारस्योपरि कपोते आसीने तस्य प्रदेशस्यार्जवेनाधःप्रदेशे यदि दधिधानी आष्ट्रं वा भवति तदा तयोः कपोतस्य पदमुद्रा दृश्यते । तच्च दुर्निमित्तमिति प्रसिद्धिः । अयं च कपोत इह गृहे आसीनः मा नो हिंसीत् । किन्तु गोभ्यः पुरुषेभ्यश्च शमस्तु हे देवाः ! ॥

यदुलूकोवदतिमोघमेतद्यत्कपोतःपदमग्नौकृणोति ।

यस्यदूतःप्रहितएषएतत्तस्मैयमायनमोअस्तुमृत्यवे ॥

(अष्ट० ८. अध्या० ८. व० २३. ऋ० ४.)

यदुलूकः । उलूको दिवाभीतः । स गृहस्योपरि शब्दायमानो यद् वदति, एतद् मोघं निष्फलं भवतु । यच्च कपोतोऽग्नौ आग्न्यस्थे भस्ममिश्रे पदं कृणोति पदमुद्रां दर्शयति, तच्च मोघमस्तु । यस्य चैषः कपोतो दूतः प्रहित-स्तस्मै यमाय मृत्यवे मारयित्रे एतन्नमोऽस्तु ॥

ऋचाकपोतंनुदतप्रणोदमिषंमदन्तःपरिगांनयध्वम् ।

संयोपयन्तोदुरितानिविश्वाहित्वानऊर्जंप्रपतात्पतिष्ठः ॥

(अष्ट० ८. अध्या० ८. व० २१ ऋ० ५.)

ऋचा कपोतम् । इमं कपोतमृचा ऋग्लक्षणेन मन्त्रेण नुदत इतः क्षिपत हे मदीयाः ! पुत्रपौत्रादयः ! । प्रणोदम् । आभीक्ष्ण्ये णमुल् । छान्दसो द्विर्वचनाभावः । प्रणुद्य पूर्वं दण्डादिना पश्चादृचा नुदत यथा न पुनः प्रविशेत् । प्रणुद्य च इषम् । विभक्तिव्यत्ययः । इषा अन्नेन । मदन्तो माद्यन्तः । गाम् । जातावेकवचनम् । गाः । परिनयध्वं गृहं परितः स्थापयत । किं कुर्वन्तः । विश्वा विश्वानि दुरितानि संयोपयन्तः । संयोपनं प्रमार्जनम् । हस्ताभ्यां सम्यक् प्रमृजन्तो यूयं गाः परिणयध्वम् । दुर्निमित्ते सूचिते दुरिते शान्ते अन्नं गावश्च अस्माकं भूयासुरित्यर्थः । अयं च पतिष्ठः अतिशयेन पतितः कपोतः नः ऊर्जम् अन्नं बलं हित्वा तद्विषये कञ्चिदप्यनर्थमकृत्वा अन्यत्र प्रपतात् पततु ॥

'वयमु त्वा पथस्पते' इत्यर्थचर्यां चरिष्यन् ।

वयमुत्वापथस्पतेरथंनवाजसातये ।

धियेपूषन्नयुज्महि ॥

(अष्ट० ४. अध्या० ८. व० १७. ऋ० १.)

वयमु त्वा । भरद्वाजस्यार्षम् । पथि गच्छतां पालयिता पथस्पतिः । हे पथस्पते ! पूषन् ! वयम् । उः पादपूरणः । वयं त्वा धिये पथि ज्ञानाय पथि गमनलक्षणाय वा कर्मणे अयुज्महि अस्मद्रक्षणे उद्युक्तं कुर्मः । रथं न वाजसातये । वाजसातिरिति सङ्ग्रामनाम । यथा सङ्ग्रामार्थं रथं युञ्जते तद्वत् ॥

अभिनोनर्यंवसुवीरंप्रयतदक्षिणम् ।

वामंगृहपतिंनय ॥

(अष्ट० ४. अध्या० ८. व० १७. ऋ० ९.)

अभि नः । नोऽस्मान् नर्यं नरेभ्यो हितं वसु धनम् अभि प्रति तदुद्देशेन गृहपतिं गृहस्वामिनं गृहस्थं नय प्रापय । कीदृशम् । वीरं दाने शूरं सन्ततदानेऽप्यकातरम् । प्रयतदक्षिणं प्रत्तदक्षिणं दातृस्वभावम् । वामं वननीयम् । वसुनः एतद्विशेषणम् । एवम्भूतस्य वसुनः प्रापणार्थम् एवम्भूतं गृहपतिमस्मान् प्रापय ॥

अदित्सन्तंचिदाघृणेपूषन्दानायचोदय ।
पणेश्चिद्विम्रदामनः ॥

(अष्ट० ४. अध्या० ८. व० १७ ऋ० ३.)

अदित्सन्तम् । हे आघृणे! आगतदीप्ते! पूषन्! अदित्सन्तं चित् । चिच्छब्दोऽप्यर्थे । दातुमनिच्छन्तमपि पुरुषं दानाय चोदय प्रेरय । पणिर्वार्धुषिकः । तस्यापि मनः विम्रद विशेषेण म्रदय मृदूकुरु यथा दानोन्मुकं भवति ॥

विपथोवाजसातयेचिनुहिविमृधोजहि ।
साधन्तामुग्रनोधियः ॥

(अष्ट० ४. अध्या० ८. व० १७. ऋ० ४.)

विपथः । हे उग्र! अनभिभवनीय! नोऽस्मदर्थं वाजसातये धनलाभाय पथो विचिनुहि मार्गान् मार्गस्व । यैर्मार्गैर्गताः वयं धनं लभेमहि, तान् प्रदर्शय । तेषु च ये मृधः सङ्ग्रामकारिणस्तान् विजहि विनाशय । याः अस्माकं धियो धनं लभेमहीति मनोरथरूपास्ताः साधन्तां सिध्यन्तु ॥

परितृन्धिपणीनामारयाहृदयाकवे ।
अथेमस्मभ्यंरन्धय ॥

(अष्ट० ४. अध्या० ८. व० १७. ऋ० ५.)

परितृन्धि । हे कवे! पूषन्! पणीनां हृदयानि । आरा प्रतोदः, तां पूषा हस्ते बिभर्ति आयुधकृत्यार्थम् । तया परितृन्धि । तृदिर्हिंसाकर्मा । परितः पीडय यथा मृदूभवन्ति । परितृद्य च अथानन्तरम् ईम् एतानस्मभ्यं रन्धय वशीकुरु ॥

विपूषन्नारयातुदपणेरिच्छहृदिप्रियम् ।

अथेमस्मभ्यंरन्धय ॥

(अष्ट० ४. अध्या० ८. व० १८. ऋ० ६.)

विपूषन् । हे पूषन्! अस्माकं प्रियमिच्छ । किं तत् । पणेर्हृदि आरया वितुद । अथे गतम् ॥

आरिखकिकिराकृणुपणीनांहृदयाकवे ।

अथेमस्मभ्यंरन्धय ॥

(अष्ट० ४. अध्या० ८. व० १८. ऋ० ७.)

आरिख । हे कवे! पूषन्! पणीनां हृदयानि आरिख आरया समन्तालिख । आलिख्य च किकिरा किकिराणि । किरतेः 'इगुपधज्ञाप्रीकिरः कः' (३-१-१३५) इति के 'कृआदीनां के द्वे भवतः' इति द्विर्वचने कृते छान्दसोऽभ्यासे चुत्वाभावः । यथात्यर्थं धनानि विकिरन्ति तथा कुरु । अथे[१] ॥

यांपूषन्ब्रह्मचोदनीमारांबिभर्ष्याघृणे ।

तयासमस्यहृदयमारिखकिकिराकृणु ।

(अष्ट० ४. अध्या० ८. व० १८. ऋ० ८.)

यां पूषन्! । हे पूषन्! आघृणे! यामारां ब्रह्मचोदनीं ब्रह्मणोऽन्नस्य चोदयित्रीं दात्रीं, स्तोतॄणां वाभिलषितसम्पादनेन स्तुतिलक्षणस्य मन्त्रात्मकस्य ब्रह्मणः कारयित्रीम् । एवंभूतां याम् आरां त्वं बिभर्षि, तया समस्य सर्वस्य पणेरपि हृदयमारिख किकिरा कृणु ॥

यातेअष्ट्रागोओपशाघृणेपशुसाधनी ।

तस्यास्तेसुम्नमीमहे ॥

(अष्ट० ४. अध्या० ८. व० १८. ऋ० ९.)

या ते । हे पूषन्! आघृणे! या ते स्वभूता अष्ट्रा । 'अशू व्याप्तौ' । व्यापिनी । कासौ । प्रकरणादारा । कीदृशी । गोओपशा । गावो गमनयोगादश्वाः रथे युक्ताः । तानेत्य योपशेते प्रतोदनकाले । पशुसाधनी स्तोतॄणामभिमतस्य पश्वादेः साधयित्री । तस्याः सकाशात् ते सुम्नं त्वत्कर्तृकं सुखमीमहे याचामहे ॥

---

१. 'हे ॥ उत' क. पाठः.

उतनोगोषणिंधियमश्वसांवाजसामुत ।

नृवत्कृणुहिवीतये ॥

(अष्ट० ४. अध्या० ८. व० १८. ऋ० १०)

उत नः । उत अपि च । नः अस्माकं धियं धनप्राप्तिमनोरथरूपां बुद्धिम् । गोषणिं गवां सम्भक्त्रीं कृणुहि कुरु । तथाश्वसाम् । 'जनसनखनक्रमगमो विट्'(३-२-६७)। 'विड्वनोरनुनासिकस्याऽऽत्' (६-४-४१) । अश्वानां सम्भक्त्रीम् । (वाजसामन्नानां सम्भक्त्रीम् ।) वाजो धनं वा । उत अपि कृणुहि । वीतये । वीतिरशनकर्मा । अस्माकमुपभोगाय । नृवत् । यथा राजा तादृशो वा अन्यः स्वभक्तानां धियमुक्तलक्षणां करोति तद्वत् ॥

नष्टमधिजिगमिषन् मूढो वा 'सम्पूषन्' ।

संपूषन्विदुषानययोअञ्जसानुशासति ।

यएवेदमितिब्रवत् ॥

(अष्ट० ४. अध्या० ८. व० १९. ऋ० १.)

सम्पूषन् । तस्यैवार्षम् । हे पूषन्! विदुषा पुरुषेण सह मां संनय सङ्गमय । कीदृशा । यः अञ्जसार्जवेन अनुशासति अनुशास्ति सम्यगुपदिशति । यश्च य एवेदमिति ब्रवत् ब्रूयात् सन्देहस्थानेषु निश्चिनुयात् । अनुशासनप्रकारस्यैवायं प्रपञ्चः ॥

समुपूष्णागमेमहियोगृहाँअभिशासति ।

इमएवेतिचब्रवत् ॥

(अष्ट० ४. अध्या० ८. व० १९. ऋ० २.)

समु । उः पादपूरणः । पूष्णा सह वयं सङ्गमेमहि सङ्गच्छेमहि । कीदृशेन । यो गृहान् गृहाश्रमिणः आभिशासति अभिमुख्येन शास्ति इत्थमिदं कर्तव्यमिति । यश्चेमे अर्था एवमेवमिति च ब्रवत् ब्रूयात् । अर्थानां तत्त्वावधारणे क्षम इति यावत् ॥

पूष्णश्चक्रंनरिष्यतिनकोशोवपद्यते ।

नोअस्यव्यथतेपविः ॥

(अष्ट० ४. अध्या० ८. व० १९. ऋ० ३.)

पूष्णः। अस्य भगवतः पूष्णश्चक्रं रथचक्रं न रिष्यति न विनश्यति। कोशो दधिदृतिः। सोऽपि नावपद्यते नाधः पतति। उक्तं हि—'दृतेरिव ते वृकमस्तु सख्यम् अच्छिद्रस्य दधन्वतः' इति। न उ नो। उश्चार्थे। न च। अस्य पविः चक्रधारा व्यथते। एवंभूतोऽयं पूषेति स्तुतिः॥

योअस्मैहविषाविधमतंपूषापिमृष्यते।

प्रथमोविन्दतेवसु॥

(अष्ट० ४. अध्या० ८. व० १९ ऋ० ४.)

यो अस्मै। यः पुरुषोऽस्मै। विभक्तिव्यत्ययः। एनं पूषणम्। हविषा चरुपुरोडाशादिना। अविधत्। विधतिः परिचरणकर्मा। लङर्थे लङ्। वि(द?) धति परिचरति। तं पूषा नापि मृष्यते। 'मृष तितिक्षायाम' न्यत्र। इह स्वीक्षतेरर्थे। अपिरुपार्थे। नोपेक्षते। न केवलमेतावत्। बहुषु धनं लभमानेषु सः प्रथमो वसु विन्दते तस्मै पूर्वं ददाति यः पूषणं परिचरति॥

पूषागाअन्वेतुनःपूषारक्षत्वर्वतः।

पूषावाजंसनोतुनः॥

(अष्ट० ४. अध्या० ८. व० १९. ऋ० ५.)

पूषा गाः। नोऽस्माकं गाः पूषा अन्वेतु रक्षन्ननुगच्छतु। पूषैव अर्वतोऽश्वान् रक्षतु। वाजमन्नं हविर्लक्षणं नोऽस्माकं स्वभूतं पूषा सनोतु संभजतु। अस्मभ्यमन्नं ददात्वित्यन्ये॥

पूषन्नुप्रगाइहियजमानस्यसुन्वतः।

अस्माकंस्तुवतामुत॥

(अष्ट० ४. अध्या० ८. व० २० ऋ० १.)

पूषन्ननु। हे पूषन्! गाः प्रतिष्ठमानाः प्रान्विहि प्रकर्षेणानुगच्छ रक्षार्थम्। कस्य गाः। यजमानस्य सुन्वतः। नच केवलं तस्यैव। किन्तर्हि। त्वां स्तुवतामस्माकमपि॥

---

१. 'षणं प्रति च' घ. पाठः.

माकिर्नेशन्माकीं रिषन्माकीं संशारि केवटे ।

अथारिष्टाभिरागहि ॥

(अष्ट० ४. अध्या० ८. व० २०. ऋ० ७.)

माकिः । माकिरिति निषेधार्थीयः । तथा माकीमिति । हे पूषन्! त्वया रक्ष्यमाणानां गवां मध्ये काचिदपि माकिर्नेशत् । नशेर्लुङि पुषादित्वादङ् । 'नशिमन्योरलिट्येत्वम्' इत्येकारः[1] । मा नशत् नष्टा मा भूत् । माकीं रिषत् मा च रिष्टा हिंसिता भूत् । मा च केवटे कूपे काचिदपि संशारि शीर्णा भूत् मा पप्तत् । अथ । एवमित्यस्यार्थेऽयमथशब्दः । एवमरिष्टाभिर्गोभिरागहि आगच्छ ॥

शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम् ।

ईशानं राय ईमहे ॥

(अष्ट० ४. अध्या० ८. व० २०. ऋ० ८.)

शृण्वन्तम् । असद्याच्ञां शृण्वन्तं पूषणम् । इर्यम् । इरा अन्नं, तत्र साधुम् । अन्नवन्तम् । अनष्टवेदसमनष्टधनमनष्टप्रज्ञं वा । ईशानं सर्वस्य । शत्रन्तमेतत् । रायः धनानि ईमहे याचामहे । 'दुहियाचिरुधी'ति द्विकर्मकत्वम् ॥

पूषन्तव व्रते वयं न रिष्येम कदाचन ।

स्तोतारस्त इह स्मसि ॥

(अष्ट० ४. अध्या० ८. व० २०. ऋ० ९.)

पूषन् तव । हे पूषन्! तव व्रते सङ्कल्पे वर्तमानाः यथा त्वया सङ्कल्पितं तथा वर्तमानाः वयं कदाचन कदाचिदपि न रिष्येम रिष्टा न भवेम । किञ्च इह जीविते तव स्तोतारो वयं स्मसि यावज्जीवं त्वामेव स्तुमः ॥

परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् ।

पुनर्नो नष्टमाजतु ॥

(अष्ट० ४. अध्या० ८. व० २०. ऋ० १०.)

१. 'त्व' ख. पाठः. २. 'वत् त्वा' क. पाठः,

परिपूषा । नष्टस्य गवादेर्गच्छतः परस्तादग्रतः पूषा स्वं दक्षिणं हस्तं परिदधातु निरोधाय परितः स्थापयतु । ततश्च नष्टं गवादि नोऽस्मान् पुनराजतु । 'अज गतिक्षेपणयोः' । आगच्छतु ॥

महान्तमध्वानमेष्यन् प्रतिभयं वा 'सम्पूषन्नध्वनः' इति ।

सम्पूषन्नध्वनस्तिरव्यंहोविमुचोनपात् ।

सक्ष्वादेवप्रणस्पुरः ॥

(अष्ट० १. अध्या० ३. व० २४. ऋ० १.)

संपूषन् । कण्वस्यार्षम् । हे पूषन्! अध्वनो मार्गात् सन्तिर सम्यक् तारय । वि । उपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । अंहश्च विगमय । हे विमुचोनपात्! । कारणावस्थापन्नं जगत् सर्गकाले विमुञ्चतीति विमुक् ईश्वरः । तस्य पुत्रः प्रजापतिः । तस्य पुत्रः पूषा । अत इदमुच्यते हे विमुचोनपात्! । नपादिति पौत्राभिधानम् । अथवा चतुर्थस्याभिधानम् । तदा प्रजापतेः पुत्रः कश्यपः । तत्पुत्रः पूषा । किञ्च हे देव! नोऽस्माकं पुरः अग्रतः प्रसक्ष्व प्रकर्षेण संचस्व सेवस्व । अस्माकमग्रतो रक्षार्थं गच्छ ॥

योनःपूषन्नघोवृकोदुःशेवआदिदेशति ।

अपस्मतंपथोजहि ॥

(अष्ट० १. अध्या० ३. व० २४. ऋ० २.)

योऽनः । हे पूषन्! यः अघः पापो वृकः श्वापदो दुःशेवः । शेवमिति सुखनाम । दुःशब्दः प्रतिषेधार्थीयः । दुश्शेवमसुखं दुःखम् । तस्य कर्ता दुश्शेवः । नोऽस्मान्[1] आदिदेशति अस्मान् प्रति शब्दं करोति । तं वृकं पथोऽपजहि अपहत्य गमय । स्मेति पादपूरणः ॥

अपत्यंपरिपन्थिनंमुषीवाणंहुरश्चितम् ।

दूरमधिस्रुतेरज ॥

(अष्ट० १. अध्या० ३. व० २४. ऋ० ३.)

अपत्यम् । त्यं तं हुरश्चितम् । हुराश्चिदिति चोरनाम[2] । चित्तं चित् । 'ह्वृ कौटिल्ये' । कुटिलचित्तम् । मुषीवाणं मोषणपरम् । परिपन्थिनं मार्गं परितस्तिष्ठन्तम् ।

---

१. 'स्मान् अ', २. 'म ह्वृ' च. पाठः.

एवंभूतं दुरश्रितं सुतेर्मार्गाद् दूरम् अधि अप अज आक्षिप। अधिर्धात्वर्थानुवादी 'अधिपरी अनर्थकौ' (१-४-९३) इति॥

त्वंतस्यंद्वयाविनोघशंसस्यकस्यंचित्।

पदाभितिष्ठतपुंषिम्॥

(अष्ट० १. अध्या० ३. व० २४. ऋ० ४.)

त्वं तस्य। तस्येत्येकान्तरायामृचि प्रकृतस्य वृकस्य परामर्शः। हे पूषन्!। तस्य वृकस्य। द्वयाविनः। दंष्ट्रयोर्द्वयं विद्यते यस्य स द्वयावी। 'द्वयोभयानां दीर्घश्चे'ति विनि दीर्घश्च, यथा 'उभयाविन्नुपधेहि दंष्ट्रे'ति। अतिभीषणाभ्यां दंष्ट्राभ्यां युक्तस्य। अघशंसस्यानर्थमिच्छतः। कस्यचिद् यः कश्चिद् दृश्यते तस्य सर्वस्य वृकस्य। तपुषिं तापयित्रीं दंष्ट्रां पदा आत्मीयेन पादेनाभितिष्ठ त्वम्। अभिरधेरर्थे। अधितिष्ठ आक्राम। अन्ये तु तपुषिरिति शिरसोऽभिधानं मन्यन्ते॥

आतत्तेंदस्रमन्तुमःपूषन्नवोंवृणीमहे।

येनंपितॄनचोदयः॥

(अष्ट० १. अध्या० ३. व० २४. ऋ० ५.)

आ तत्। पूषन्! दस्र! दर्शनीय! शत्रूणां वोपक्षपयितः!। मन्तुमः!। मन्तुर्ज्ञानम्। हे तद्वन्!। 'मतुवसो रु सम्बुद्धौ छन्दसि' (८-३-१)। ते तव स्वभूतं तदवः पालनम्। वयमावृणीमहे। किन्तत्। येनावसा पितॄन् अस्माकम् अचोदयः प्रेरितवान् महत्सु प्रतिभयेषु अध्वसु गमितवानसि तदेव प्रार्थयामहे॥

अधानोविश्वसौभगहिंरण्यवाशीमत्तम।

धनानिसुषणाकृधि॥

(अष्ट० १. अध्या० ३. व० २५. ऋ० ६.)

अधानः। हे पूषन्! अध अपि च। नोऽस्मान्। विश्वसौभग!। सौभगं सौभाग्यम्। तद्विश्वं यस्य। हे तादृश!। हिरण्यवाशीमत्तम!। वाशीति वाङ्नाम। हिरण्यशब्दो यौगिकः। भक्तान् प्रति हिता रमणीया च वाणी हिरण्यवाशी। हे अतिशयेन तद्वन्!। धनानि, यानि लिप्सवो वयं प्रस्थिताः तानि। सुषणा। 'वन षण सम्भक्तौ'। सुसम्भजानि सुलभानि। कृधि कुरु॥

अति नः सश्चतो नय सुगा नः सुपथा कृणु ।
पूषन्निह क्रतुं विदः ॥

(अष्ट० १. अध्या० ३. व० २५. ऋ० ७.)

अति नः । हे पूषन् ! नः अस्मान् । सश्चतः । गतिकर्मायम् । पथि गच्छतः । अतिनय यदतिनेतव्यं वृकादि तदतिक्रामय । अतिनयंश्च न येन केनचित् पथा । किन्तर्हि । सुपथा शोभनेन पथा । कोऽर्थः । सुगा । तृतीयैकवचनस्याकारः । सुखेन गम्यते यत्र तादृशेन सुपथा नोऽस्मान् कृणु । क्रियासामान्यवचनः करोतिरतिनये द्रष्टव्यः । अतिनय । किञ्चेह पथि क्रतुमात्मीयं कर्म रक्षारूपं विद जानीहि । त्वदीयं ह्येतत् कर्म परिरक्षणं नाम ॥

अभि सूयवसं नय न नवज्वारो अध्वने ।
पूषन्निह क्रतुं विदः ॥

(अष्ट० १. अध्या० २. व० २५. ऋ० ८.)

अभि । यवसमित्यन्ननाम । तत् सुष्ठु लभ्यते यत्र तत् सूयवसम् अध्वानम् अस्मानभिनय अभिगमय । किमर्थमध्वनः सूयवसत्वं प्रार्थ्यते । यस्मान्नवज्वारः पुरुषोऽध्वने न प्रभवति पथि गन्तुं न शक्नोति । ज्वारो बुभुक्षा सन्तापहेतुत्वात् । नवोऽभिनवो ज्वारो यस्य स नवज्वारः अत्यन्तबुभुक्षितः । पूषन्निह गतम् ॥

शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् ।
पूषन्निह क्रतुं विदः ॥

(अष्ट० १. अध्या० ३. व० २५. ऋ० ९.)

शग्धि । शग्धीति याच्ञाकर्मान्यत्र । इह तु तत्पूर्वके दाने वर्तते इति द्रष्टव्यम् । शग्धि देहि । मा चाल्पम् । किन्तर्हि । पूर्धि पूरय पूर्णं देहि । प्रयंसि च प्रकर्षेण च यच्छ । पौनःपुन्यं प्रकर्षः । मा सकृद् दत्त्वा विरंसीः, शिशीहि । श्यतिः संस्कारकर्मा । देयं च संस्कुरु । हेयपरित्यागेनोपादेयं देहि । उदरं च त्वदीयं प्रासि अस्माभिर्दत्तैर्हविर्भिः पूरय । अस्माकं वोदरं पूरय यथा पथि न क्षुध्येम । पूषन्निह गतम् ॥

---

१. 'ते । ष' ग. पाठः.

नपूषणंमेथामसिसूक्तैरभिगृणीमसि ।

वसूंनिदस्ममीमहे ॥

(अष्ट० ९. अध्या० ३. व० २५. ऋ० १०.)

न पूषणम् । मेथिराक्रोशकर्मा । पूषणं वयं न मेथामसि नाक्रोशामः नायोग्यं स्तुमः । किन्तर्हि । सूक्तैः शोभनैर्वचनैरभिगृणीमसि अभिष्टुमः । अभिगीर्य च दस्मं दर्शनीयं पूषणं वसूनि वयमीमहे याचामहे ॥

अथ समावर्तनमन्त्राः । अहते वाससी आच्छादयति 'युवं वस्त्राणी'ति —

युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामन्तवोहसर्गाः ।

अवातिरतमनृतानिविश्वंऋतेनमित्रावरुणासचेथे ॥

(अष्ट० २. अध्या० २ व० २२ ऋ० १.)

युवं वस्त्राणि । दैर्घतमसी । हे मित्रावरुणा ! मित्रावरुणौ ! युवं युवाम् । (पीवसा ।) पीवःशब्दः पीवरवचनः । द्विवचनस्याकारः । पीवानौ सन्तौ । वस्त्राणि वसाथे आच्छादयथः । ययोर्युवोर्युवयोर्मन्तवो मननानि ज्ञानानि । हशब्दश्चार्थे भिन्नक्रमः । सर्गाश्च । सर्गा उत्साहाः ते च । अच्छिद्राः अव्यवच्छिन्नाः । यौ च युवां विश्वान्यनृतानि अवातिरतम् । वधकर्मायम् । लडर्थे लङ् । अवतिरथः हथः । इदमेव चानृतानां हननं यत् तद्वादिनां हननम् । यौ च ऋतेनोदकेन वृष्टिलक्षणेन सचेथे संबध्येथे । तौ युवां वस्त्राणि वसाथे । युवामिवाहमपि वस्त्राणि वसै इत्युपस्कारेण योज्यम् ॥

अञ्जनेनाङ्क्ते 'अश्मनः' ।

अश्मनस्तेजोऽसि चक्षुर्मे पाहि ॥

हे अञ्जन ! त्वम् । अश्मनः । तद्वत्यत्ययमुपचारः । अश्मवतः पर्वतस्य हिमवतः । हिमवांश्चात्र पर्वतः । 'यदाञ्जनं त्रैककुदं जातं हिमवतस्परि' इत्यापस्तम्बीयानां मन्त्रदर्शनात् । अश्मनः त्वं तेजोऽसि सारांशोऽसि । स त्वं चक्षुर्मे पाहि । इन्द्रियाभिप्रायमेकवचनम् । चक्षुषी रक्ष ॥

मणिकुण्डले आबध्नीत 'अश्मनः' ।

अश्मनस्तेजोऽसि श्रोत्रं मे पाहि ॥

हे मणिकुण्डल ! अश्मनः अश्मवतो मेर्वादेस्त्वं तेजोऽसि । तत् त्वं श्रोत्रं मे पाहि ॥

स्रजमपि नह्यति 'अनार्ता' ।

अनार्तास्यनार्तोऽहं भूयासम् ।

हे स्रक्! त्वम् अनार्तासि । अहमपि त्वद्धारणादनार्तो भूयासम् ॥

उपानहावातिष्ठति 'देवानाम्' ।

देवानां प्रतिष्ठे स्थः सर्वतो मा पातम् ॥

हे उपानहौ! युवां देवानामपि प्रतिष्ठे स्थः । प्रतिः प्रशब्दस्यार्थे । प्रस्थानसाधने भवथः । ते युवां सर्वतो मां पातं रक्षतम् ॥

'छत्रमादत्ते दिवः' ।

दिवश्छद्मासि ॥

हे छत्र! त्वं दिवः द्युस्थस्यातपवर्षादेः छद्म छादयितृ असि ॥

वैणवं दण्डमादत्ते 'वेणुः' ।

वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहि ।

हे दण्ड! त्वं वेणुरसि । विकारे अयं प्रकृतिशब्दः । वैणवोऽसि । वानस्पत्यः । वनस्य पाता वानस्पत्यः । यद्वा महान् । स त्वं सर्वतश्च सर्पादेर्मा पाहि ॥

'आयुष्यमि'ति सूक्तेन दर्शर्चेन मणिं कण्ठे प्रमुञ्चति । तत्र प्रत्यृचमृषयः—

"सनाकः सनकश्चैव सनातनसनन्दनौ ।[2]
सुखः सोन्यः ससुः सुश्रीः सुवाक् सर्वश्च ते दश ॥"[3]

इति । सर्वेऽर्मा दाक्षायणगोत्राः ।

आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् ।
इदं हिरण्यं वर्चस्यं जैत्रायाविशतादु माम् ॥

आयुष्यम् आयुषो निमित्तम् । तथा वर्चस्यं रायस्पोषं धनस्य पोषयितृ । औद्भिदम् । उद्भित्प्रकाशकरं तदेवौद्भिदं यशस्करम् । एवम्भूतमिदं हिरण्यं वर्चस्यं दीप्तिमत् जैत्राय जयाय मामाविशतात् । उः पादपूरणः ॥

---

१. 'पात मा', २. 'नो' ष. पाठः. ३. 'सख्सः सो' ङ. पाठः.

उच्चर्वाजि पृतनाषाट् सभासाहं धनञ्जयम् ।
सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन् समाहिताः ॥

उच्चैर्भूता वाजिनो यत्र तदुच्चैर्वाजि, उत्कृष्टानामश्वानां प्रापयितृ । पृतनाषाट् । 'षह मर्षणे' । अभिभवे छन्दसि । पृतनानां शत्रुसेनानामभिभवितृ । सभासाहम् । सभायाश्चाभिभवितृ । धनञ्जयं शत्रुधनानां जेतृ । एवम्भूतं तावदिदं हिरण्यम् । न चैतावदेव । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन् समाहिताः प्रतिष्ठिताः ॥

शुनमहं हिरण्यस्य पितुर्नामेव जग्रभ ।
तेन मां सूर्यत्वचमकरं पूरुषु प्रियम् ॥

शुनमिति सुखनाम । शुनं सुखकरम् । हिरण्यस्य नाम सुवर्णं काञ्चनमित्यादि । अहं जग्रभ । लडर्थे लिट् । 'हृग्रहोर्भश्छन्दसि' । गृह्णामि उच्चारयामि । पितुरिव । यथा पितुर्नाम पुत्राः स्नेहात् पुनः पुनः कीर्तयन्ति तद्वत् । यस्य नाम गृह्णामि तेन हिरण्येन मणिरूपेण मां सूर्यत्वचं सूर्यवदुज्ज्वलरूपम् । पूरुषु । षष्ठ्यर्थे सप्तमी । पूरुशब्दो मनुष्यनाम । बहुशब्दपर्यायस्य वा पुरुशब्दस्य दीर्घश्छान्दसः । मनुष्याणां बहूनां वा । प्रियमकरं करोमि ॥

सम्राजं च विराजं चाभिष्टिर्या च मे ध्रुवा ।
लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र ! संसृज ॥

आद्यस्य पादस्य चतुर्थेन सम्बन्धः । या । चशब्दो वक्ष्यमाणापेक्षया । या च । मे ध्रुवा नित्यानपायिनी पुत्रपश्वादिविषया । अभिष्टिः । पररूपं कतन्तवत् । अभ्येषणा प्रार्थना । या च राष्ट्रस्य मुखे लक्ष्मीः राष्ट्रे लक्ष्मीरिति यावत् । तयाभिष्ट्या लक्ष्म्या च हे इन्द्र ! मां सम्राजं च विराजं च कृत्वा संसृज । सम्यग्दीप्तः सम्राट् । विविधं दीप्तो विराट् । आधिपत्यस्यावान्तरविशेषो वा । 'साम्राज्यं भौज्यं स्वाराज्यं वैराज्यमि'ति दर्शनात् ॥

अग्नेः प्रजातं परि यद्धिरण्यममृतं जज्ञे अधि मर्त्येषु ।
य एनद्वेद स इदेनदर्हति जरा मृत्युर्भवति यो बिभर्ति ॥

यद्धिरण्यमग्नेः परिजज्ञे उदपद्यत । अग्निं हि हिरण्यरेतसमुपचरन्ति । वसिष्ठोऽप्याह— 'अग्नेरपत्यं प्रथमं हिरण्यमि'ति । जनित्वा च मर्त्येषु प्रजातं भोग्यतया । अधिः पादपूरणः । अमृतममृतत्वस्य हेतुम् । 'हिरण्यदा अमृतत्वं

भजन्ते' इति दर्शनात् । अपरे आहुः—अग्ने परिप्रयातं सर्वतो निर्गतं यद्धिरण्यममृतं मर्त्येष्वधिजज्ञे । अधिः सप्तम्यर्थानुवादीति । एनदुक्तलक्षणं हिरण्यं यो वेद तत्त्वतो जानाति स इत् स एव एनदर्हति स एवास्य योग्यः । यस्तु बिभर्ति तस्य । जरा । तृतीयैकवचनस्याकारः । जरयैव । मृत्युर्भवति नाकाले । अपरः पाठः 'जरामृत्यू हरती'ति । यो बिभर्ति स जरां मृत्युं च हरति ॥

यद्वेद राजा वरुणो यद्‌ु देवी सरस्वती ।
इन्द्रो यद्वृत्रहा वेद तन्मे वर्चस आयुषे ॥

यद्धिरण्यं वरुणादयो विदन्ति, तन्मे वर्चसे आयुषे च भवतु ॥

**न तद्रक्षांसि न पिशाचास्तरन्ति देवानामोजः प्रथमजं ह्येतत् । तद् यो बिभर्ति दाक्षायणं हिरण्यं स देवेषु कृणुते दीर्घमायुः । स मनुष्येषु कृणुते दीर्घमायुः ॥**

तदुक्तगुणं हिरण्यं रक्षांसि न तरन्ति नाक्रामन्ति । नापि पिशाचाः । किम् । हि । यस्मादेतद् देवानाम् । एकस्मिन्नेव बहुवचनम् । देवस्याग्नेः । प्रथमजमोजो वीर्यम् । हिरण्यरेता ह्यग्निः । 'अग्नेरपत्यं प्रथमं हिरण्यमि'ति वासिष्ठः । एवम्भूतं हिरण्यं यो बिभर्ति । दाक्षायणम् । द्रष्टा दाक्षायणः । तत्सम्बन्धाद् दाक्षायणम् । दाक्षायणेन सूनुना मया स्तुतं धृतं वा । यो बिभर्ति स देवेषु प्रविष्टो देवभूयं गतः दीर्घमायुः कृणुते प्राप्नोति । स एव च मनुष्येष्वपि दीर्घमायुः कृणुते । अस्मिंश्चामुष्मिंश्च चिरं तिष्ठति ॥

**यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः ।
तन्म आबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासम् ॥**

यद्धिरण्यमाबध्नन् आबद्धवन्तो दाक्षायणाः मद्गोत्रजाः पित्रादयः । कस्यार्थाय । शतानीकाय । शतानीको नाम राजा सत्राजितः पुत्रः । 'शतानीकं सत्राजितमभिषिषेचे'ति दर्शनात् । तस्यार्थाय तस्य रक्षणार्थं तदङ्गेष्विति । सुमनस्यमानाः । भृशादिरयम् । सुमनायमानाः । तन्मे मह्यमाबध्नामि । (शतशारदाय) शतं शरदो भाविने मह्यम् । शतं शरदो जीव्यासमिति मदङ्गेष्वाबध्नामि । यथा आबन्धने आयुष्मान् जरदष्टिश्चासं स्याम् । जरदवस्थायाः प्राप्तिः, तस्यां प्रकाशमानाशनं वा यस्य स जरदष्टिः । शतशारदायेत्यनेनैव सिद्धे पुनर्वचनमादरार्थम् ॥

१. 'वा' च. पाठः,

घृतादुल्लुप्तं मधुमत् सुवर्णं धनञ्जयं धरुणं धारयिष्णु ।
पृणक् सपत्नानधरांश्च कृण्वदारोह मां महते सौभगाय ॥

घृतात्। 'घृ क्षरणदीप्त्योः'। दीप्तादग्नेरुल्लुप्तम्। 'लुप्लृ छेदने'। उच्छिन्नमुद्धृतम् अग्नेः प्रयातमित्युक्तम्। केचिदुकारात् परं रेफमधीयते। तत्र वर्णव्यत्ययः। मधुमत् मधुस्वादैर्भक्ष्यभोज्यपेयैस्तद्वत्। हिरण्यवतो हि सर्वं सुलभम्। सुवर्णं हिरण्यम्। धनञ्जयं शत्रुधनानां जेतृ। धरुणं धार्यम्। धारयिष्णु सर्वस्य प्राणिजातस्य धारणशीलम्। एवम्भूतमिदं सुवर्णमित्येकः। परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। हे सुवर्ण! सपत्नान् मम शत्रूनधरान् मत्तो निकृष्टान् कृण्वत् कुर्वत्। पृणक्। पृणक्तिर्वधकर्मा। 'पृणक्। पिपृंशम्वरम्' इत्यादिषु दर्शनात्। ततः 'छन्दसि लुङ्लङ्लिटः' (३ ४-६) इति लोडर्थे लङ्। सिपो हल्ङ्यादिलोपः। 'बहुलं छन्दस्यमाङ्योगेऽपि' (६ ४-७५) इत्यडभावः। पृङ्ग्धि जहि। चशब्दः आरोह इत्यनेन सम्बन्धनीयः। मामारोह च कण्ठे। किमर्थम्। महते सौभगाय। महत् सौभाग्यं मम यथा स्यादिति ॥

प्रियं मा कुरु देवेषु प्रियं राजसु मा कुरु।
प्रियं विश्वेषु भूतेषु मयि धेहि रुचा रुचम् ॥

देवेष्वित्यादिषु षष्ठ्यर्थे सप्तमी। हे सौवर्णमणे! देवादीनां प्रियं मां कुरु। त्वदीयया च रुचा मयि रुचं धेहि स्थापय ॥

तिष्ठन् समिधमादध्यात् 'स्मृतं निन्दा च विद्या च'त्यादि—

स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी ।
इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम् ॥

स्मृतं कर्तव्यविषयं स्मरणम्। निन्दा निन्द्यविषया। विद्या वेदितव्यस्य ज्ञानम्। श्रद्धा कर्तव्यविषया। प्रज्ञा प्रकृष्टज्ञानमात्मविषयम्। पञ्चमीत्यनुवादः। इष्टं यागो देवपूजा। दत्तं दानं भिक्षालब्धानामाचार्यायाम्। अधीतं वेदतदङ्गानामध्ययनम्। कृतमाचार्यवचनस्यानुष्ठानं समिदाधानादि च। सत्यं यथादृष्टार्थवादित्वम्। श्रुतं श्रवणं वेदादीनामर्थज्ञानम्। व्रतं वर्ज्यानां वर्जनम्। यान्येतानि स्मृतादीनि व्रतान्तानि द्वादशानुक्रान्तानि। यच्च तन्मे सर्वं व्रतमिति वक्ष्यमाणमपेक्षते ॥

---

१, २, ३. 'वृ' घ. ङ. पाठः. ४. 'चम्। ष' ङ. पाठः. ५. 'रु ब्रह्मणे। ब्राह्मणशब्दस्य आदेर्ह्रस्वश्छान्दसः। जातावेकवचनम्। त्वदी' ख. ङ. पाठः. ६. 'नियच्च' घ. पाठः. ७. 'पं तदुभयम' ङ. पाठः.

यदग्ने सेन्द्रस्य सऋषिकस्य सऋषिराजस्य सपितृकस्य सपितृराजस्य साकाशस्य सातीकाशस्य सानूकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मनि व्रतं तन्मे सर्वं व्रतम् इदमहमग्ने सर्वव्रतो भवामि स्वाहा ॥

यदग्ने इति । अत्र अग्नेश्छान्दसो विसर्जनीयस्य लोपः । यच्चाग्नेर्व्रतं कर्म । 'त्वमग्ने! व्रतपा असी'त्यादिषु दृष्टम् । सेन्द्रस्येत्यादि अग्नेर्विशेषणम् । इन्द्रादिभिः सहितस्याग्नेर्यद् व्रतमिति । तत्रेन्द्रस्य व्रतं देवानां प्रीणनम् । ऋषीणां तपस्सहत्वम् । ऋषिराजाः वसिष्ठादयः । तेषामपि तत्रैव प्रकर्षः । पितृणां नियतभोजित्वं ब्रह्मचर्यं च । श्राद्धादिषु दत्तमेव हि ते भुञ्जते । स्त्रीपरिहारश्च तेषामस्ति । पितृराजो यमः । तस्य व्रतं समत्वम् । आकाशस्यावकाशदानम् । अतीकाशादय आकाशस्यैव प्रभेदाः । अतीकाशो जालकादिच्छिद्रगतः । 'दिक्ष्वतीकाशान् करोती'ति यजुष्यतीकाशा इति दर्शनात् । अनूकाशो महाच्छिद्रगतः । प्रतीकाशस्ततोऽपि महाच्छिद्रगतो महाकाशप्रतिमः[1] । एषामप्यवकाशदानमेव व्रतम् । देवानां दातृत्वादि । मनुष्याणां प्रियवचनादि । गन्धर्वाणां स्तुतिः । अप्सरसां परिचरणे चातुर्यम् । आरण्याः पशवो मृगाः । तेषां व्रतं हिंस्रत्वम् । ग्राम्याः गावः । तेषां व्रतम् अहिंस्रत्वम् । सिंहादीनामग्रहणं प्रकरणानुगुण्याभावात् । एवमिन्द्रादिभिः सहितस्याग्नेर्यद् व्रतं, यच्च मे आत्मन आत्मनि व्रतं मयैवोत्प्रेक्षितम् आचार्येणान्यार्थं प्रेषितस्य तदुपयोगिनोऽर्थस्याप्याहरणादि, तत् सर्वं मे व्रतम् । एवमहं सर्वव्रतः उक्तैः सर्वैर्व्रतैस्तद्वान् भवामि । हे अग्ने ! तुभ्यं स्वाहा । यत् त्वयि समिदाधानादि तदेवंभूतस्य मे भवनमितीदंशब्दस्यार्थः । यथेदं गम्यते, इदं सङ्क्रमणं क्रियते इति ॥

'ममाग्ने वर्च'[2] इति प्रत्यृचं समिधोऽभ्यादध्यात् —

ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेन्धानास्तन्वंपुषेम ।

मह्यंनमन्तांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम ।

(अष्ट० ८. अध्या० ७. व० १५. ऋ० १.)

विहव्यस्यार्षम् । हे अग्ने! त्वत्प्रसादाद् विहवेषु मम वर्चोऽस्तु ।

१. 'हाकाशप्रतिमः' ख. ग. पाठः. २. 'ति च । विह' घ. ङ. पाठः.

विहवाः सङ्ग्रामाः । यज्ञा वा, विविधं ह्वयन्ति तत्रेति । वर्चो दीप्तिः । विहवेषु दीप्त उज्ज्वलो भूयासम् । तथा त्वा त्वामिन्धाना वयम् । 'अस्मदो द्वयोश्च' (१-२-५९) इति एकस्मिन् बहुवचनम् । तथाच ममेति पूर्वत्रैकवचनम् । तन्वं तनूं पुषेम पुष्येम । पुष्टाङ्गा भवेम क्षीराद्युपयोगेन । 'श्रियमिच्छेद्धुताशनात्' इति । तथा त्वत्प्रसादान्मह्यं चतस्रोऽपि प्रदिशः प्रधानदिशो नमन्तां वश्याः भवन्तु । तत्रस्थेषु वश्येषु ता वश्या इत्युपचारः । तथा त्वयाध्यक्षेण स्वामिना पृतनाः शत्रुसेनाः वयं जयेम ॥

ममदेवाविहवेसन्तुसर्वइन्द्रवन्तोमरुतोविष्णुरग्निः ।

ममान्तरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मिन् ।

(अष्ट० ८. अध्या० ७. व० १५ ऋ० २.)

मम देवाः । विहवे सङ्ग्रामे यज्ञे वा सर्वे देवाः मम सन्तु मत्पक्षे भवन्तु । के ते । इन्द्रवन्त इन्द्रेण सहिताः । मरुतो विष्णुरग्निश्च । तथा अन्तरिक्षं ममास्तु । कीदृशम् । उरुलोकम् । लोकयन्त इति लोका नक्षत्राणि देवगृहाः । 'देवगृहा वै नक्षत्राणि सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणी'त्येवं स्तुतानि । बहुभिः सुकृतां विमानैर्युक्तमन्तरिक्षमपि प्राणादूर्ध्वं मम भोग्यमस्तु । मह्यं मामुद्दिश्य वातः पवतामावातु । कदा । कामेऽस्मिन् । यदा मे कामः पवतां वा त इति तदा ॥

मयिदेवाद्रविणमायजन्तांमय्याशीरस्तुमयिदेवहूतिः ।

दैव्याहोतारोवनुषन्तपूर्वेरिष्टाःस्यामतन्वासुवीराः ।

(अष्ट० ८. अध्या० ७. व० १५. ऋ० ३.)

मयि देवाः । सर्वे देवाः द्रविणं धनं बलं वा । मयि । विभक्तिव्यत्ययः । मह्यम् । आयजन्तामाभिमुख्येन ददतु । आशीः प्रार्थना । सा च मय्यस्तु । सत्येति गृह्यते । देवहूतिर्देवानामाह्वानम् । सा च मयि सत्यास्तु । किञ्च मयि दैव्याः देवेषु भवा होतारः । अग्निर्वै देवानां होता तदधिष्ठितो मानुषो होता प्रवर्तते । इह तु बहुवचननिर्देशादग्निमुखानां सर्वेषामेव देवानां ग्रहणम् । अग्न्यादयो देवाः पूर्वे वनुषन्त । 'वन षण सम्भक्तौ' । सम्भजन्ताम् । किम् ।

१. 'ग्र' ष. पाठः.

मदीयं यज्ञम् । यज्ञान्तरगमनात् पूर्वं मदीयं यज्ञमागच्छन्तु । वयं च सुवीराः सुपुत्राः सन्तस्तन्वा, जातावेकवचनं, तनूभिर्मम पुत्रादीनां च शरीरैः अरिष्टाः अहिंसिताः स्याम ॥

मह्यंयजन्तुममयानिहव्याकूतिःसत्यामनसोमेअस्तु ।

एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचतानः ॥

(अष्ट० ८. अध्या० ७. व० १५. ऋ० ४)

मह्यं यजन्तु । मदर्थं यजन्तु ऋत्विजः मम स्वभूतानि यानि हव्यानि तैः । मे मम मनसो या आकूतिरभिप्रायोऽभ्युदियामिति सा सत्यास्तु । देवानां प्रसादेनाहं कतमच्चन किञ्चिदप्येनो मा निगां नियमेन मा प्रापम् । हे विश्वे-देवाः ! यूयं च नो मह्यम् अधिवोचत । पक्षपातेन वचनमधिवचनम् । दृश्यते हि 'यद् ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधिब्रूयादि'ति ॥

देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वम् ।

माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन् ॥

(अष्ट० ८ अध्या० ७. व० १५ ऋ० ५.)

देवीः षट् । आद्ये पादे दिशः प्रार्थ्यन्ते । हे देवीः ! देव्यः !। षट्, प्राच्याद्याश्चतस्रः ऊर्ध्वा अधरा चेति । उर्वीः ! उर्व्यः ! । त्रीण्यप्यामन्त्रितानि । नोऽस्मभ्यम् उरु प्रभूतं धनं कृणोत कुरुत दत्त । अपर आहुः — 'षण्मोर्वीरंहसस्पान्तु द्यौरि'ति निर्दिष्टा द्यौरादयः षड् देव्यः इति । हे विश्वे-देवाः ! यूयं चेह कर्मणि वीरयध्वं वीरान् नः कुरुत । युष्मत्प्रसादाच्च वयं प्रजया पुत्रपौत्रादिकया मा हास्महि । 'ओहाक् त्यागे' । कर्मणि लुङ् । त्यक्ता मा भूम । मा चात्र तनूभिः । पुत्राद्यपेक्षं बहुवचनम् । शरीरैरपि मा हास्महि । हे सोमराजन् ! त्वत्प्रसादाद् वयं द्विषते मा रधाम । रधिर्वशीकरणकर्मा । शत्रोर्वश्याः मा भूम ॥

अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिनस्त्वम् ।

प्रत्यञ्चोयन्तुनिगुतःपुनस्तेऽमैषांचित्तंप्रबुधांविनेशत् ॥

(अष्ट० ८. अध्या० ७. व० १६. ऋ० ६.)

अग्ने मन्युम् । हे अग्ने ! त्वं परेषां मन्युं मद्विषयं क्रोधं प्रतिनुदन् तानेव प्रतिप्रेरयन् अदब्धोऽहिंसितः केनापि गोपाः गोपायिता च स्वभावतो नः परिपाहि सर्वतो रक्ष । ते च परे त्वया प्रतिनुत्तमन्यवः सन्तः पुनः प्रत्यञ्चो यन्तु यान्तु यथेतः प्रतिगच्छन्तु । किं कुर्वन्तः । निगुतः । 'गु पुरीषोत्सर्गे' । क्विप् । भीत्या पुरीषमुत्सृजन्तः, अत्यन्तभीताः । एषां च शत्रूणां चित्तं प्रबुधाम् । क्विबन्तात् षष्ठी । प्रबुद्धानां जाग्रतामेव सताम् । अमा सहैव विनेशद् विनश्यतु । अन्येषां चित्तं स्वपतां नश्यति, एषां तु प्रबोधदशायामेव चित्तं नश्यत्विति ॥

धाताधातृणांभुवनस्ययस्पतिर्देवंत्रातारमभिमातिषाहम् ।

इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपान्तुयजमानंन्यर्थात् ।

(अष्ट० ८. अध्या० ७. व० १६. ऋ० ७)

धाता । जगतो ये धातारो मरीच्यादयः प्रजापतयः, तेषामपि धाता ब्रह्मा भुवनस्य भूतजातस्य यः पतिः । देवम् । प्रथमार्थे द्वितीया । स इति चाध्याहार्यम् । स देवः । त्रातारं त्राता । अभिमातिषाहम् अभिमातिषाट् । अभिमातयः शत्रवस्तेषां सोढा अभिभविता । स तावदेकः । अश्विनोभा अश्विनावुभौ । बृहस्पतिर्देवाश्चान्ये । इमं यज्ञं क्रियमाणमिदं कर्म, यजमानं च मां न्यर्थात् । अर्तेर्भावे थल्प्रत्ययः । निशब्दो नीचैर्भावे । नीचैर्गमनात् पान्तु । वैगुण्यनिमित्तं कर्मणो नीचैर्गमनम् । यजमानस्य तन्निमित्तो नरकपातः । यथा तदुभयमपि न भवति, तथा ब्रह्मादयः पान्तु ॥

उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः ।

सनःप्रजायैहर्यश्वमृळयेन्द्रमानोरीरिषोमापरादाः ।

(अष्ट० ८. अध्या० ७. व० १६. ऋ० ८.)

उरुव्यचाः । विचतिर्व्याप्तिकर्मा । उरुशब्दो बहुपर्यायः । बहूनां देशानां व्यापको वर्षणेन उरुव्यचाः । इन्द्रो नोऽस्मभ्यं महिषः । महन्नामैतत् । महानाकारप्रभावाभ्याम् । शर्म सुखम् । यंसद् । यमेर्दानकर्मणः पञ्चमे लकारे रूपम् । यच्छतु ददातु अस्मिन् मदीये हवे आह्वाने सति मया आहूतः सन् । पुरुहूतः । पुरुशब्दो बहुपर्यायः । बहुभिर्यजमानैस्तत्र तत्र यज्ञे हूतः । पुरुक्षुः । 'क्षु शब्दे' । बहुशब्दः । लोकेऽत्यन्तं शब्दितः कीर्तिमान् । परो-

१. 'वा' ख. पाठः.

ऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। य एवमुक्तगुणः स त्वं नोऽस्माकं प्रजायै। विभक्तिव्यत्ययः। प्रजाम्। हे हर्यश्व! मृळय सुखय। मा च नः अस्मान् रीरिषः हिंसीः। हे इन्द्र! मा च परादाः। अरक्षारूपं दानं परादानम्। हिंसितृभ्यो मा दाः॥

येनः॑ स॒पत्ना॒ अप॒ ते भ॑वन्त्विन्द्रा॒ग्निभ्या॒मव॑ बाधामहे॒ तान्।

वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒स्पृशं॑ मो॒ग्रं चेत्ता॑रमधिरा॒जम॑क्रन्॥

(अष्ट० ८. अध्या० ५. व० १६. ऋ० ९)

ये नः। अस्माकं ये सपत्नाः शत्रवस्तेऽपभवन्तु अपगता भवन्तु। तत्र हेतुः – तान् वयमिन्द्राग्निभ्यामवबाधामहे तेषामवबाधने इन्द्राग्नी प्रयुञ्ज्महे। वस्वादयश्च मामुपरिस्पृशादिगुणविशिष्टम् अक्रन् कुर्वन्तु। वसवोऽष्टौ। रुद्रा एकादश। आदित्या द्वादश। उपरिलोकं स्वर्गं स्पृशति प्राप्नोति इत्युपरिस्पृक्। उग्रोऽनभिभवनीयः। चेत्ता चेतिता ज्ञाता। अधिराजोऽधिपतिः, अधिकं वा दीप्तः॥

उत्तरा यजुर्वेदे पठ्यते। अस्माकं खैलिकी॥

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः।

इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा॥

इन्द्रं वयममुतो द्युलोकादर्वाञ्चमस्मदभिमुखं हवामहे आह्वयामः। य इन्द्रो गोजित् पणिभिरपहृतानां देवगवीनां जयेन प्रत्याहर्ता। अत्रेतिहासः 'किमिच्छन्ती सरमे'त्यत्र द्रष्टव्यः। धनजित् हिरण्यादेः शत्रुधनस्य जेता। अश्वजित् अश्वानां च यो जेता। परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। हे हरिवः! हरिभिर्हरितवर्णैरश्वैस्तद्वन्! । इमं नः अस्माकं यज्ञं विहवे विविधाह्वाने सति जुषस्व। अस्य। विभक्तिव्यत्ययः। अस्मिन् यज्ञे। त्वा मेदिनं कुर्मः। हूयमानानां समिधादीनां रसांशो मेदः। 'ञिमिदा स्नेहने'। घञन्तः। तेन तद्वन्तं कुर्मः॥

समावर्तनानन्तरं गुरुगृहाद् गन्तुं गुरोरनुमननमाददानस्य शिष्यस्य वचनमाचार्यं नाम्नोपांशु संबोध्य 'इदं वत्स्यावो भोः' इति।

इदं वत्स्यावो भोः।

---

१, 'ग' घ. पाठः, २. 'न्तीत्यत्र' ख, ग. पाठः

हे देवदत्त! भोः! इदं वत्स्यावः । केवलोऽपि वसिर्विपूर्वस्यार्थे द्रष्टव्यः । पृथग्भावेन वासो विवासः । एतावन्तं कालं सहोषितौ स्वः । अत ऊर्ध्वं विवत्स्यावः । इदंशब्देन आख्यातगता विवासक्रिया निर्दिश्यते । इदं विवसनं करिष्याव इति, यथेदं गम्यत इति ॥

'प्राणापानयोरि'त्यादिकं मन्त्रमाचार्य आह—

प्राणापानयोरुरुव्यचास्त्वया मपद्ये देवाय सवित्रे परिददामि ।

प्राणापानयेरिति सप्तमी । हे शिष्य! त्वया । विभक्तिव्यत्ययः । त्वम् । उरुव्यचाः बहुनो जीवितस्य व्याप्ता सन् । प्रपद्ये । पुरुषव्यत्ययः । प्रपद्यस्व । प्रपद्यतिरयं प्रतितिष्ठतेरर्थे । अनेकार्था हि धातवः । प्राणापानयोः प्रतितिष्ठ । देवाय सवित्रे त्वामहं परिददामि रक्षार्थं ददामि । अतः परं स एक एव ते रक्षकः ॥

'आ मन्द्रैरिन्द्र! हरिभिरि'ति च ।

आमन्द्रैरिन्द्रहरिभिर्याहिमयूररोमभिः ।

मात्वाकेचिन्नियमन्विंनपाशिनोतिधन्वेवताँइहि ॥

(अष्ट० ३. अध्या० ३. व० ९. ऋ० ९.)

वैश्वामित्री । हे इन्द्र! मन्द्रैः स्तुत्यैर्मोदमानैर्वा । मयूररोमभिर्मयूरस्येव रोमाणि येषां तादृशैः । हरिभिर्हरितवर्णैस्त्वदीयैरश्वैः आयाहि शिष्यमिमं रक्षितुम् । आयान्तं च त्वां केचिदपि मा नियमन् मा नियंसिषुः मा प्रतिभान्त्सुः । विं न पक्षिणमिव पाशिनः । यथा पाशहस्ताः पुरुषाः पक्षिणं बध्नन्ति तद्वत् । येऽपि केचित् प्रतिबन्धारस्तानप्यतीहि अतिक्राम । धन्वेव । यथा पथि गच्छन्तो धन्व मरुभूमिं शीघ्रमतिक्रामन्ति तद्वत् ॥

'ओं प्राक् स्वस्ती'ति जपत्याचार्यः ।

ओं प्राक् स्वस्ति ।

ओमित्यनुज्ञानं गमनस्य । प्रागिति दिशामुपलक्षणम् । प्रागादिषु दिक्षु स्वस्ति ते भूयात् ॥

गच्छन्तं माहित्रेणानुमन्त्रयेत —

महित्रीणामवोस्तुद्युक्षंमित्रस्यार्यम्णः ।

दुराधर्षंवरुणस्य ॥

(अष्ट० ८. अध्या० ८. व० ४३. ऋ० १.)

महि त्रीणाम् । सत्यधृतेरार्षम् । त्रीणां त्रयाणां सम्बन्धि । महि महत् । अवः पालनमस्तु गच्छतामस्माकमुपरि भवतु । द्युक्षं दीप्तेर्निवासभूतमतिदीप्तम् । केषां त्रयाणाम् । मित्रस्यार्यम्णो वरुणस्य च । एते आदित्यानामन्यतमे (!) । दुराधर्षं दुरभिभवमन्यैः पालनम् ॥

किं पुनरेषामवः प्रार्थ्यते —

नहितेषाममाचननाध्वंसुवारणेषु

ईशेरिपुरघशंसः ॥

(अष्ट० ८. अध्या० ८. व० ४३. ऋ० २.)

नहि तेषाम् । तेषां मित्रादीनाम् अमा चन । अमेति गृहनाम अव्ययम् । चनशब्दोऽप्यर्थे । नशब्दाच्च परो द्रष्टव्यः, नाप्यध्वस्विति । नहि तेषां कश्चिद् रिपुः अघशंसः परेषामनर्थाशंसी गृहे नहि ईशे । 'लोपस्त आत्मनेपदेषु' (७-१-४१) । ईष्टे, यस्तैः पाल्यमानानस्मान् बाधेत । नाप्यध्वसु कश्चिदीष्टे । कीदृशेषु । वारणेषु । दस्युप्रभृतयो वारणीया येषु तथाविधेषु ॥

किञ्च —

यस्मैपुत्रासोअदितेःप्रजीवसेमर्त्याय ।

ज्योतिर्यच्छन्त्यजस्रम् ॥

(अष्ट० ८. अध्या० ८. व० ४३. ऋ० ३.)

यस्मै । अदितेः पुत्राः पूर्वोक्ता मित्रादयो यस्मै मर्त्याय जीवसे जीवितुम् अजस्रमविच्छिन्नं ज्योतिः प्रकाशस्वभावं ज्ञानमैहलौकिकं पारलौकिकं च प्रयच्छन्ति ददति । साकाङ्क्षत्वात् स एवेह चामुत्र च सुखी भवतीति योज्यम् । यत एवंभूता मित्रादयस्तस्मात् तेषामवः प्रार्थ्यत इति ॥

वयसाममनोज्ञा वाचः श्रुत्वा जपेत् 'कनिक्रदत्'—

कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावम् ।

सुमङ्गलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥

(अष्ट० २. अध्या० ८. व० ११. ऋ० १.)

गृत्समदेन स्तुत इन्द्रस्तस्मै धनं दत्त्वा तं पथि गच्छन्तं शकुनिर्भूत्वा प्रतिकूलं वाश्यमानो न्यषेधत् पुनरपि तत्स्तुतीः शुश्रूषमाणः । स एताभ्यां सूक्ताभ्यां शकुनिरूपमिन्द्रं तुष्टाव । कनिक्रदत् । क्रन्दतिः शब्दकर्मा । तस्य यङ्लुगन्तस्य शतरि रूपम् । अत्यर्थं शब्दं कुर्वन् । जनुषम् । जनिरुत्पत्तिर्जातिर्वा । तां प्रब्रुवाणः । स्वरविशेषेण विज्ञायते एवञ्जातीयः शकुनिर्वाश्यत इति । तदभिप्रायमेतत् । इयर्ति प्रेरयति वाचम् । दृष्टान्तार्थं पुनर्वचनम् । तमाह—अरितेव । अरिता नावं प्रेरयिता नाविकः । स यथा नावं प्रयत्नेन प्रेरयति तद्वत् । एवमात्मनि परोक्षमुक्त्वा शकुनिं प्रत्याह—हे शकुने ! सुमङ्गलश्च । चश्चेदर्थे । तथाच भवासीति न निहन्यते । 'निपातैर्यद्यदि—' (८-१-३०) इति निषेधात् । त्वं चेत् सुमङ्गलः शोभनस्य मङ्गलस्य सूचयिता भवासि भवेः । ततस्त्वा काचिदप्यभिभा अभिभूः । सोऽर्डदेशः । मा विदत् । विदिर्लाभे । मा लब्ध । विश्व्या विश्वत्र भवा । मनुष्येषु पक्षिष्वन्यत्र वा मा त्वा काचिदप्यभिभूः ॥

मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता ।

पित्र्यामनुप्रदिशंकनिक्रदत्सुमङ्गलोभद्रवादीवदेह ॥

(अष्ट० २. अध्या० ८. व० ११. ऋ० २.)

मा त्वा श्येनः । इतरेषां पक्षिणामभिभविता सुपर्णेऽपि तत्रैवावान्तरजातिभेदः । हे शकुने ! त्वा श्येनो मोद्वधीत् । उत् धात्वर्थानुवादी । मा वधीत् । मा च सुपर्ण उद्वधीत् । इषुमानिषुहस्तः । अस्ता शराणां क्षेप्ता (वीरः) धानुष्कः । स च मा त्वा विदत् मा लब्ध । तस्य वशं मा गमः । अस्मद्गृहस्य या पित्र्या प्रदिक् प्रधानदिक् तामनुप्राप्य कनिक्रदत् शब्दं कुर्वन् त्वं सुमङ्गलः शोभनस्य मङ्गलस्य सूचयिता । भद्रवादी भद्रं कल्याणं तद्वचनशीलः । एवंभूतो भूत्वा वद इह पथि गृहे वा ॥

अवक्रन्ददक्षिणतोगृहाणांसुमङ्गलोभद्रवादीशकुन्ते ।

मानःस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥

(अष्ट० २. अध्या० ८. व० ११. ऋ० ३.)

अवक्रन्द । हे शकुन्ते ! भद्रवादी सुमङ्गलश्च त्वं गृहाणामस्मदीयानां दक्षिणतोऽवक्रन्द । त्वया चैवं क्रियमाणे नोऽस्माकं स्तेनः मा ईशत मा ईशिष्ट स्तेनस्य वशगा मा भूम । यश्चाघशंसः परेषामनर्थाशंसी स च मा न ईशिष्ट ।

वयं च विदथे यज्ञे बृहद् वदेम बहु वदेमहि ऋत्विजः प्रति स्तूयतां शस्यतां हूयतामिज्यतामित्यादि । सुवीराः ॥

प्रदक्षिणिदभिगृणन्तिकारवोवयोवदन्तऋतुथाशकुन्तयः ।

उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजति ॥

(अष्ट० २. अध्या० ८. व० १२. ऋ० १)

प्रदक्षिणित् । गृहस्य दक्षिणतोऽभिगृणन्ति । 'गॄ शब्दे' । लोडर्थे लट् । अभिगृणन्त्वभितः शब्दायन्ताम् । कारवः शुभाशुभयोः कर्तारः सूचकाः । वयः । विरिति पक्षिनामान्यत्र, इह तु क्रियाशब्दः । शकुन्तय इति वक्ष्यमाणत्वात् । 'वि गत्यादिषु' । गन्तारः अशितारो खादितारो वा । वदन्तः उच्चारयन्तः । ऋतुथा ऋतावृतौ काले काले । शकुन्तयः पक्षिणो भारद्वाजादयः ।

"भारद्वाजमयूराणां चाषस्य नकुलस्य च ।
एतेषां दर्शनं पुण्यं दुर्लभं तु प्रदक्षिणम् ॥"

इति पठन्ति । अयं चेदानीं वाश्यमानः पक्षी उभे वाचौ स्तोत्रगीतिरूपे वदति । सामगा इव । विजन्तादेकवचनम् । स यथा गायत्रं च त्रैष्टुभं चोभे सामनी गायति, तद्वत् । सोऽयं पक्ष्यनुराजति अनुराजतु अस्माभिः स्तूयमानो दीप्यताम् ॥

उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ।

वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावद

विश्वतोनःशकुनेपुण्यमावद ॥

(अष्ट० २. अध्या० ८. व० १२. ऋ० २.).

उद्गातेव । हे शकुने! त्वं गायसि । लोडर्थे लट् । दक्षिणतो गाय । उद्गातेव साम । यथोद्गाता साम गायति तद्वत् । ब्रह्मपुत्रः ब्रह्मवर्गे भवो ब्राह्मणाच्छंसी । स यथा सवनेषु प्रातस्सवनादिषु त्रिष्वपि शंसति उक्थ्यादि संस्थासु, त्वं तद्वच्छंससि शंस । तथा वृषेव । सेचनसमर्थो वृषा । वाजी अश्वः । स यथा शिशुमतीर्भविष्यद्भिर्गर्भैस्तद्वतीः बडवा अपीत्य सर्वतो वदति तद्वत् । हे शकुने! नोऽस्माकं सर्वतो भद्रमावद आदाभिमुख्येन वद । एष एवार्थः शब्दान्तरेण पुनरुच्यते तात्पर्यार्थं — विश्वतो नः ॥

'आवदं'स्तूपाकरणे गता ॥

'देवीं वाचमजनयन्त देवाः' इति च ।

देवींवाचंमजनयन्तदेवास्तांविश्वरूपाःपशवोवदन्ति ।

सानोमन्द्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥

(अष्ट० ६. अध्या० ७. व० ५. ऋ० १.)

नेम ऋषिः । देवा इन्द्रादयः देवीं वाचं संस्कृतात्मिकाम् अजनयन्त । तामेव विश्वरूपाः पशवो द्विपादश्चतुष्पादश्च पक्ष्यादयश्च वदन्ति । अपभ्रंशानामपि संस्कृतयोनित्वात् । सैवंभूता वाक् मन्द्रा स्तुत्या नोऽस्मभ्यमिषमन्नमूर्जं बलं च दुहाना । धेनुः । लुप्तोपममेतत् । धेनुरिव । सुष्टुता सम्यगस्माभिः स्तुता अस्मानुपैतु पक्ष्यादीनां वागस्माकमनुकूला भवतु ॥

'स्तुहि श्रुतमि'ति मृगस्य ।

स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रम् ।

मृळाजरित्रेरुद्रस्तवानोन्यन्तेअस्मन्निवपन्तुसेनाः ॥

(अष्ट० २. अध्या० ७. व० १८. ऋ० ११)

गृत्समदस्यार्षम् । हे मदीयान्तरात्मन्! स्तुहि श्रुतमाबालगोपालं प्रसिद्धम् । गर्तसदम् । गर्त इति रथनाम । दृश्यते हि 'आरोहथो वरुण मित्र गर्तामे'ति । तत्र सीदन्तमासीनम् । युवानं नित्यतरुणम् । 'युवा[1] स्वपा रुद्र एषामि'ति च मन्त्रान्तरम् । मृगं न मृगमिव भीमम् । यथायं मृगो भीमः तद्वद् इति प्रकरणे सङ्गतिः । उपहत्नुं ब्रह्मद्विषामुपहन्तारम् । उग्रम् । देवस्यैतन्नामानभिभवनीयतानिमित्तम् । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । हे रुद्र! स्तवानः अस्माभिः स्तूयमानस्त्वं जरित्रे । विभक्तिव्यत्ययः । जरितारं स्तोतारं मां मृळ मृलय सुखय । अस्मद् अस्मत्तोऽन्यं ते सेना निवपन्तु बाधन्तां, नास्मान् ॥

यस्या दिश[2] इत्यादि ।

अभयं मित्रावरुणा ब्रह्मास्त्वर्चिषा शत्रून् दहतं प्रतीत्य मा ज्ञातारं मा प्रतिष्ठां विदन्तु मिथो भिन्दाना उपयन्तु मृत्युम् ॥

१. 'वा पिता स्व' घ. ङ. पाठः. २. 'शः—मृत्युमिति ।' ङ. पाठः.

अभयम् । मित्रावरुणा हे मित्रावरुणौ ! मह्यं ममाभयमस्तु भयं मा भूत् । युवां चोभयतो दीप्तस्योल्मुकस्याग्नेरर्चिषा शत्रूनस्मदीयान् दहतं प्रतीत्य प्रतिगत्य तेषामभिमुखं गत्वा । ते च युवाभ्यां दह्यमानाः ज्ञातारम् । जानातिरिह ज्ञानपूर्वके प्रतीकारे वर्तते । ज्ञात्वा प्रतिकर्तारम् । मां मा विदन्तु मा विदन् मा लप्सत । प्रतिष्ठां च मा विदन्तु । किन्तु मिथः परस्परं भिन्दाना वध्यघातकभावमाचरन्तो भिन्नमतयो वा मृत्युमुपयन्तु ॥

संसृष्टंधनमुभयंसमाकृतमस्मभ्यंदत्तांवरुणश्चमन्युः ।
भियंदधानाहृदयेषुशत्रवःपराजितासोअपनिलयन्ताम् ॥

(अष्ट० ८. अध्या० ३. व० १९. ऋ० ७.)

संसृष्टं धनम् । मन्योरार्षम् । संसृष्टं मिश्रं धनम् । उभयं च जीवाजीवरूपम् । समाकृतमेकत्र राशीकृतम् । एवंभूतं स्वीयं धनं वरुणो मन्युश्च । मन्युरिन्द्रः । तावस्मभ्यं दत्ताम् । मन्युरेव देवता । वरुणस्य प्रासङ्गिकी स्तुतिरित्याहुः । एवं मन्युवरुणाभ्यां मयि रक्ष्यमाणे मम शत्रवः मया पराजिताः हृदयेषु[2] भियं दधाना भूत्वा अपनिलयन्ताम् अपगम्य क्वापि पर्वतगुहादौ निलीयन्ताम् ॥

सर्वतो भयात्—

पृथिवी वृता साग्निना वृता तया वृतया वर्त्र्या यस्माद् भयाद् बिभेमि तद्वारये स्वाहा ।

अन्तरिक्षं वृतं तद् वायुना वृतं तेन वृतेन वर्त्रेण यस्माद् भयाद् बिभेमि तद्वारये स्वाहा ।

द्यौर्वृता सादित्येन वृता तया वृतया वर्त्र्या यस्माद् भयाद् बिभेमि तद् वारये स्वाहा ।

दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद् भयाद् बिभेमि तद्वारये स्वाहा ।

आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद् भयाद् बिभेमि तद् वारये स्वाहा ।

प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद् भयाद् बिभेमि तद् वारये स्वाहा ।

वेदा वृतास्ते छन्दोभिर्वृतास्तैर्वृतैर्वर्त्रैर्यस्माद् भयाद् बिभेमि तद् वारये स्वाहा ।

---

१. 'स्याग्नेः' ख. ग. पाठः. २. 'ल' ख. पाठः.

सर्वं वृतं तद् ब्रह्मणा वृतं तेन वृतेन वर्त्रेण यस्माद् भयाद् बिभेमि तद् वारये स्वाहा ॥

पृथिवी वृता व्याप्ता । केन सा वृता । साग्निना वृता । अग्निरधिष्ठाता पृथिव्याः । ततस्तेन सा वृता भवति । तया पृथिव्या वृतयाग्निनाधिष्ठितया वर्त्र्या वारयित्र्या भयानाम् । यस्माद् भयात् भयहेतोरहं बिभेमि तत् तन्निमित्तं भयं वारये निवारयामि । एतेनोत्तरे व्याख्याताः । विशेषान् वक्ष्यामः — अन्तरिक्षम् । मध्यमस्थानो वायुरन्तरिक्षस्याधिष्ठाता । वर्त्रेण वारयित्रा । द्यौः । आदित्यो दिवोऽधिष्ठाता । दिशः । चन्द्रमा दिशामधिष्ठाता । वर्त्रीभिः वारयित्रीभिः । आपः । अपां वरुणोऽधिष्ठाता । प्रजाः प्राणिनः सर्वे पञ्चवृत्तिना प्राणेनाधिष्ठिताः । वेदा[1] गायत्र्यादीनि छन्दांसि । तेभिः तैः । वर्त्रैभिः वारयितृभिः । सर्वं चराचरात्मकं जगत् । ब्रह्मणा जगत्कारणेन ॥

अथापराजितायां दिशि 'यत इन्द्र भयामहे' इति च सूक्तशेषम् । स्वस्त्यात्रेयं 'स्वस्ति नो मिमीताम्' इति । 'स्वस्त्ययनानि च जपित्वे'त्यत्र व्याख्यातम् ॥

यतइन्द्रभयामहेततोनोअभयंकृधि ।

मघवञ्छग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि ॥

(अष्ट० १. अध्या० ४. व० २० ऋ० १३.)

यत इन्द्र! । भर्गस्यार्षम् । हे इन्द्र! यतो दिशः पुरुषाद् वा भयामहे बिभीमः ततः नोऽस्माकमभयं कृधि यथा भयं न भवति तथा कुरु । हे मघवन्! । मघमिति मंहतेर्दानकर्मणो धननाम । धनवन्! । तत् तव मघं नोऽस्मभ्यं शग्धि देहि । ऊतिभिः पालनैः द्विषस्त्वमस्माकं विजहि । मृधः सङ्ग्रामकारिणस्तांश्च विजहि ॥

त्वंहिराधसपतेराधसोमहःक्षयस्यासिविधतः ।

तंत्वावयंमघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे ॥

(अष्ट० १. अध्या० ४. व० २०. ऋ० १४.)

त्वं हि । हि यस्मात् त्वं हे राधस्पते! । राधः धनम् । धनपते! । राधसो धनस्य महः महतः क्षयस्य निवासस्य[2] चासि निमित्तभूतोऽसि । कस्य । विधतः ।

---

1. 'देवाः गा' क. पाठः. 2. 'स्य च नि' ग. पाठः.

विधतिः परिचरणकर्मा । त्वां यः परिचरति तस्य पुरुषस्य धनादेर्निमित्तभूतोऽसि । तमेवंभूतं त्वां वयं मघवन्! इन्द्र! गिर्वणः! । गिरः स्तुतिरूपाः । 'वन षण संभक्तौ' । हे गिरां सम्भक्तः! । गीर्भिर्वा सम्भजनीय! । सुतावन्तोऽभिषुतसोमाः सन्तो हवामहे आह्वयामः ॥

इन्द्रःस्पळुतवृत्रहापरस्पानोवरेण्यः ।

सनोरक्षिषच्चरमंसमध्यमंसपश्चात्पातुनःपुरः ॥

(अष्ट० ६. अध्या० ४. व० २०. ऋ० १५)

इन्द्रः स्पट् । उत्तरत्र तच्छब्दश्रवणाद् य इत्यध्याहार्यम् । यः इन्द्रः स्पट् । 'स्पश बाधनस्पर्शनयोः' । क्विप् । बाधिता शत्रूणाम् । उत अपि । वृत्रहा वृत्रस्यासुरस्य मेघस्य वा पापस्य वा हन्ता । परस्पाः । परेभ्यः शत्रुभ्यः पाता रक्षिता । नोऽस्माकं वरेण्यो वरणीयः । स नोऽस्मान् । रक्षिषत् । पञ्चमो लकारः । रक्षेत् । चरमं चरमे वयसि स एव मध्यमं मध्यमेऽपि वयसि रक्षिषत्, अर्थात् प्रथमेऽपि वयसि स एव । सः पश्चात् पृष्ठतः पातु नः । पुरोऽग्रतश्च स पातु ॥

त्वंनःपश्चादधरादुत्तरात्पुरइन्द्रनिपाहिविश्वतः ।

आरेअस्मत्कृणुहिदैव्यंभयमारेहेतीरदेवीः ॥

(अष्ट० ६. अध्या० ४. व० २१. ऋ० १६.)

त्वं नः । हे इन्द्र! त्वं नो विश्वतो निपाहि नियमेन रक्ष । विश्वत इत्यस्य प्रपञ्चः—पश्चात् प्रतीच्यां दिशि । अधराद् दक्षिणस्याम् उत्तरात् उत्तरस्याम् । (पुरः प्राच्याम् ।) यथा तत्र भयं न भवति तथा रक्ष । किञ्च दैव्यं देवनिमित्तं भयम् अस्मत् अस्मत्तः आरे दूरे कृणुहि कुरु । अदेवीर्मनुष्यादिनिमित्ताश्च हेतीः हिंसाः आयुधजातीर्वा आरे दूर एव कृणुहि ॥

अद्याद्याश्वश्वइन्द्रत्रास्वपरेचनः ।

विश्वाचनोजरितॄन्सत्पतेअहादिवानक्तंचरक्षिषः ॥

(अष्ट० ६. अध्या० ४. व० २१. ऋ० १७.)

अद्याद्य । अद्यशब्दस्यैकव्यक्तिनिष्ठत्वाद् वीप्सानुपपत्तेर्नेदं वीप्सायां द्विर्वचनम् । किन्तर्हि । आदरार्थं पुनर्वचनम् । तेन च सातत्यं द्योत्यते । अद्याद्य अस्मिन्नहनि सातत्येन । एवं श्वः श्वः परस्मिन्नहनि च सातत्येन ।

हे इन्द्र! नस्त्रायस्व । परे चाहनि परश्वोऽपि नस्त्रायस्व । किमेतेषु त्रिष्वेव दिनेषु त्रायै । न । विश्वा च अहा । विश्वेष्वप्यहस्सु । (हे सत्पते! सतां पालक!) जरितॄन् तव स्तोतॄन् नः रक्षिषः । तत्रापि दिवा नक्तं च । न केवलं दिवा नापि केवलं नक्तम् ॥

प्रभङ्गीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकम् ।

उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥

(अष्ट० ६. अध्या० ४. व० २१. ऋ० १८.)

प्रभङ्गी । पूर्वार्धर्चे एकं वाक्यम् । त्वामित्यध्याहारेण—हे इन्द्र ! त्वमेवंविध इति । प्रभङ्गी प्रकर्षेण भङ्क्ता शत्रूणाम् । शूरो मघवा मघं धनमस्यास्ति । 'छन्दसीवनिपौ च वक्तव्यावि'ति वनिबन्तः । धनवान् । नचाल्पेन धनेन तद्वान् । किन्तर्हि । तुवीमघः । तुवीति बहुनाम । बहुधनः । सम्मिश्लः सम्यङ् मिश्रयिता वृत्रादिभिरसुरैरात्मनः । किमर्थम् । वीर्याय वीर्यं प्रथितं यथा स्यादिति स्वयमेवासुरैर्योद्धा । कमित्यनर्थको निपातः पादपूरणः । हे शतक्रतो ! ते तव उभा बाहू वृषणा वर्षितारौ कामप्रदावित्यपरं वाक्यं तस्य शेषः । यौ बाहू वज्रमायुधविशेषं निमिमिक्षतुः । म्यक्षतिर्गतिकर्मान्यत्र । इह तु धारणे द्रष्टव्यः । लडर्थे लिट् । धारयतः ॥

सङ्ग्रामे समुपोढे रथस्य पश्चादवस्थाय 'आ त्वाहार्षमि'ति राजानं सन्नाहयेत् ।

आत्वाहार्षमन्तरेधिध्रुवस्तिष्ठाविचाचलिः ।

विशस्त्वासर्वावाञ्छन्तुमात्वद्राष्ट्रमधिभ्रशत् ॥

(अष्ट० ८. अध्या० ८. व० ३१. ऋ० १.)

ध्रुवस्यार्षम् । राजानं प्रति पुरोहित आह । हे राजन् ! त्वामाहार्षम् आहरामि सङ्ग्रामे पराजितस्त्वमन्यत्र गतोऽपि यथा स्वमेवेदं राष्ट्रं प्रत्याहृतो भवसि तथा करोमि । आहृतश्च त्वमन्तरेधि अस्यैव राष्ट्रस्य मध्ये भव । भवंश्च अविचाचलिः चालयितुमशक्यो ध्रुवः तिष्ठ । विशः राष्ट्रवर्तिन्यश्च सर्वाः प्रजाः त्वामेव राजानं वाञ्छन्तु । राष्ट्रं च त्वत् त्वत्तो माधिभ्रशत् । अधिर्धात्वर्थानुवादी । भ्रष्टं मा भूत् त्वय्येव तिष्ठतु ॥

इहैवैधिमापच्योष्ठाःपर्वतइवाविचाचलिः ।

इन्द्रइवेहध्रुवस्तिष्ठेहराष्ट्रमुधारय ॥

(अष्ट० ८, अध्या० ८. व० ३१, ऋ० २.)

इहैव । इहैव राष्ट्रे एधि भव । मापच्योष्ठाः अस्माद् राष्ट्रादपच्युतो मा भूः । पर्वत इव च अविचाचलिः चालयितुमशक्यो भव । इह ध्रुवो भवंश्च इन्द्र इव तिष्ठ सुसमृद्धो भव । इह । द्वितीयार्थे सप्तमी । उश्चार्थे । इदं च । राष्ट्रं धारय ॥

इमामिन्द्रोअदीधरद्ध्रुवंध्रुवेणहविषा ।

तस्मैसोमोअधिब्रवत्तस्माउब्रह्मणस्पतिः ॥

(अष्ट० ८, अध्या० ८, व० ३१, ऋ० ३.)

इमम् । इमं राजानमिन्द्रोऽदीधरद् धारयतु ध्रुवं निश्चलं ध्रुवेण ध्रुवभाविना हविषा व्रीह्यादिलक्षणेन भोज्येन सह । तस्मै इन्द्राय राज्ञे वा सोमोऽधिब्रवत् अधिब्रवीतु तत्पक्षे पततु । तस्मा उ तस्मा एव ब्रह्मणस्पतिरप्यधिब्रवत् । ब्रह्मणस्पतिर्बृहस्पतिः ॥

ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवासःपर्वताइमे ।

ध्रुवंविश्वमिदंजगद्ध्रुवोराजाविशामयम् ॥

(अष्ट० ८. अध्या० ८. व० ३१. ऋ० ४.)

ध्रुवा द्यौः । द्यौरादयो दृष्टान्ताः । यथा द्यौरादयो ध्रुवाः एवमयमपि विशां राजा ध्रुवोऽस्तु ॥

ध्रुवंतेराजावरुणोध्रुवंदेवोबृहस्पतिः ।

ध्रुवंतइन्द्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवम् ॥

(अष्ट० ८. अध्या० ८. व० ३१. ऋ० ५.)

ध्रुवं ते । हे राजन् ! ते राष्ट्रं वरुणो राजा ध्रुवं निश्चलं यथा तथा धारयताम् । एवमुत्तरत्रापि । अग्निश्चेत्यस्य परेण ध्रुवशब्देन सम्बन्धः ॥

ध्रुवंध्रुवेणहविषाभिसोमंमृशामसि ।

अथोतइन्द्रःकेवलीर्विशोबलिहृतस्करत् ॥

(अष्ट० ८. अध्या० ८. व० ३१, ऋ० ६.)

ध्रुवम् । ध्रुवेण हविषा व्रीह्यादिना भोज्येन सह । सोमं सोमवत् प्रियदर्शनं त्वामभिमृशामसि अभिमुखो भूत्वा मृशामः शिवेन मनसानु-

१. 'सा ध्या' क. पाठः.

ध्यायामः । अथो अभिमर्शनानन्तरमिन्द्रो विशः राष्ट्रवर्त्तिनीः प्रजाः ते केवलीः तवैवासाधारणीर्बलिहृतः करस्य दात्रीः करत् करोतु ॥

'जीमूतस्येवे'ति कवचं प्रयच्छति ।

जीमूतस्येवभवतिप्रतीकंयद्वर्मीयातिसमदामुपस्थे ।

अनाविद्धयातन्वाजयत्वंसत्वावर्मणोमहिमापिपर्तु ॥

(अष्ट० ५. अध्या० १. व० १९. ऋ० १.)

पायोरार्षं सूक्तम् । समदाम् । समदिति स्त्रीलिङ्गं सङ्ग्रामनाम, समं सह माद्यन्ति योद्धारो यास्विति । समदामुपस्थे मध्ये । वर्मी वर्मवान् भूत्वा । यद् यदा पुरुषो याति । यदेति वचनात् तदेति गम्यते । तदा तस्य प्रतीकं शरीरं जीमूतस्येव भवति । यथा जीमूतस्य वर्षोन्मुखस्य प्रतीकम् उज्ज्वलं भीषणं च तद्वद् भवति । त्वं चानेन वर्मणा वर्मितः सन् अनाविद्धया अव्रणितया तन्वोपलक्षितः शत्रून् जय । सः । विभक्तिव्यत्ययः । तम् । त्वा वर्मणोऽस्य महिमा पिपर्तु पालयतु ॥

उत्तरया धनुः ।

धन्वनागाधन्वनाजिंजयेमधन्वनातीव्राःसमदोजयेम ।

धनुःशत्रोरपकामंकृणोतिधन्वनासर्वाःप्रदिशोजयेम ॥

(अष्ट० ५. अध्या० १. व० १९. ऋ० २.)

धन्वना गाः । बहुव्रीहौ धनुश्शब्दस्य समासान्ते अनङादेशे धन्वशब्दः वेदे[१] केवलोऽपि प्रयुज्यते । धन्वना धनुषा शत्रूणां गाः जयेम । तेनैवाजिमपि जयेम । आजयः क्षुद्राः सङ्ग्रामाः, उत्तरत्र तीव्रा इति विशेषणात् । द्वितीयः पादः स्पष्टार्थः । धनुरेव च शत्रोः । द्वितीयार्थे षष्ठी । शत्रुम् । अपकामम् अपगतकामं कृणोति करोतु । चतुर्थे पादे प्रदिशः प्रधाना दिशः ॥

उत्तरां वाचयति ।

वक्ष्यन्तीवेदागनीगन्तिकर्णंप्रियंसखायंपरिषस्वजाना ।

योषेवशिङ्क्तेविततांधिधन्वञ्ज्याइयंसमनेपारयन्ती ॥

(अष्ट० ५. अध्या० १. व० १९. ऋ० ३.)

---

१. 'देऽपि के' घ. पाठः.

वक्ष्यन्तीव । आकृष्यमाणा ज्या कर्णमूलमागच्छन्ती धानुष्कं च तत इतः स्पृशति । तत्रोत्प्रेक्षा—इयं ज्या वक्ष्यन्तीव कर्णे किञ्चित् कथयितुकामेव कर्णमागनीगन्ति पुनः पुनरागच्छति प्रियं सखायं धानुष्कं परिषस्वजाना तस्य परिष्वङ्गं कुर्वतीव । आगत्य च शिङ्क्ते । 'शिजि अव्यक्ते शब्दे' । अव्यक्तशब्दं करोति । योषेव । यथा योषा कर्णे मञ्जु वदति तद्वत् । अधिः सप्तम्यर्थानुवादी । धन्वन् । सप्तम्या लुक् । धन्वनि । वितता विस्तारिता आरोपिता । समने । सङ्ग्रामनामैतत् । सङ्ग्रामे । पारयन्ती । पारयतिः कर्मसमाप्तौ । पर्याप्तं कार्यं कुर्वती ॥

स्वत्रं चतुर्थीं जपेत् ।

तेआचरन्तीसमनेवयोषामातेवपुत्रंबिभृतामुपस्थे ।

अपशत्रून्विध्यतांसंविदानेआर्त्नीइमेविष्फुरन्तीअमित्रान् ॥

(अष्ट० ५. अध्या० १. व० १९. ऋ० ४.)

ते आचरन्ती । ते इमे प्रसिद्धे । आर्त्नी धनुषः कोट्यौ । आचरन्ती ज्याकर्षणे सति धानुष्कं प्रत्यागच्छन्त्यौ । समनेव । छान्दसो गुणः । समना इव । यथा योषा समनाः सहृदया भर्त्तारमाचरति तद्वत् । इमं धानुष्कं बिभृतां धारयतां मातेव पुत्रमुपस्थे । यथा माता स्वाङ्के पुत्रं बिभर्ति तद्वत् । (संविदाने संजानाने विसंवादरहिते) शत्रूंश्चापविध्यतां सङ्ग्रामादपनयताम् । अमित्रान् विष्फुरन्ती विष्फुरन्त्यौ । स्फुरतिर्वधकर्मा । विविधं घ्नन्त्यौ ॥

पञ्चम्येषुधिं प्रयच्छेत् ।

बह्वीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य ।

इषुधिःसङ्काःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः ॥

(अष्ट० ५. अध्या० १. व० १९. ऋ० ५)

बह्वीनाम् । बह्वीनामिषूणां पिता पाता पितृस्थानीयो वायमिषुधिः । पृष्ठे निनद्धः नियमेन बद्धः । बहुरस्य पुत्रः । बहुष्वेकवचनम् । बहवश्चास्य पुत्राः शराः । इष्वपेक्षया पूर्वत्र स्त्रीलिङ्गम् । इह तु शरापेक्षया पुत्रशब्दः । वस्तुतस्तु येषां पिता त एव पुत्राः । समना । द्वितीयैकवचनस्याकारः । समनं

१. 'क्ष्यते इ' ख. ग. पाठः. २. 'सर्वापे' ख. पाठः.

सङ्ग्रामम् । अवगत्य उपेत्य चिश्चा कृणोति । चिश्चेति शब्दानुकरणं डाजन्तम् । शरेष्वादीयमानेष्वेवंविधं शब्दं करोति । सङ्काः पृतना इति द्वे अपि सङ्ग्रामनामनी । इह तु क्षुद्रतीव्रापेक्षया भेदेन निर्देशः । क्षुद्रान् तीव्रांश्च (सर्वान्) सङ्ग्रामान् जयति प्रसूतः प्रेरितो व्यापारितः सन् ॥

अभिप्रवर्तमाने षष्ठीम् ।

रथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयतेसुषारथिः ।

अभीशूनांमहिमानंपनायतमनःपश्चादनुयच्छन्तिरश्मयः ॥

(अष्ट० ५. अध्या० १. व० २०. ऋ० ६.)

रथे तिष्ठन् । कुशलः सारथिः सुसारथिः । स रथे तिष्ठन् वाजिनोऽश्वान् पुरोऽग्रतो नयति । क । यत्र यत्र कामयते नेतुमिति सारथेः स्तुतिः । अथाभीशूनाम् । अभीशवः प्रग्रहाः तेषाम् । महिमानं महत्त्वं पनायत । स्तुतिकर्मायम् । स्तुत हे मदीया ऋत्विजः! पुत्रपौत्रा वा । किं तत् । मनः । षष्ठ्या लुक् । मनसः । पश्चादनन्तरमेवानुयच्छन्ति । अनुशब्दो निशब्दस्यार्थे । नियच्छन्त्यश्वान् । के । रश्मयः, पूर्वोक्ता अभीशवः । एते हि सारथेरभिप्राया नन्तरमश्वानभिमते वेगे स्थापयन्ति । तमेतेषां महिमानं पनायतेति ॥

सप्तम्याश्वान् ।

तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिःसहवाजयन्तः ।

अवक्रामन्तःप्रपदैरमित्रान्क्षिणन्तिशत्रूँरनपव्ययन्तः ॥

(अष्ट० ५. अध्या० १. व० २०. ऋ० ७.)

तीव्रान् । एतेऽश्वाः तीव्रानत्युच्चान् घोषान् हेषितशब्दान् कृण्वते कुर्वते । वृषाः सेचनसमर्था वृषभाः अश्वानां पाणयः पूर्वे पादाः । वृषाणामिव पाणयो येषां ते वृषपाणयः । दार्ढ्यमत्र विवक्षितम् । अपर आह—शीघ्रं गच्छतां येषां पाणयो वर्षितारः पांसूनां ते वृषपाणयः इति । रथेभिः रथैः सह वाजयन्तः । अर्चतिकर्मायमन्यत्र । इह तु वेगितायां गतौ द्रष्टव्यः । वेगितं गच्छन्तः । किञ्च प्रपदैः पादाग्रैः अमित्रानवक्रामन्तः अवाचीनान् कृत्वा मृद्नन्तः क्षिणन्ति । 'क्षि क्षये' । क्षयं नयन्ति । शत्रून् कांश्चिदपि अनपव्ययन्तः । 'व्यय वित्तसमुत्सर्गे' इत्यस्यैतद्रूपम् । अनपोत्सृजन्तः अपरित्यजन्तः सर्वानेव क्षिणन्ति ॥

अष्टमीमिषूनवेक्षमाणं वाचयति[1]।

रथवाहनंहविरस्यनामयत्रायुधंनिहितमस्यवर्म।
तत्रारथमुपशग्मंसदेमविश्वाहावयंसुमनस्यमानाः॥

(अष्ट० ५. अध्या० १. व० २०. ऋ० ८.)

रथवाहनम्। शत्रून् जित्वा प्रत्यागत्य वयमेवं कुर्म इति पुरोहितो राजानमाह। कृतकार्यो रथो यत्र वाह्यते स्थाप्यते तद्रथवाहनमायुधागारम्। हविरिति चास्य नाम। कथम्। जुहोतिः प्रक्षेपे। ततोऽधिकरणे इप्रत्ययः। युद्धोपकरणानि हि आयुधागारे प्रक्षिप्यन्ते। यत्र स्थाने आयुधं (निहितम्)। जातावेकवचनम्। आयुधानि निहितानि। अस्य योद्धुर्वर्म च यत्र निहितम्। योद्धुः पूर्वमनादिष्टत्वादस्येति नायमन्वादेशः। तेन 'इदमोऽन्वादेशे—' (२-४-१२) इत्यस्यायमविषयः। तेन छान्दसमनुदात्तत्वम्। अपर आह— सप्तम्यर्थे षष्ठी। अस्मिन्नायुधागार इति। ततश्चान्वादेश इति। तत्र स्थाने वयं रथमुपसदेम उपसादयेम शत्रून् जित्वा प्रत्यागत्य स्थापयेम। शग्ममिति सुखनाम क्रियाविशेषणम्। सुखसाधनं वा रथम्। न केवलमस्मिन्नेवोद्योगे। किं तर्हि। विश्वाहा सर्वदा। वयं सुमनस्यमानाः शत्रुजयेन प्रीयमाणाः॥

'अहिरिवे'ति तलं नह्यमानम्[2]।

अहिरिवभोगैःपर्येतिबाहुंज्यायाहेतिंपरिबाधमानः।
हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः॥

(अष्ट० ५. अध्या० १. व० २१. ऋ० १४.)

हस्ते प्रकोष्ठप्रदेशे हन्यते बध्यत इति हस्तघ्नः गोधातलत्रादिपर्याय-श्चर्मादिनिर्मितः संस्तूयते। एष हस्तघ्नः धानुष्कस्य बाहुं पर्येति परिवेष्टयति। अहिरिव भोगैः। एकस्मिन् बहुवचनम्। भागापेक्षं वा। यथा ग्रीवाप्रदेशे गृहीतोऽहिर्भोगेन भोगभागैर्वा गृहीतभागं वेष्टयति तद्वत्। किं कुर्वन् पर्येति। ज्याया हेतिं, हेतिर्हिंसा, ज्याकृतां हिंसाम्। परिबाधमानः। परिः सर्वतोभावे। स च पुमांसं योद्धारमेनं विश्वतः परिपातु। विश्वा विश्वानि। वयुनानि ज्ञानानि ज्ञातव्यानि। विद्वान् पुमान्। लुप्तोपममेतत्। एवंभूतः पुमानिव॥

१. 'अष्टमीं वाचयति' घ. ङ. पाठः. २. 'व नः। अ' ख. पाठः.

अथैनं वाचयति 'अभीवर्तेन' ।

अभीवर्तेनहविषायेनेन्द्रोअभिवावृते ।
तेनास्मान्ब्रह्मणस्पतेभिराष्ट्रायवर्तय ॥
(अष्ट० ८. अध्या० ८. व० ३२. ऋ० १.)

अभीवर्तस्यार्षम् । राजा पुरोहितं प्रत्याह — हे ब्रह्मणस्पते ! बृहस्पते! । 'बृहस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्या राज्ञां पुरो बृहस्पतिर्यः सुभृतं बिभर्ती'ति यदाह । 'पुरोहितं यत् सुभृतं बिभर्तीत्येव तदाहे'ति ब्राह्मणम् । हे पुरोहित! अभीवर्तेन । अभिवर्ततेऽभिगच्छति परराष्ट्रं येन सोऽभिवर्तः । करणे घञ् । उपसर्गस्य दीर्घः । तादृशेन येन हविषा बृहस्पतिना हुतेन चरुणा पुरोडाशेन वा इन्द्रः अभिवावृते अभिगतवान् परराष्ट्रमभिगतवान् अभिभूय प्राप्तवान् । तेन हविषास्मानपि । राष्ट्राय । विभक्तिव्यत्ययः । राष्ट्रं परकीयम् । अभिवर्तय अभिगमय । हविषेति मन्त्रलिङ्गाद्धोमोऽपि कर्तव्य इत्याहुः । वाचनमेव हविरित्यन्ये ॥

अभिवृत्यसपत्नानभियानोअरातयः ।
अभिपृतन्यन्तंतिष्ठाभियोनइरस्यति ॥
(अष्ट० ८. अध्या० ८. व० ३२. ऋ० २.)

अभिवृत्य । पुरोहितो राजानमाह — हे राजन्! । सपत्नानभिवृत्याभिगम्य वशीकृत्य या नः अरातयः शत्रुजातयः, ताश्चाभिवृत्य । शत्रवस्त्रिविधाः कृत्रिमाः सहजाः प्राकृता इति । तदभिप्रायो भेदनिर्देशः सपत्ना अरातय इति । पृतन्यन्तम् अन्यमपि योद्धुकाममभितिष्ठ अभिभव । यश्च नोऽस्मभ्यम् इरस्यति । कण्ड्वादियगन्तोऽयमीर्ष्यार्थः । 'इरस् इरज् इरञ् ईर्ष्यायाम्' इति हि तत्र पठ्यते । इरस्यति ईर्ष्यति । तं चाभितिष्ठ ॥

अभित्वादेवःसविताभिसोमोअवीवृतत् ।
अभित्वाविश्वाभूतान्यभीवर्तोयथासंसि ॥
(अष्ट० ८. अध्या० ८. व० ३२. ऋ० ३.)

१. 'रोहितः बृ' घ. पाठः.

अभित्वा । पुरोहितस्यैव वाक्यं — हे राजन्! यथा त्वमभीवर्तः परराष्ट्रस्याभिगन्ता असासि भवसि, तथा त्वां देवः सविता अभ्यवीवृतत् । लोडर्थे लुङ् । अभिवर्तयतु परराष्ट्रमभिगमयतु । तथासौ सोमश्चाभ्यवीवृतत् । विश्वानि च भूतान्यभ्यवीवृतन् ॥

येनेन्द्रोहविषांकृत्व्यभवद्द्युम्न्युत्तमः ।

इदंतदक्रिदेवाअसपत्नःकिलाभुवम् ॥

(अष्ट० ८. अध्या० ८. व० ३२. ऋ० ४.)

असपत्नःसपत्नहाभिराष्ट्रोविषासहिः ।

यथाहमेषांभूतानांविराजानिजनस्यच ॥

(अष्ट० ८. अध्या० ८. व० ३२. ऋ० ५.)

येन । इन्द्रः येन हविषा । विभक्तिव्यत्ययः । यद्धविः । कृत्वी । 'स्नात्व्यादयश्च' (७-१-४९) । कृत्वा । उत्तमो द्युम्नी । द्युम्नं द्रविणं, तद्वान् । अभवत् । इदं तद्धविरहमक्रि । 'मन्त्रे घसा'दिसूत्रेण लेर्लुक् । अकृषि कृतवानस्मि । हे देवाः! अतश्च असपत्नः । किल प्रसिद्धौ । अभुवं भवामि भवेयं वा । कथं कृतवानसि । यथाहमेषां भूतानां परराष्ट्रवर्तिनाम् । जनस्य च स्वराष्ट्रवर्तिनः । विराजानि । विराजतिरैश्वर्यकर्मा । विविधमीश्वरो भवानि । किंभूतः । असपत्नः उत्पन्नानां शत्रूणां वधेन । सपत्नहा उत्पत्स्यमानानां च सपत्नानां हन्ता । अभिराष्ट्रोऽभिगतपरराष्ट्रः । विषासहिः विशेषेण सर्वेषामभिभविता । एवंभूतो भूत्वा यथाहमेषां विराजानि तथेदं हविरहमक्रि हे देवा इति राज्ञो वचनमृग्द्वयम् ॥

'प्रयो वां मित्रावरुणे'ति च । द्वे जमदग्नेरेते ।

प्रयोवांमित्रावरुणाजिरोदूतोअद्रवत् ।

अयःशीर्षामदेरघुः ॥

(अष्ट० ६. अध्या० ७. व० ६. ऋ० ३.)

यो दूतः । को वासौ । अग्निः । 'त्वां दूतमग्न' इत्यादौ दर्शनात् । कीदृशः । अजिरः । 'अज गतिक्षेपणयोः' । शीघ्रगामी । अयश्शीर्षा । अय

१. 'त्वी । त्वान्तादिनिः । कृत्वा' ख. ग. पाठः.

इति हिरण्यनाम । शीर्षशब्देन शीर्षण्याः केशा उच्यन्ते । हिरण्यकेशः हिरण्यसदृशज्वालासमूहः । मदेरघुः । मदशब्देन देवानां मदकरं हविरुच्यते । तत्र रघुः लघुः, अनायासेन हविषां वोढा । य एवम्भूतो दूतोऽस्माभिर्युवां प्रति जयार्थं प्रहितः । हे मित्रावरुणौ ! । य इति वचनात् स इत्यध्याहारः । स वां युवां प्राद्रवत् प्रद्रवतु युवयोराह्वानाय शीघ्रं वां प्राप्नोतु ॥

नयःसंपृच्छेनपुनर्हवीतवेनसंवादायरमते ।
तस्मान्नोअद्यसमृतेरुरुष्यतंबाहुभ्यांनउरुष्यतम् ॥

(अष्ट० ६. अध्या० ७. व० ६. ऋ० ४.)

न यः । सम्पृच्छे इति कृत्यार्थे केन्प्रत्ययः । कृत्यार्थश्चात्र भावः । एवं हवीतवे इति ह्वयतेस्तवेन्प्रत्ययः । उभयत्राव्ययत्वात् सप्तम्या लुक् । सम्प्रश्नः सम्प्रधारणं परस्परमर्थनिरूपणम् । यः सम्पृच्छे सम्प्रश्ने न रमते प्रीतो नास्माभिः सह किञ्चित् सम्प्रधारयति । पुनश्शब्दोऽप्यर्थे । नापि हवीतवे आह्वाने रमते प्रीयमाणो नास्मानाह्वयति नास्माभिराहूतः प्रीयते । संवादाय । सप्तम्यर्थे चतुर्थी । नापि संवादे रमते, नास्माभिरभ्यर्थितः किञ्चिदपि संवदति, अस्माभिः संवादे कृतेऽपि न रमते । तस्मात् पुरुषात् समृतेः । 'ऋ गतौ' । कर्तरि क्तिन् । सङ्गतात् । स यदास्माभिः सङ्गच्छते युद्धादौ तदा तस्मात् नः अद्यैवोरुष्यतं रक्षतम् । हे मित्रावरुणौ ! । नच मानसी रक्षा । किं तर्हि । बाहुभ्यां नः उरुष्यतम् ॥

अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः[1][2] —

आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ।
संक्रन्दनोनिमिषएकवीरःशतंसेनाअजयत्साकमिन्द्रः ॥

(अष्ट० ८. अध्या० ५. व० २१. ऋ० १.)

आशुः शिशानः । अप्रतिरथ ऋषिः । आशुः शीघ्रकारी । शिशानस्तीक्ष्णीकुर्वन् । किम् । वज्राद्यायुधम् । वृषभो न भीमः वृषभ इव भयानकः । घनाघनः हन्ता वृत्रादीनाम् । 'चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्य', 'हन्तेर्घत्वं च' (वा० ६-१-१२) इति रूपसिद्धिः । क्षोभणः क्षोभ-

१. 'अथैनं — सौपर्णैः । आ' घ. ङ. पाठः. २. 'थेत्यादि । आ' ख. पाठः.

यिता । चर्षणीनाम् । चर्षणयो मनुष्याः शत्रुसेनाः । मनुष्याणाम् । सङ्क्रन्दनः क्रन्दयिता । क्रन्दतिराह्वानकर्मा । सम्यगाह्वाता युद्धे शत्रूणाम् । अपर आह— सङ्क्रन्दयतीति सङ्क्रन्दनः । नन्द्यादिभ्यो ल्युः । सङ्क्रन्दनमार्तप्रलापः । तस्य कारयिता शत्रुष्विति । अनिमिषो निमेषरहितः । वीरः कर्मस्वत्यन्ततत्परः । एकवीरः अप्रतिद्वन्द्वो वीरः । एवंभूत इन्द्रः शतं बह्वीः सेनाः साकं युगपदजयत् । तद्वत् त्वमपि जयेत्यध्याहारेण योज्यम् । राजैव वा स्तूयते इन्द्रत्वाध्यारोपेण, एवमयमिन्द्रः पूर्वयुद्धेष्वजयदिति । लोडर्थे वा लङ् । अयमिन्द्रः शतं सेनाः साकं जयत्विति । एवमुत्तरेष्वपि द्रष्टव्यम् ॥

संक्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ।
तदिन्द्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥

(अष्ट० ८. अध्या० ५. व० २२. ऋ० २.)

सङ्क्रन्दनेनानिमिषेण । द्वे अपि पदे व्याख्याते । जिष्णुना जयशीलेन । युत्कारेण । युत् युद्धम् । तत् करोतीति युत्कारः । तेन । कर्मण्यण् । दुश्च्यवनेन च्यावयितुमशक्येन । धृष्णुना धर्षणशीलेन । एवंभूतेनानेनेन्द्रेण तत् परबलं जयत । तत् सहध्वम् अभिभवत च । हे युधो नरः! योद्धारो मनुष्याः! । इषुहस्तेन इषून् हस्ते बिभ्रता । वृष्णा वर्षित्रा शराणाम् ॥

सइषुहस्तैःसनिषङ्गिभिर्वशीसंस्रष्टासयुधइन्द्रोगणेन ।
संसृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥

(अष्ट० ८. अध्या० ५. व० २२. ऋ० ३)

स इषुहस्तैः । स इन्द्रः कदाचिदिषुहस्तैः शत्रुभिरात्मानं संस्रष्टा तैरात्मानं संसृजति । तैः सह युध्यते स्वयमपीषुहस्तः । स एव कदाचित् निषङ्गिभिः खड्गिभिः संस्रष्टा स्वयमपि खड्गहस्तः । वशी स्वतन्त्रः । स एव कदाचित् युधः । षष्ठ्यर्थे प्रथमा । युधां योद्धॄणां गणेन संस्रष्टा । बहुभिः

सह युध्यत इत्यर्थः । संसृष्टजित् यो यदा संसृष्ट इषुहस्तो निषङ्गी गणो वा तदा तस्य जेता । सोमपाः सोमपानशीलः । बाहुशर्धी । शर्धं बलम् । बाहुबलेन तद्वान् । उग्रधन्वा अनभिभवनीयधन्वा । ऊर्ध्वधन्वेति तैत्तिरीयके पाठः । ऊर्ध्वमेव सर्वदा धनुरस्य, न कदाचिन्निर्व्यापारः । प्रतिहिताभिः क्षिप्ताभिरिषुभिरस्ता क्षेपणशीलः शत्रूणाम् ॥

उत्तरा बार्हस्पत्या ।

बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥

(अष्ट० ८. अध्या० ५. व० २२. ऋ० ४.)

बृहस्पते । हे बृहस्पते! परिदीय । दीदिहि, दीदासि, दीदायेति दीप्त्यर्थस्य प्रयोगो दृश्यते । तस्यायं प्रयोगः । परितो दीप्यस्व । रथेन अस्माकं रक्षार्थं रथमारुह्य युद्धे सर्वतो दीप्यस्व । डीङो वा गत्यर्थस्य डकारस्य दकारः । रथेन परितो गच्छ । रक्षोहा रक्षसां हन्ता । अमित्रान् अस्मच्छत्रून् अपबाधमानः । तेषां च सेनाः प्रभञ्जन् आमृद्नन् । प्रमृणः । मृणिर्हिंसार्थः । इगुपधलक्षणः कः । प्रकर्षेण हिंसिता शत्रूणाम् । तांश्च युधा जयन् । एवं भूत्वा रथेन परिदीय । अस्माकं च ये रथास्तेषामविता एधि भव रक्षिता ॥

बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥

(अष्ट० ८. अध्या० ५. व० २२. ऋ० ५.)

बलविज्ञायः । बलं विजानाति परेषामिति बलविज्ञायः । आकारान्तादपि सोपसर्गादण् । बलेन वा विज्ञायते बलविज्ञायः । कर्मणि घञ् । 'या च का च बलकृतिरिन्द्रकर्मैव तदि'ति नैरुक्ताः । स्थविरो ज्ञानेन वृद्धः । प्रकृष्टो वीरः प्रकृष्टा वा वीरा अस्येति प्रवीरः । सहस्वान्, सहो बलं, तद्वान् । वाजी, वाजमन्नं वेगो वा, तद्वान् । सहमानः अभिभवन् । उग्रः अप्रसह्यः । अभिगतो वीरान् अभिगता वा वीराः एनम् अभिवीरः । सत्वानो भृत्यम.... ...'अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः' इति । तानभिगतः

1. 'लं ब' ख. ग. पाठः.

तैर्वाभिगतः अभिसत्वा । सहोजाः । सहो बलं, ततो जातः । बलातिशय-प्रतिपादनपरमेतत् । बलवतोऽपि किल जातो बलवान् भवति । किं पुनर्बलादेव जात इति । दृश्यते चान्यत्रापि — 'ओजसो जातमुत मन्य एनम्' इति, 'त्वमिन्द्र! बलादधि सहसो जात ओजस' इति च । एवंभूतस्त्वं हे इन्द्र ! जैत्रं जयहेतुभूतं रथमातिष्ठ आरोह । गोवित् पणिभिरपहृतानां गवां लब्धा ॥

गोत्रभिदंगोविदंवज्रबाहुंजयन्तमज्मप्रमृणन्तमोजसा ।
इमंसजाताअनुवीरयध्वमिन्द्रंसखायोअनुसंरभध्वम् ॥

(अष्ट० ८. अध्या० ५. व० २२. ऋ० ६.)

गोत्रभिदम् । गोत्राणां मेघानां पर्वतानां वा भेत्तारम् । गोविदं व्याख्यातम् । वज्रबाहुं, स्पष्टोऽर्थः । अज्मेति गृहनाम । जयन्तं शत्रूणां पुराणि दारयन्तम् । पुरन्दरो हि स भवति । ओजसा प्रमृणन्तं प्रकर्षेण हिंसन्तम् । कान् । ये हिंस्याः । एवंभूतमिममिन्द्रं राजानं हे सजाताः[1] ! सहजाताः ! समानजन्मानः ! भ्रातरः ! अनुवीरयध्वम् । अयं तावद् वीरकर्म कुरुते । यूयमिममनुवीरयध्वम् । हे सखायः ! अमात्यादयः ! यूयमिममनुसंरभध्वम् । अयं तावत् संरभते जेतुम् । यूयं चानुसंरभध्वमिति ॥

अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिन्द्रः ।
दुश्च्यवनःपृतनाषाळयुध्यो३ऽस्माकंसेनाअवतुप्रयुत्सु ॥

(अष्ट० ८. अध्या० ५, व० २३. ऋ० ७.)

अभि गोत्राणि । गोत्राणि मेघान् पर्वतान् वा । सहसा बलेन । अभिगाहमानो विदार्यान्तः प्रविशन् । अदयो निर्दयः । वीरः शतमन्युर्बहुक्रोधः । दुश्च्यवनः च्यावयितुमशक्यः । पृतनाः शत्रुसेनाः अभिभवतीति पृतनाषाट् । अयुध्यः योधितुमशक्यः । एवंभूत इन्द्रः अस्माकं सेनाः युत्सु सङ्ग्रामेषु प्रावतु प्रकर्षेण रक्षतु ॥

इन्द्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ।
देवसेनानामभिभञ्जतीनांजयन्तीनांमरुतोयन्त्वग्रम् ॥

(अष्ट० ८. अध्या० ५. व० २३. ऋ० ८.)

---

१. 'ताः समा' ग. पाठः.

इन्द्र आसाम् । आसाम् अस्मदीयानां सेनानाम् । राज्ञा सहाभेदमापन्नस्य पुरोहितस्य वचनम् । आसामिन्द्र एव नेता भूत्वा बृहस्पतिश्च पुर एतु अग्रे गच्छतु । एवं दक्षिणा 'द्वादशं शतमि'त्यादिका पुर एतु । तथा यज्ञः । तस्य विशेषणं — सोमः । सोमगुणकः सोमयागः । यज्ञदक्षिणयोरधिष्ठातृद्वारं पुरोगमनम् । अत्र दृष्टान्तः[2] — देवसेनानाम् । यथेत्यध्याहार्यम् । यथा देवसेनानामभिभञ्जतीनाम् । 'भञ्जो आमर्दने' । असुरसेना आमृद्नतीनाम् । अत एव जयन्तीनां मरुतो देवा यन्तु । लडर्थे लोट् । यन्ति । अग्रम् । सप्तम्यर्थे द्वितीया । अग्रे । तथैव तैत्तिरीयाः पठन्ति — "यथा देवसेनानामग्रे मरुतो यन्ति[3] एवमस्मत्सेनानां पुर इन्द्रादयो यन्त्वि[4]"ति

इन्द्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रम् ।
महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥

(अष्ट० ८. अध्या० ५. व० २३ ऋ० ९.)

इन्द्रस्य । शर्धो बलम् । इन्द्रादीनामुग्रमप्रसह्यं महामनसामुद्धतमनसां भुवनच्यवानां कृत्स्नस्य भुवनस्य च्यावयितॄणाम् । एवं नाम बलवतां देवानां जयतां घोष उदस्थात् उत्थितः । एवं तावत् पूर्वं देवासुरयुद्धे वृत्तम् । अद्यापि तव च त्वदमात्यानां च शर्ध उग्रमस्तु । त्वत्सेनापतीनां च जयतां घोष उत्तिष्ठत्विति ॥

उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि ।
उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयन्तुघोषाः ॥

(अष्ट० ८. अध्या० ५. व० २३. ऋ० १०.)

उद्धर्षय । हे मघवन्[5]! धनवन्! इन्द्र! आयुधान्यस्मदीयान्युद्धर्षय उत्कृष्टहर्षयुक्तानि कुरु यथा हृष्टा उज्ज्वला भवन्ति तथोज्ज्वलानि कुरु । तथा मामकानां सत्त्वानां परिचारकपुरुषाणां सैनिकानां मनांस्यप्युद्धर्षय उद्धतानि कुरु । हे वृत्रहन्! वाजिनां मदीयानामश्वानां वाजि-

---

१. 'दुम', २. 'न्तः य' घ. ङ. पाठः. ३. 'या', ४. यान्तीति' ख. ग. पाठः. ५. 'वन्! इन्द्र' घ. ङ. पाठः.

नानि बलानि वेगान् वोद्धर्षयोत्कृष्टानि कुरु । तथास्मदीयानां रथानां जयतां घोषा उद्यन्तु ॥

अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयन्तु ।

अस्माकंवीराउत्तरेभवन्त्वस्माँउदेवाअवताहवेषु ॥

(अष्ट० ८. अध्या० ५. व० २३. ऋ० ११.)

अस्माकम् । स्वेषु च परेषु ध्वजेषु समृतेषु सङ्गतेषु श्लिष्टेष्विन्द्रः अस्माकं भवतु अस्मत्पक्षे भवतु । 'तमिद्धनेषु हितेष्वधिवाकाय हवन्ते । येषामिन्द्रस्ते जयन्ती'ति च मन्त्रान्तरम् । इन्द्रे चास्मदीये सति अस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे उत्कृष्टा भवन्तु । अथेतरान् देवान् प्रति — हे देवाः! यूयमस्मान् उ अस्मानेवावत रक्षत हवेषु । परस्परं ह्वयन्ति येषु ते हवाः सङ्ग्रामाः ॥

अमीषांचित्तंप्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ।

अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥

(अष्ट० ८. अध्या० ५. व० २३. ऋ० १२.)

अमीषाम् । परेण प्रेरिता परानाप्नोतीत्यप्वा कृत्या । व्याधीनामधिदेवतेत्यन्ये । अलक्ष्मीरित्यपरे । हे अप्वे! अमीषां मद्रिपूणां चित्तं प्रतिलोभयन्ती मोहयन्ती तेषामङ्गानि गृहाण । परेहि मत्समीपात् परागच्छ । परेत्य चाभिप्रेहि शत्रूनभिमुखा प्राप्नुहि । प्राप्य च हृत्सु शोकैः शत्रून् निर्दह । निर्दग्धाश्चामित्राः अन्धेन तमसा सचन्तां सम्बध्यन्ताम् ॥

प्रेताजयतानरइन्द्रोवःशर्मयच्छतु ।

उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥

(अष्ट० ८. अध्या० ५. व० २३. ऋ० १३.)

प्रेत । हे मदीयाः! नरः! योद्धृपुरुषाः! प्रेत शत्रून् प्रति प्रकर्षेण गच्छत । प्रेत्य च जयत । इन्द्रश्च वः शर्म यच्छतु । बाहवश्च वः उग्रा असह्याः सन्तु । यथा सति यूयमनाधृष्याः असथ शत्रूणाम् अप्रधृष्याः भवथ, तथा बाहवः उग्राः सन्त्विति ॥

शासइत्थामहाँअस्यमित्रखादोअद्भुतः।
नयस्यहन्यतेसखानजीयतेकदाचन॥

(अष्ट० ८. अध्या० ८. व० १०. ऋ० १.)

शास इत्था। शास ऋषिः, हे इन्द्र! यस्य ते सखा स्तोता यष्टा च न केनापि हन्यते न कदाचन जीयते स त्वं शासः सर्वस्य शासिता। इत्था सत्यनामैतत्। सत्यमेव महानसि। अमित्रखादः अमित्राणां भक्षयिता च अद्भुतः आश्चर्यभूतश्च। स त्वमस्यापि राज्ञोऽमित्रान् शाधि खाद च॥

स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी।
वृषेन्द्रःपुरएतुनःसोमपाअभयङ्करः॥

(अष्ट० ८. अध्या० ८. व० १०. ऋ० २.)

स्वस्तिदाः। अविनाशस्य दाता विशः देवविशो मनुष्यविशश्च। पतिः स्वामी पालयिता वा। वृत्रहा विमृधः मृधिः सङ्ग्रामकर्मा। तथा वि-पूर्वादिगुपपदात् कः। विशेषेण योद्धा। वशी स्वतन्त्रः वृषा वर्षणकर्मा। सोमपाः एवंभूत इन्द्रो युद्धेऽभयङ्करो भवन् नः पुर एतु॥

विरक्षोविमृधोजहिविवृत्रस्यहनूरुज।
विमन्युमिन्द्रवृत्रहन्नमित्रस्याभिदासतः॥

(अष्ट० ८. अध्या० ८. व० १०. ऋ० ३.)

विरक्षः। हे इन्द्र! वृत्रहन्! रक्ष अस्मान् बाधितुमागतं विजहि। मृधः सङ्ग्रामकारिणश्च विजहि। वृत्रस्य शत्रुनामैतत्। अस्मच्छत्रोः हनू आस्यपर्यन्तप्रदेशौ। विरुज भङ्ग्धि। अभिदासतः अस्मानुपक्षपयतः अमि-त्रस्य मन्युं अस्मद्विषयकोपं च विरुज॥

विनइन्द्रमृधोजहिनीचायच्छपृतन्यतः।
योअस्माँअभिदासत्यधरंगमयातमः॥

(अष्ट० ८. अध्या० ८. व० १०. ऋ० ४.)

वि नः। हे इन्द्र! नः अस्माकं मृधः सङ्ग्रामकारिणः शत्रून् वि-जहि। पृतन्यतः योद्धुकामांश्च। नीचा नीचे स्थाने कारागृहादौ यच्छ

दाण् दाने । यच्छादेशः । देहि क्षिप । यश्चास्मानभिदासति उपक्षपयति । तमधरम् अत्यन्तनिकृष्टं तमः नरकम् अन्धतामिस्राख्यं गमय प्रापय ॥

अपेन्द्रद्विषतोमनोपजिज्यासतोवधम् ।
विमन्योःशर्मयच्छवरीयोयवयावधम् ॥
(अष्ट० ८. अध्या० ८. व० १०. ऋ० ५.)

अपेन्द्र । हे इन्द्र! योऽस्मान् द्वेष्टि । तस्य मन इन्द्रियम् अप । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । अपगमय शून्यं निःसंज्ञं कुरु । यश्चास्मान् जिज्यासति । ज्या वयोहानौ वयोहीनान् कर्तुमिच्छति तस्य वधं, वज्रनामैतत् । इह त्वायुधमात्रम् । वज्राद्यायुधमपगमय । मन्योः, मतुब्लोपोऽत्र द्रष्टव्यः । अस्माकमुपरि मन्युमतोऽपि शत्रोः सकाशात् वरीयः उरुतरं शर्म यच्छ । सोऽपि यथास्माकं सुखं करोति तथा कुरु । वधं तु तेन चिकीर्षितं यवय अस्मत्तो वृथा कुरु ॥

प्रधारायन्तुमधुनोघृतस्ययदविन्दथुःसुरी ।
उस्रियायामित्रावरुणौभुवनस्यकारूतामश्विनाजुषातांसर्माके ॥

प्रधारा यन्तु । सप्तर्चम् । सौपर्णम् । षडाखिन्यः अन्त्या ऐन्द्रावरुणी । निविद्योपनिषच्च ब्रह्मवादिन्यौ ऋषी ॥

हे अश्विना! अश्विनौ! । सुरी स्तोतृनामैतत् । इह तु स्तुतिसम्बन्धात् स्तुत्यवाचि । स्तुत्यौ मित्रावरुणौ । तत्सदृशे अयं तच्छब्दः । यथा मित्रः सर्वस्य मित्रम् 'सर्वस्य वाहं मित्रमस्मी'ति दर्शनात् । वरुणश्च वरण्यः । तादृशौ भुवनस्योदकस्य । कारू कर्तारौ वर्षितारौ । यद् युवामविन्दथुः अविन्देथां लब्धवन्तौ स्थः । उस्रियायां षष्ठ्यर्थे सप्तमी । उस्रिया गौः तस्याः सम्बन्धि । किं पुनस्तत् पयः 'आघर्मे सिञ्च पय उस्रियायाः' इति दर्शनात् । आश्विनं हि तत् पयः । 'आनूनमश्विनोरृषिरि'ति होमे[1] दर्शनात् । 'यद्वा अश्विनाम् धुनः सारघस्ये'ति यदिति वचनात् तस्येति गम्यते । तस्य मधुना मधुस्वादस्य घृतस्य दीप्तस्य तप्तमहावीरनिषेकात् । एवंभूतस्य पयसो धाराः । प्रयन्तु युवां प्रत्यूर्ध्वं प्रकर्षेण यन्तु ।

---

१. 'हार्यां' अ' क. पाठः. २. 'र' घ. ख. पाठः. ३. 'म', ४. 'स्य म' क. पाठः.

लडर्थे लोट्, प्रेष्यन्ति । यजमानान्तरेषु यत् पयः प्रवर्ग्ये युवामविन्देथाम् । तस्य सारा अस्मद्यज्ञेऽपि युवां प्रेष्यन्ति । वयमपि युवां यक्ष्यामहे । एतज्ज्ञात्वा । तातौ । युवामिमं समीके सङ्ग्रामे अस्मिन् उपस्थितं जुषतां जुषेथां रक्षकत्वेन सेवेथाम् । अन्ये तु मैत्रावरुणीमेतां मन्यन्ते । तयोरामिक्षालक्षणं पयः स्वभूतम् । अश्विनाविति अश्ववन्तावित्यर्थः ॥

आ वां रथं शतयावानमाशुं प्रातर्यावाणं सुषदं हिरण्ययम् ।
अतिष्ठद् यत्र दुहिता विवस्वतस्तन्मे अर्वाञ्चमवसे करामहे ॥

वां युवयोः स्वभूतं रथम् । आशुं शीघ्रगामिनम् । तत्र प्रकारः शतयावानं निमेषमात्रेण योजनानां शतस्य यातारम् । 'निमिषश्चिज्जवीयसे'ति च मन्त्रान्तरम् । प्रातर्यावाणमश्विनाप्रातरनुवाकादौ । सुषदं सुखेन यत्राश्विनौ निषीदतः तम् । हिरण्ययं यं हिरण्मयं यत्र रथे विवस्वतो दुहिता सूर्या अतिष्ठत् मन्त्रान्तराणि च भवन्ति । 'अनो मनस्वयं सूर्यारोहत् प्रयातीपतिं सोमो वधूयुरभवदश्विनास्तामुभावरे'त्यादीनि । तं रथमर्वाञ्चं मां प्रत्यभिमुखमागन्तारम् । करामहे कुर्महे । किमर्थम् । अवसे सङ्ग्रामे अस्मभ्यं रक्षणाय ॥

आ वामश्वासो रथिरा विपश्चितो वाग्धृषजः सुयुजो घृतश्च्युतः ।
येभिर्याथोपसूर्यां वरेयां तेभिर्नो दस्राववतं समत्सु ॥

आङोऽवतमित्याख्यानेन सम्बन्धः । हे दस्रौ ! वां युवयोः स्वभूता अश्वाः । रथिराः रथवन्तो रथे युक्ता विपश्चितः सारथेरभिप्रायज्ञाः वाग्धृषजः वाङ्मात्रेण धर्षितारः परेषां हेषितशब्देनैव शत्रूणामभिभवितारः । सुयुजः यदा रथे युज्यन्ते तदा स्वयमेव सुष्ठु युज्यमानाः । घृतश्च्युतः अतिस्निग्धशरीराः । ते हि शरीराद् घृतं श्च्योतन्तः क्षरन्त इव भवन्ति । एवंभूता युवयोरश्वाः येभिर्यैः सूर्यां सवितुर्दुहितरं वरेयां वरेण्याम् । वरेयमिति पाठे लिङ्गव्यत्ययः । तामुपयाथः भूते लट् उपयातौ स्थः । तेभिस्तैरश्वैर्नोऽस्मान् समत्सु सङ्ग्रामेषु आ अवतम् आभिमुख्येन रक्षतम् ॥

यद्वा रेतो अश्विना पोषयित्नुयद्वासभोवर्ध्रीमत्यै सुदान् ।
यस्माज्जज्ञे देवकामः सुदक्षस्तदस्यै दत्तं भिषजावभिद् ॥

रेत इत्युदकनाम । मध्यमस्थानावश्विनौ वर्षितारौ । हे अश्विनौ ! वां युवयोः सम्बन्धि । यद् रेतो वृष्ट्युदकम् । पोषयित्नु जगतः पोषयितृ ।

यश्च रासभः युवयो रथे युक्तो गर्दभः । जातावेकवचनम् । रथाश्वप्रकरणे 'रासभावश्विनोरि'ति हि निघण्डुः ! 'गर्दभरथेनाश्विनावुदजयता मि'ति ब्राह्मणम् । सः वध्रीमत्यै, वध्रीमती नाम योद्ध्री । सा युध्यमाना शत्रुभिश्छिन्नहन्ता तृषा चार्तावश्विनौ तुष्टाव । तावागत्य तस्यै हिरण्मयं हस्तं पुत्रं च ददतुः । वृष्ट्युदकेन च पिपासां शमयाञ्चक्रतुरितीतिहासः स्मर्यते । तदेतत् कक्षीवतोक्तम् — 'हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रीमत्या दत्तमि'ति । इह तूदकदानमुच्यते । अश्विभ्यां च दत्तं तदर्थे नियुक्तो रासभ एव ददावित्युपचारः तत्समर्थाचरणात् । यदिति कर्मश्रुतेः सम्प्रदानश्रुतेश्च ददाविति योग्यक्रियाध्याहारः । हे सुदान् शोभनदानौ सुष्ठु दातारौ वा । युवयो रथेऽभियुक्तो रासभो यद् रेतो वध्रीमत्यै ददौ । यस्माद् रेतसो देवकामो देवपूजापरः पुरुषः सुदक्षो जज्ञे सुष्ठु वृद्धो जायते, तद् वृष्ट्युदकम् अस्य राज्ञः सेनायै युध्यमानायै दत्तं यथेयं सन्तापदूना न भवति । हे भिषजौ ! देवानामभिद्यु अभिद्योतमानं निर्मलं रेतः ॥

**यन्नासत्या भेषजं चित्रभानू येनावावथुस्तोककामां च घोषाम् ।**
**तदस्यै दत्तं त्रिषु पुंसुवध्यै येनाविन्दत्तनयं सुहस्त्यम् ॥**

अश्विनोरन्यतरो नासत्यः । अपरो दस्रः । द्वयोरपि द्वाभ्यामभिधानं सर्वत्र साहचर्यात् । हे नासत्या ! नासत्यौ यद् भेषजं युवयोः स्वभूतं तद्विशल्यकरणादिकमस्यै सेनायै दत्तम् । हे चित्रभानू ! नानाविधदीप्ती येन भेषजेन तोककामा च । द्वितीयार्थे प्रथमा । तोककामाम् अपत्यकामाम् । घोषां घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता । सा दुर्भगा । न तां कश्चिदुपयेमे । सा अश्विनौ तुष्टाव । तावश्विनौ भेषजेन सुभगां कृत्वा पतिवत्नीं चक्रतुः । सा पुनरपुत्रा सत्यश्विनावयजत । तावस्यै भेषजेन पुत्रं ददतुः सुहस्त्यं नाम इतीतिहासः स्मर्यते । तदिदमत्रोच्यते । येन भेषजेन घोषां युवामवावथुः । अवशब्दो धात्वर्थानुवादी । रक्षितवन्तौ स्थः । क्व । त्रिषु प्रातस्सवनादिषु सवनेषु । यज्ञमध्य इत्यर्थः । किमर्थम्, पुंसुवध्यै पुमांसं सोतुं येन भेषजेन सा घोषा सुहस्त्यं नाम तनयमविन्दत् लब्धवती ॥

**वषड्वां दस्रावस्मिन् सुतो नासत्या होता कृणोतु वेधाः ।**

द्विपदैषा । पूर्वपादो नवाक्षरः । उत्तरो दशाक्षरः । हे दस्रौ ! दस्रनामानौ । नासत्या नासत्यन्नामानौ । अस्मिन् सोमे । सुतः सप्तम्यर्थे प्रथमा । सुते अभिषुते सोमे सति । होता वां युवाभ्यां वषट्कृणोतु । वषट्कारं करोतु । वेधाः सर्वस्य कर्मणो विधाता । एतज्ज्ञात्वा युवामस्मज्जयाय व्याप्रियेथाम् ॥

इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं भूतिमस्मासु धत्तं दीर्घायुत्वाय प्रतिरतं न आयुः ॥

हे इन्द्रावरुणौ ! यजमानेषु ये युवां यजन्ते तेषु सौमनसं सौमनस्यम् । अदृप्तं दर्पाभावं 'दृप्तो धर्ममतिक्रामती'ति तदभावः पुरुषार्थः । रायो धनस्य पोषं च धत्तम् । लडर्थे लोट् । धत्थः । एष युवयोः स्वभावः वयं च युवां यजामहे । अतोऽस्मास्वपि प्रजां पुष्टिं च तद्वतां भूतिं चैश्वर्यलक्षणां धत्तम् । आयुश्च नः प्रतिरतं प्रवर्धयतम् । दीर्घायुत्वाय । यथा तदायुर्दीर्घं भवति तथा प्रतिरतम् । युद्धे प्रविष्टस्यायुषो हानिशङ्कयेदं प्राथ्यर्ते ॥

उपश्वासयेति तृचेन दुन्दुभिमभिमृशेत् ।

उपश्वासयपृथिवीमुतद्यांपुरुत्रातेमनुतांविष्ठितंजगत् ।
सदुन्दुभेसजूरिन्द्रेणदेवैर्दूराद्दवीयोअपसेधशत्रून् ॥

(अष्ट० ४. अध्या० ७. व० १५. ऋ० २९.)

गर्गस्यार्षम् । उपशब्द आङर्थे । आश्वासय । पृथिवीमुत द्यां द्यामपि । पुरुत्रा बहुधा । ते तव स्वभूतम् । घोषमित्यर्थाद् गम्यते । तव घोषं बहुधा मनुतां बुध्यतां शृणोतु । विष्ठितं स्थावरम् । जगत् जङ्गमं च । स्थावरजङ्गमात्मकं सर्वमेव ते शब्दं शृणोतु । एवं नाम ते घोषः उच्चैर्भवतु । य एवं स्तुतोऽस्माभिः स त्वं हे दुन्दुभे ! इन्द्रेण देवैश्च सजूः सम्प्रीयमाणः सन् दूराद्दवीयो दूराद् दूरतरं शत्रूनस्माकमपसेध अपगमय ॥

आक्रन्दयबलमोजोनआधानिःष्टनिहिदुरिताबाधमानः ।
अपप्रोथदुन्दुभेदुच्छुनाइतइन्द्रस्यमुष्टिरसिवीळयस्व ॥

(अष्ट० ४. अध्या० ७. व० ३५ ऋ० ३०.)

---

१, 'तु वेधाः' ख.पाठः.

आक्रन्दय । आक्रन्दनमाह्वानमस्मदीयं सेनालक्षणं बलम् आक्रन्दय । यथा त्वद्घोषश्रवणेन हृष्टं परबलमाह्वयते तथा कुरु । ओजश्च नः विभक्ति-व्यत्ययः । अस्मासु । आधाः आधेहि । निःष्टनिहि निष्टनं शब्दनं शब्दाः यस्व । दुरितानि शत्रुभिश्चिकीर्षितानि बाधमानोऽपप्रोथ अपगमय । हे दुन्दुभे ! दुच्छुनाः दुर्भिक्षनामैतत् ! दुर्भिक्षेण चानर्थो लक्ष्यते । तेन तत्कारिण्यः परसेनाः । ता इतोऽस्मत्समीपादपप्रोथ । इन्द्रस्य त्वं मुष्टिरसि तद्वत् परेषां भयं करोषि । वीलयस्व । वीळुरिति दृढनाम । 'स्थिरा गावौ भवतां वीळु रक्षः' 'वीळुश्चिदद्रिमि'त्यादौ दर्शनात् । तत् करोतीति णिचि टिलोपे रूपम् । वीलयस्व दृढमात्मानं कुरु । धातुरेव वा वीलयस्वेति । दृढो भव ॥

आमूरजप्रत्यावर्तयेमाःकेतुमद्दुन्दुभिर्वावदीति ।

समश्वपर्णाश्चरन्तिनोनरोस्माकमिन्द्ररथिनोजयन्तु ॥

(अष्ट० ४. अध्या० ७. व० ३५. ऋ० ३१.)

आमूः । ऐन्द्रयेषा । दुन्दुभिलिङ्गात् तदभिमर्शने विनियुक्ता । हे इन्द्र ! अमूः परसेनाः आ अज समन्तात् क्षिप । इमास्तु मदीयाः सेनाः । प्रत्यावर्तय पलायमानाः प्रतिनिवर्तय । अयं मदीयो दुन्दुभिः । केतुमत् केतुज्ञानं तद्युक्तं यथा तथा वावदीति । यथा सर्वैः प्रज्ञायेत तथा घोषं करोति । करोत्विति वा । नः अस्माकमश्वपर्णाः अश्वपृतनाः अश्वारोहा नरः मनुष्याः सञ्चरन्ति सञ्चरन्तु । रथिनश्चास्माकं जयन्तु ॥

अवसृष्टा परापतेतीषून् विसर्जयेत् ।

अवसृष्टापरापतशरव्येब्रह्मसंशिते ।

गच्छामित्रान्प्रपद्यस्वमामीषांकञ्चनोच्छिषः ।

(अष्ट० ५. अध्या० १. व २२. ऋ० १६.)

वायोर्भारद्वाजस्यार्षम् । शरपर्यायः शरुशब्दः । दृश्यते हि 'धुनिः शिमीवाँञ्छरुमाँ जीषि' इति । ततः समूहे स्वार्थे वा यत्प्रत्ययः । तच्च स्वभावतः स्त्रीलिङ्गम् । शरव्ये । ब्रह्मसंशिते । ब्रह्मणा मन्त्रलक्षणेन वेदेन संशिते तीक्ष्णीकृते । मयाव-

१ 'ति दृढनाम' क. पाठः.

सृष्टा क्षिप्ता त्वं परापत शत्रून् प्रति गच्छ । परापत्य गच्छ । गत्वा च अमित्रान् प्रपद्यस्व तच्छरीरेषु प्रविश । प्रविष्टा चामीषां शत्रूणां मध्ये कञ्चन कञ्चिदपि मोच्छिषः यथा न कश्चिच्छिष्यते तथा कुरु ॥

यत्र बाणाः सम्पतन्तीति युध्यमानेषु जपेत् ।

यत्रबाणाःसम्पतन्तिकुमाराविशिखाइव ।

तत्रानोब्रह्मणस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु ॥

(अष्ट० ५. अध्या० १. व० २२. ऋ० १७.)

यत्र सङ्ग्रामे । बाणाः स्वे च परे च । सम्पतन्ति युगपत् पतन्ति । कुमारा विशिखा इव । चौलकर्मणः प्राग् विशिखाः कुमाराः क्रीडन्तो यथा । इतस्ततः सम्पतन्ति तद्वत् । तत्र युद्धे नः अस्मभ्यं ब्रह्मणस्पतिर्बृहस्पतिः एवन्नामकं देवतान्तरं वा । अदितिः देवमाता च शर्म यच्छतु सुखं ददातु । न च केवलं सकृत् । किन्तर्हि । विश्वाहा सर्वदा शर्म यच्छतु ॥

इति हरदत्तमिश्रविरचितायामाश्वलायन-
गृह्यमन्त्रव्याख्यायां तृतीयोऽध्यायः ।

---

## अथ चतुर्थोऽध्यायः

अथ पितृमेधमन्त्राः व्याख्यायन्ते — प्राच्यैतं भूमिभागं प्रोक्षति अपेतवीत ।

अपेतवीतविचसर्पतातोस्माएतंपितरोलोकमक्रन् ।

अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यवसानमस्मै ॥

(अष्ट० ७. अध्या० ६. व० १५. ऋ० ९.)

यमस्यार्षम् । ये अत्र पूर्वं निवसथ .... .... प्रेतादयस्ते यूयमतः स्थानादपेत अपगच्छत । अपगच्छन्तश्च वीत वियुत्य गच्छत । न सङ्घीभूय । विसर्पत च विशेषेण दूरतरं गच्छत । कस्मात् । एतं लोकमिदं स्थानमस्मै प्रेताय पितरोऽक्रन् कृतवन्तो दत्तवन्तः । किञ्चाहोभिर्दिवसैः । अद्भिश्च प्रोक्षणोदकैरक्तुभिः । रात्रिभिश्चैतैः शुद्धिहेतुभिर्व्यक्तं सङ्गतं शोधितमिदम् अवसानं स्थानमस्मै प्रेतायास्य दहनार्थं यमो ददाति । अतो यूयमपेतेति ॥

पत्नीमुपशयानामुत्थापयेद् देवरः ।

उदीर्ष्वनार्यभिजीवलोकंगतासुमेतमुपशेषएहि ।

हस्तग्राभस्यदिधिषोस्तवेदंपत्युर्जनित्वमभिसम्बभूथ ।

(अष्ट० ७. अध्या० ६. व० २१. ऋ० ८.)

उदीर्ष्वनारि । सङ्कुसुकस्यैषा । हेनारि । या त्वं गतासुं गतप्राणमेतं पतिमुपशेते उपसृत्य शेषे सोदीर्ष्वोत्तिष्ठ । उत्थाय च जीवलोकमभ्येहि । नचैवं ते पतिलोकहानिः । यतस्त्वमभिसन्धिमात्रेणैव हस्तग्राभस्य विवाहसमये मन्त्रवत्पाणिं गृहीतवतः दिधिषोर्गर्भस्याधातुस्तव पत्युरिदं जनित्वं जन्म लोकान्तरप्राप्तिलक्षणमभिसम्बभूथ अभिसम्बभूविथ । तस्मादुच्यत उदीर्ष्वेति ॥

धनुर्हस्तादिति मृतस्य क्षात्रियस्य हस्ताद् धनुरादत्ते ।

धनुर्हस्तादाददानोमृतस्यास्मेक्षत्रायवर्चसेबलाय ।

अत्रैवत्वमिहवयंसुवीराविश्वास्पृधोअभिमातीर्जयेम ॥

(अष्ट० ७. अध्या० ६. व० २७. ऋ० ५)

सङ्कुसुकस्यैव तव हस्ताद् धनुराददानोऽहम् । किमर्थम् । अस्मे क्षत्राय त्वत्पुत्रादेरर्थाय । वर्चसे बलाय । एतद्धनुर्गृहीत्वा वर्चस्वी बलवान् यथा भवेदिति । त्वं पुनरत्रैव दहनदेशे भव । वयं त्विह लोके सुवीराः शोभनैर्वीरैस्तद्वन्तो भूत्वा विश्वा स्पृधः स्पर्धमाना अभिमातीः । शत्रुपर्यायोऽयं स्त्रीलिङ्गश्छन्दसि प्रयुज्यते । तान् जयेम शत्रून् जयेम ॥

अनुस्तरण्या वपामुत्खिद्य शिरोमुखं प्रच्छादयेत् — अग्नेर्वर्म परिगोभिर्व्ययस्वेति ।

अग्नेर्वर्मपरिगोभिर्व्ययस्वसम्प्रोर्णुष्वपीवसामेदसाच ।

नेत्त्वाधृष्णुर्हरसाजर्हृषाणोदधृग्विधक्ष्यन्पर्यङ्खयाते ॥

(अष्ट० ७. अध्या० ६. व० २१. ऋ० ७.)

दमनस्यार्षम् । प्रेतं प्रत्युच्यते । हे प्रेत ! अग्नेर्वर्म वर्मस्थानीयज्वालासमूहः । गोभिः विकारेऽयं प्रकृतिशब्दः । 'गोभिः प्रीणीत मत्सरमि'ति यथा । लोमाद्यपेक्षं बहुवचनम् । आजगव्यादिभिर्विकारैश्चर्मादिभिः परिव्ययस्व परितः

छादय । सम्प्रोर्णुष्व सम्यक् छादय । मेदसा । वपाभिधानमेतत् । वपया । कीदृशेन । पीवसा । यदुपयुञ्जानाः पीवानो भवन्ति, तादृशेन । पीवरत्वस्य निमित्तभूतया वपया चात्मानं छादय । एवंकृते किं भवति । न इत् नेत् । नैव । त्वा धृष्णुर्धर्षणशीलः अग्निः हरसा स्वेन तेजसा जर्हृषाणः दाह्यलाभेनात्यन्तं हृष्यन् । दधृक् पाकादिभिर्जगतो धारयिता । विधक्ष्यन् विविधं धक्ष्यन् भूत्वा नैव त्वा पर्यङ्खयाते व्याप्नुयात् ॥

वृक्कावुद्धृत्य पाण्योरादध्यात् 'अतिद्रवे'ति ।

अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा ।

अथापितॄन्त्सुविदत्राँउपेहियमेनयेसधमादंमदन्ति ॥

(अष्ट० ७. अध्या० ६. व० १५. ऋ० १०.)

यमस्यैषा । पाण्योराहितवृक्कस्त्वं सारमेयौ सरमा देवशुनी तस्याः पुत्रौ श्वानौ अतिद्रव । चत्वार्यक्षीणि ययोस्तौ चतुरक्षौ । अक्ष्णोरधस्तदाकारौ बिन्दू बलवतां शुनां भवेताम् । तदभिप्रायमेतत् । सत्यमेव वा । शबलौ नानावर्णौ । साधुना कण्टकादिरहितेन पथा गच्छन्नतिद्रव । अतिद्रुत्य च अथ अनन्तरं पितॄन् सुविदत्रान् शोभनज्ञानान् उपेह्युपगच्छ । ये पितरो यमेन सधमादं मदन्ति सह माद्यन्ति । ओदनपाकं पचन्तीतिवत् कर्मता । 'मदोऽनुपसर्गे' (३-३-६७) इत्यपि प्राप्ते छान्दसो घञ् । 'सध मादस्थयोश्छन्दसि' (६-३-९६) (इति सहस्य सधादेशः ।) ॥

प्रणीताप्रणयनमनुमन्त्रयते 'इममग्ने चमसम्' ।

इममंग्नेचमसंमाविजिह्वरःप्रियोदेवानामुतसोम्यानाम् ।

एषयश्चमसोदेवपानस्तस्मिन्देवाअमृतामादयन्ते ॥

(अष्ट० ७. अध्या० ६. व० २१. ऋ० ८.)

दमन ऋषिः । प्रक्षेप्स्यमानोऽग्निर्हृदिस्थैः सम्बोध्यते । हे अग्ने ! इमं चमसं मा विजिह्वरः । 'ह्वृ कौटिल्ये' । कुटिलं मा धाक्षीः । आर्जवेन दह । यतोऽयं प्रियो देवानाम् । उत सोम्यानां सोमार्हाणामृत्विजामपि प्रियः । य

१. 'स्थः स्वयं सं' ख. पाठः.

एष चमसो देवपानः । देवा ऋत्विजः दानादिगुणयोगात् । प्रसिद्धा एव वा । ते यत्र पिबन्ति तस्मिन् देवा अमृता अमरणधर्माणो मादयन्ते तर्पयन्त्यात्मानम् । प्रणीताभिरद्भिर्देवास्तृप्यन्ति । अतो मा विजिह्वर इति ॥

सव्यं जान्वाच्य दक्षिणाग्नौ आज्याहुतीर्जुहुयात् —

**अग्नये स्वाहा कामाय स्वाहा लोकाय स्वाहा अनुमतये स्वाहा ।**

इति । स्पष्टार्थाः सर्वे ॥

पञ्चमीमुरसि प्रेतस्य —

**अस्माद् वै त्वमजायथा अयं त्वदधिजायतामसौ स्वाहा ।**

इति । हे अग्ने ! अस्माद् यजमानाद् वै त्वमजायथाः आधानकाले जातोऽसि । 'ते मत् प्रातः प्रजनिष्येथे' इति तैत्तिरीयाणामाधाने मन्त्रा भवन्ति । अद्य त्वयं यजमानः त्वत् त्वत्तः अधिजायताम् । अधिः पञ्चम्यर्थानुवादी । स्वर्गाद्यनुभवयोग्यो जायताम् । असौ । प्रेतस्य नामनिर्देशः प्रथमया । यज्ञदत्तशर्मन् ! ॥

अथ परिचारकान् प्रेष्यति —

**युगपदग्नीन् प्रज्वलयत ।**

सर्वानेवाग्नीन् सहैव प्रज्वलयत यथा प्रेतं युगपत् प्राप्नुयुः ॥

तं दह्यमानमनुमन्त्रयते 'प्रेहि प्रेही'ति ।

**प्रेहिप्रेहिपथिभिःपूर्व्येभिर्यत्रानःपूर्वेपितरःपरेयुः ।**

**उभाराजानास्वधयामदन्तायमंपश्यासिवरुणंचदेवम् ॥**

(अष्ट० ७, अध्या० ६, व० १५, ऋ० ७.)

यमस्यार्षम् । दह्यमानं प्रति दाहकस्य वचनम् । हे प्रेत ! प्रेहि प्रेहि । द्विरुक्तिरादरार्था । स्वर्गं प्रति शीघ्रं गच्छ । पथिभिः पूर्व्येभिः । पूर्वैः पितृभिर्देवैर्वा कृताः पूर्व्याः । 'पूर्वैः कृतमिनयौ च' (४-४-१३३) इति यत्प्रत्ययः । तैः पथिभिः प्रेहि । क्व । यत्र स्वर्गादौ नोऽस्माकं पूर्वे पितरः परेयुः पराजग्मुः गतवन्तः । गत्वा च तत्र उभा राजाना उभौ राजानौ स्वामिनौ दीप्यमानौ वा । स्वधया । पितृभ्यो यद् दीयते सा स्वधा, तया । मदन्ता माद्यन्तौ तृप्यन्तौ । एवम्भूतौ देवं यमं वरुणं च पश्यासि पश्यसि द्रक्ष्यसि वा । यमः

पितृलोकपतिः। वरुणोऽपि प्रेतानां दण्डधरः। स्मर्यते मानवे—'राजा दण्डधरो हि सः' इति॥

सङ्गच्छस्वपितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन्।

हित्वायावद्यंपुनरस्तमेहिसङ्गच्छस्वतन्वासुवर्चाः॥

(अष्ट० ७. अध्या० ६. व० १५. ऋ० ८)

सङ्गच्छस्व। इतो गतस्त्वं पितृभिः सङ्गच्छस्व। संयमेन यमेन च सङ्गच्छस्व। समिष्टापूर्तेन च। इष्टं श्रौतं यागादि। पूर्तं स्मार्तं तटाकनिर्माणादि। इह तु तत्फलं विवक्षितम्। इष्टापूर्तफलेन च सङ्गच्छस्व। स त्वं परमे व्योमन् व्योम्न्युत्कृष्टे स्वर्गे। किञ्चावद्यं हित्वाय हित्वा। पुनः पश्चादस्तं गृहं विमानाख्यम् एहि। आङनर्थकः। इहि प्राप्नुहि। सङ्गच्छस्व तन्वा शरीरेण सुवर्चाः। तृतीयार्थे प्रथमा। सुवर्चसा तन्वा॥

'अतिद्रव'। गता।

यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ।

ताभ्यामेनंपरिदेहिराजन्स्वस्तिचास्माअनमीवंचधेहि॥

(अष्ट० ७. अध्या० ६. व० १६. ऋ० ११.)

यौ ते। हे यम! यौ ते तव स्वभूतौ रक्षितारौ श्वानौ चतुरक्षौ। गतम्। पथिरक्षी पथो रक्षितारौ। 'छन्दसि वनसनरक्षिमथाम्' (३. २. २७) इति इन्प्रत्ययः। नृचक्षसौ नृणां सुकृतां दुष्कृतां च द्रष्टारौ। हे राजन्! यम! ताभ्यां श्वभ्यामेनं प्रेतं परिदेहि रक्षार्थं देहि। अस्मै प्रेताय स्वस्ति च देहि। अमीवा रोगः तदभावोऽनमीवम्। तच्च धेहि॥

मैनमग्नेविदहोमाभिशोचोमास्यत्वचंचिक्षिपोमाशरीरम्।

यदाशृतंकृणवोजातवेदोथेमेनंप्रहिणुतात्पितृभ्यः॥

(अष्ट० ७. अध्या० ६. व० २०. ऋ० ९.)

मैनमग्ने। षड् दमनस्यार्षम्। हे अग्ने! एनं प्रेतं मा विदहः विदग्धं मा कार्षीः। यथास्थ्यादिकमपि न दृश्यते तथा मा धाक्षीः। माभि शोचः। अभिरल्पार्थे। मा चाल्पमेव दीपिष्ठाः। अस्य प्रपञ्चः—मास्य त्वचमदग्धमेव

चिक्षिपः । मा च शरीरम् । कथन्तर्हि करवाणि । यदा शृतं सुदग्धं कृणवः करिष्यसि, अथानन्तरं तदानीमेव । ईम् इति पादपूरणः । (हे जातवेदः !) एनं प्रेतं पितृभ्यः प्रहिणुतात् प्रहिणु प्रगमय ॥

शृतंयदाकरसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः ।
यदागच्छात्यसुनीतिमेतामथादेवानांवशनीर्भवाति ॥

(अष्ट० ७. अध्या० ६. व० २०. ऋ० २.)

शृतं यदा । हे जातवेदः ! यदा त्वमेनं शृतं करसि करिष्यसि, अथ ईम् अनन्तरमेवैनं पितृभ्यः परिदत्तात् रक्षार्थं देहि । किं कारणमेवं प्रार्थ्यते । उच्यते । यदैतामेवंविधामसुनीतिं प्राणगतिं गच्छाति गच्छेद्, अथ तदा देवानां वशनीः वशंगतः भवाति भवेत्, देवपक्षे भवेदिति ॥

सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा ।
अपोवागच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरीरैः ॥

(अष्ट० ७. अध्या० ६. व० २०. ऋ० ३.)

सूर्यं चक्षुः । प्रेतं प्रत्युच्यते । चक्षुस्ते सूर्यं गच्छतु तैजसं तेजोरूपं सूर्यं गच्छतु । वातं बाह्यं वायुम् । तवात्मा प्राणवायुर्गच्छतु । उपलक्षणमेतत् । अन्यान्यपि (प्रा ? घ्रा)णादीनि स्वकारणानि पृथिव्यादीनि गच्छन्तु । त्वं तु धर्मणा स्वकर्मवशेन । द्यां च । चशब्दो वार्थे । द्यां वा गच्छ दिव्यरूपः सन् । पृथिवीं वा गच्छ मनुष्यादिरूपेण । अपो वा गच्छ मत्स्यादिरूपेण । यदि तत्र ते हितं विहितं जन्म कर्मणा । अपर आह — अपो वा गच्छ । अन्तरिक्षं वा गच्छ यक्षादिरूपेणेति । ओषधीषु वा प्रतितिष्ठ स्थावरतां वा गच्छ । शरीरैः शरीरेण तदवयवैश्च । स्थावरता हि प्राणिनां कर्मगतिः । तथाच मनुः—

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।"

इति ॥

१. 'वभक्षे भ' ख. ग. पाठः.

अजोभागस्तपसातंतपस्वतंतेशोचिस्तपतुतंतेअर्चिः।
यास्तेशिवास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकम्॥

(अष्ट० ७. अध्या० ६. व० २०. ऋ० ४.)

अजो भागः। अज इति षष्ठ्यर्थे प्रथमा। न जायत इत्यजः आत्मा। तस्यायं भागः। सर्वपुरुषार्थसाधनतया भज्यते सेव्यत इति भागः शरीरम्। हे जातवेदः!। यस्त्वया दह्यते सोऽजस्य भागः। तं तपसा तप्त्रा रश्मिजालेन तपस्व। तमेव ते शोचिरपि तपतु। अर्चिरपि ते तमेव तपतु। त्रयाणां तपआदीनां महत्त्वाल्पत्वादिभेदाद् न रश्मिविषयतया पुनरुक्तिः। याश्च ते तन्वः शिवास्ताभिरेनं प्रेतं सुकृतां लोकं वह। उः पदपूरणः॥

अवसृजपुनरग्नेपितृभ्योयस्तआहुतश्चरतिस्वधाभिः।
आयुर्वसानउपवेतुशेषःसंगच्छतांतन्वाजातवेदः॥

(अष्ट० ७. अध्या० ६. व० २०. ऋ० ५.)

अवसृज। हे अग्ने! त्वमिमं प्रेतं पितृभ्यः पुनरवसृज। वीप्सालोपोऽत्र द्रष्टव्यः। युष्माभिरयं समानो जात इति पुनः पुनरुक्त्वा समर्पय। यः प्रेतस्ते तुभ्यम् आहुतः संस्कारार्थं त्वयि प्रक्षिप्तः सन् चरति। अन्तर्णीतसनर्थमेतत्। पितॄन् व्रतं चिचरिषति। केन हेतुना। स्वधाभिरन्नैः पितृभ्यः पुत्रादिभिर्दातव्यैर्हेतुभूतैः। ताः उपभोक्तुमायुर्जीवितं वसानः आच्छादयन् जीवेनाधिष्ठितः सन्। शेषः। द्वितीयार्थे प्रथमा। शेषम्। तथैव तैत्तिरीयाः पठन्ति। भुक्तावशिष्टं कर्मफलम् उपवेतु। 'वी गत्यादिषु'। उपगच्छतु उपभुङ्क्ताम्। तदर्थं च तन्वा सूक्ष्मशरीरेण सङ्गच्छतां हे जातवेदः!॥

यत्तेकृष्णःशकुनआतुतोदपिपीलःसर्पउतवाश्वापदः।
अग्निष्टद्विश्वादगदंकृणोतुसोमश्चयोब्राह्मणाँआविवेश॥

(अष्ट० ७. अध्या० ६. व० २१. ऋ० १.)

यत् ते। कृष्णः शकुनः काकः। सः यत् ते तवाङ्गम् आतुतोद पीडयति स्म। तथा पिपीलः पिपीलिका सर्पः उत वा अपि वा श्वापदः सृगालादिः तत्सर्वमयमग्निः विश्वाद् विश्वमत्ता भक्षयिता अगदं कृणोतु अरोगं

करोतु । यः सोमो ब्राह्मणानाविवेश आविशत्याविश्य तिष्ठति । अग्नीषोमीयो हि ब्राह्मणः ॥

पूषात्वेतश्च्यावयतुप्रविद्वाननंष्टपशुर्भुवनस्यगोपाः ।

सत्वैतेभ्यःपरिददत्पितृभ्योऽग्निर्देवेभ्यःसुविदत्रियेभ्यः ॥

(अष्ट० ७. अध्या० ६. व० २३. ऋ० ३.)

पूषा त्वेतः । चतस्रः देवश्रवस आर्षम् । पूषा आदित्यानामन्यतमः । स त्वा इतो लोकात् प्रच्यावयतु विद्वान् पथां ज्ञाता । अनष्टपशुः । दर्शनसाधन० त्वात् पशवो रश्मयः । अनष्टपशुरनष्टरश्मिः अनष्टगुर्वा । 'पूषा गा अन्वेतु नः पूषा त्वर्वतः' इति दर्शनात् । भुवनस्य गोपाः गोपायिता । क्विप्यल्लोपय-लोपयोः रूपमेतत् । स एव पूषा एतेभ्यः प्रसिद्धेभ्यः पितृभ्योऽग्निष्वात्ता-दिभ्यः परिददत् । पञ्चमो लकारः । परिदद्यात् । अग्निस्तु देवेभ्यः परिदद्यात् सुविदत्रियेभ्यः । शोभनज्ञानं सुविदत्रम् । ततो मत्वर्थीयः । शोभ-नेन ज्ञानेन तद्वद्भ्यः ॥

आयुर्विश्वायुःपरिपासतित्वापूषात्वांपातुप्रपथेपुरस्तात् ।

यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसवितादधातु ॥

(अष्ट० ७. अध्या० ६. व० २१. ऋ० ४.)

आयुः गमनशीलः । विश्वायुः सर्वतोगामी सर्वत्राप्रतिहतगतिः । कः पुनरसौ । वायुः । स त्वा परिपासति । लेटि 'लिपिसिची'ति(?) तिपः सडागमः । परिपायात् । पूषा च त्वा पातु प्रपथे प्रकृष्टे पथि पुरस्ताद् गच्छन् । देवश्च सविता आदित्यानामन्यतमः यत्र स्थाने सुकृतः आसते, यत्र वा ते ययुः गच्छन्ति तत्र त्वा दधातु स्थापयतु ॥

पूषेमाआशाअनुवेदसर्वाःसोअस्माँअभयतमेननेषत् ।

स्वस्तिदाआघृणिःसर्ववीरोप्रयुच्छन्पुरएतुप्रजानन् ॥

(अष्ट० ७. अध्या० ६. व० २२. ऋ० ५.)

पूषेमाः । इमाः प्राच्याद्या आशाः सर्वाः पूषा अनुवेद आनुपूर्व्येण जानाति । सोऽस्मान् । 'अस्मदो द्वयोश्च' (१. २. ५९) इत्येकस्मिन् बहुवचनम् ।

माम्। तेन सहैक्यमापन्नस्य पुत्रादेर्वचनम्। यत्र भयगन्धोऽपि नास्ति तेनाभयतमेन पथा नेषद् गमतु। स्वस्तिदाः अविनाशस्य दाता। आघृणिरागतदीप्तिः। सर्ववीरः सर्वैः परिचारकपुरुषैस्तद्वान्। अप्रयुच्छन् अप्रमाद्यन् पुर एतु। प्रजानन् प्रकर्षेण जानन्। किम्। गन्तव्यं देशं पन्थानं वा ॥

प्रपथेपथामजनिष्टपूषाप्रपथेदिवःप्रपथेपृथिव्याः।
उभेअभिप्रियतमेसधस्थेआचपराचचरातिप्रजानन् ॥

(अष्ट० ७. अध्या० ६. व० २४. ऋ० ६.)

प्रपथे। पथां मध्ये प्रकृष्टः पन्थाः प्रपथः। तत्र पथि पूषाजनिष्ट जातः सुकृतामभिमतप्रापणाय स्थितः। सामान्योक्तस्य विशेषवचनं — प्रपथे दिवः पथां मध्ये प्रपथे स्थितः। पृथिव्याश्च पथां मध्ये प्रपथे स्थितः। उभे द्यावापृथिव्यौ प्रियतमे सर्वेषां भोगाधिकरणत्वात्। सधस्थे सह तिष्ठन्त्यौ। अभि प्रति आचरति च पराचरति च पृथिवीं प्रत्यागच्छति दिवं च प्रति परागच्छति प्रजानन् एवंभूतस्य सुकृत इदं स्थानमुपभोगयोग्यमिति ॥

'उपसर्पे'ति चतस्रः —

उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवाम्।
ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् ॥

(अष्ट० ७. अध्या० ६. व० २७. ऋ० १०.)

सर्वस्य मातृस्थानीयामेतां भूमिमुपसर्प उपगच्छ हे प्रेत! उरुव्यचसं बहुव्यापिनीं पृथिवीम्। क्रियाशब्दोऽयम्। 'प्रथ प्रख्याने'। प्रथितां विस्तीर्णाम्। सुशेवां सुसुखाम्। एषा च त्वा भूमिरूर्णम्रदाः ऊर्णावन्म्रदीयसी मृदुतरा। युवतिः स्त्रीवत् सुखकारिणी, मिश्रयित्री वा धान्यादीनाम्। दक्षिणावते। विभक्तिव्यत्ययः। दक्षिणावतः दत्तदक्षिणत्वात्। निर्ऋतेर्मृत्युदेवताया उपस्थात् समीपस्थानात् पातु ॥

उच्छ्वंचस्वपृथिविमानिबाधथाःसूपायनास्मैभवसूपवञ्चना।
मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि ॥

(अष्ट० ७. अध्या० ६. व० २८. ऋ० ११.)

उच्छ्वञ्चस्व। श्वसेरन्तर्भावितण्यर्थस्येदं रूपम्। प्रकृत्यन्तरं वा तेन समानार्थम्। हे पृथिवि! इमं प्रेतमुच्छ्वासय। मा निबाधथाः नितरां मा बाधिष्ठाः। अस्मै अस्य प्रेतस्य सूपायना सुगमना भव। सूपवञ्चना। वञ्चिः प्रलम्भनार्थोऽन्यत्र। इह तु प्रतिष्ठाने द्रष्टव्यः। सुप्रतिष्ठाना च भव। यथायं त्वयि जन्मान्तरेऽपि सुप्रतिष्ठितो भवति तादृशी भव। यथा च माता पुत्रं बालं सिचा वस्त्रान्तेनाभ्यूर्णोति अभिच्छादयति, एवमेतं प्रेतं हे भूमे! अभ्यूर्णुहि अभिच्छादय यथास्योपरि नानर्था उपनिपतन्ति ॥

उच्छ्वञ्चमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयन्ताम्।

तेगृहासोघृतश्चुतोभवन्तुविश्वाहास्मैशरणाःसन्त्वत्र ॥

(अष्ट० ७. अध्या० ६. व० २८. ऋ० १२.)

उच्छ्वञ्चमाना एवमुच्छ्वासयन्ती पृथिवी सुतिष्ठतु। सहस्रं मितः। 'मीञ् हिंसाम्' इत्यस्य क्विपि छान्दसे ह्रस्वे तुकि रूपं जसन्तम्। हिंसितारः। सहस्रसंख्या अपि हिंसितारः। उपश्रयन्ताम्। उपशब्दोऽपशब्दस्यार्थे। अपश्रयन्तां विहायैनमन्यत्रापगच्छन्तु। मिनोतेर्वा क्विपि मितः। मिनोतिश्च निर्माणे द्रष्टव्यः। 'प्राचीनवंशं विमितं मिन्वन्ति' 'हविर्धानं मिन्वन्ती'त्यादौ स्थूणादीनामवटे स्थापनेऽपि दृष्टः 'यत्र यूपमुन्मिन्वन्ती'त्यादौ। सर्वथा गृहादीनां कर्तारस्तक्षादयोऽत्र मितः। ते सहस्रमेनमुपश्रयन्ताम्। हिः पादपूरणः। ते च तक्षादिनिर्मिता गृहासः घृतश्चुतः घृतं क्षीरादि क्षरन्तो गोभिर्युक्ताः अस्मै प्रेताय भवन्तु। अत्र लोके विश्वाहा सर्वदा च शरणाः सन्तु निवासयोग्यास्ते गृहा भवन्तु। जन्मान्तरेऽप्ययमत्र लोके[1] श्रीमान् जायतामिति पिण्डितार्थः ॥

उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोअहंरिषम्।

एतांस्थूणांपितरोधारयन्तुतेत्रायमःसादनातेमिनोतु ॥

(अष्ट० ७. अध्या० ६. व० २८. ऋ० १३.)

उत्ते। (अहं) ते त्वदर्थं पृथिवीमुत्तभ्नामि दृढीकरोमि। त्वत्। षष्ठ्यर्थे

1. 'के श्रीभिर्युक्तः श्री' ख. ग. पाठः.

पञ्चमी । परि । उपरिशब्दस्योकारलोपः । तवोपरि । इमं लोगम् । छान्दसो गकारः । लोकम् । तत्रैव तैत्तिरीयकम् । निदधत् स्थापयन् तव वश्यं कुर्वन् । मा उ मो । मैव । रिषं रिष्टो मा भूवं मा केनचिद्धिंसिषि । एतां स्थूणां चितिलक्षणां पितरो धारयन्तु ते त्वदर्थम् । अत्र च चितौ यमस्ते सदना । द्वितीयैकवचनस्याकारः । सदनं गृहम् । मिनोतु करोतु ॥

प्रतीचीनेमामहनीष्वाःपर्णमिवादधुः ।

प्रतीचींजग्रभावाचमश्वंरशनयायथा ॥

(अष्ट० ७. अध्या० ६. व० २८. ऋ० १४.)

प्रतीचीने । प्रतीचीनं प्रतिगतम् । तस्मिन् प्रतीचीने उपस्थितेऽस्मिन्नहनि मां प्रेतस्य पुत्रमादधुराहितवन्तः कर्तृत्वेन स्थापितवन्तः । के । सदस्याः स्मृतिकारा वा । इष्वाः पर्णमिव यथा इषुकाराः पर्णं वाजाख्यमादधुरुपश्लेषयन्ति, तद्वत् । अहं च प्रतीचीं मां प्रत्युपस्थितां वाचं प्रार्थनारूपाम् 'उच्छ्वञ्चस्व पृथिवि मा निबाधथाः' इत्याकारां वाचं जग्रभ गृहीतवानस्मि अश्वं रशनया यथा । रशना बन्धनरज्जुः । तया यथा अश्ववाहा अश्वं गृह्णन्ति तद्वत् ॥

सोमएकेभ्यःपवतेघृतमेकउपासते ।

येभ्योमधुप्रधावतितांश्चिदेवापिगच्छतात् ॥

(अष्ट० ८. अध्या० ८. व १२. ऋ० १.)

सोम एकेभ्यः । यमी ऋषिः । एकेभ्यो देवेभ्यः सोमः पवते क्षरति । एके[१] च देवाः घृतमुपासते भागत्वेन । येभ्यश्च देवेभ्यो मधु प्रधावति । 'मधुना जुहोति । महत्यै वा एतद्देवतायै रूपम् । यन्मधु' इत्यश्वमेधे दर्शनात् । तान् सोमपान् आज्यपान्मधुपांश्च । चित् पादपूरणः । एवावधारणे । तानेव त्वमपिगच्छतात् अपिगच्छ तैः सस्थानो भव ॥

तपसायेअनाधृष्यास्तपसायेस्वर्ययुः ।

तपोयेचक्रिरेमहस्तांश्चिदेवापिगच्छतात् ॥

(अष्ट० ८ अध्या० ८ व० १२. ऋ० २.)

१. 'के दे' ख. ग. पाठः.

तपसा । ये तपसा अनाधृष्याः अनभिभवनीयाः ब्रह्मचारिणः । ये च तपसा अतिथिपूजनादिना स्वः स्वर्गं ययुः गृहस्थाः । ये च महः महत् महितं वा तपश्चक्रिरे वानप्रस्थाः संन्यासिनश्च । तानेव त्वमपि गच्छ । तैः सस्थानो भव ॥

येयुध्यन्तेप्रधनेषुशूरासोयेतनूत्यजः ।
येवासहस्रदक्षिणास्तांश्चिदेवापिगच्छतात् ॥

(अष्ट० ८. अध्या० ८. व० १२. ऋ० ३.)

ये युध्यन्ते । ये क्षत्रियाः प्रधनेषु प्रकृष्टधनेषु सङ्ग्रामेषु युध्यन्ते युद्ध्वा च जयन्ति । ये वा शूरासः शूराः तनूत्यजः अभिमुखागतास्तनूस्त्यजन्ति, न पुनः पृष्ठतःकृत्य पलायन्ते । ये वा सहस्रदक्षिणाः यज्वानः । तांश्चित् ॥

येचित्पूर्वऋतसापऋतावानऋतावृधः ।
पितॄन्तपस्वतोयमतांश्चिदेवापिगच्छतात् ॥

(अष्ट० ८. अध्या० ८. व० १२. ऋ० ४.)

ये चित् । चित् चार्थे । ये च पूर्वे पितृपितामहादयः ऋतसापः । ऋतमिति यज्ञनाम । सपतिस्तुतिकर्मा । 'इन्द्रं वो नरः संख्याय सेपुरि'त्यादौ दर्शनात् । तस्य ण्यन्तस्य क्विपि रूपं जसन्तम् । ऋते ये सापयन्ति छन्दोगैः स्तुतीः कारयन्ति ते ऋतसापः यज्वानः । ऋतवानः सत्यवन्तः । ऋतावृधः । ऋतमुदकं वृष्टिलक्षणम् । तस्य वर्धयितारः 'अग्नौ प्रास्ताहुतिरि'ति न्यायेन । तान् पितॄनस्मत्पूर्वपुरुषान् गणरूपान् वा पितॄन् । तपस्वतस्तपस्विनः हे यम! । यमप्राप्त्यभिमुखः प्रेत एव यमेत्यामन्त्र्यते । तांश्चित् ॥

सहस्रणीथाःकवयोयेगोपायन्तिसूर्यम् ।
ऋषीन्तपस्वतोयमतपोजाँअपिगच्छतात् ॥

(अष्ट० ८. अध्या० ८. व० १२. ऋ० ५.)

सहस्रणीथाः । सहस्रेण बहुभिरग्निहोत्रादिभिः कर्मभिर्नीथाः नीताः प्रापिताः ये (कवयः) सूर्यं गोपायन्ति तत्सालोक्यं गताः । य इति वचनात् तानिति गम्यते । तानृषीन् तपस्वतस्तपोजान् तपसो जातान् त्वमपि गच्छ हे यम ! प्रेत ! ॥

उरूणसावसुतृपाउदुम्बलौयमस्यदूतौचरतोजनाँअनु ।
तावस्मभ्यंदृशयेसूर्यायपुनर्दातामसुमद्येहभद्रम् ॥

(अष्ट० ७. अध्या० ६. व० १६. ऋ० १२.)

उरूणसौ पृथुनासिकौ । असुतृपौ भक्ष्यमाणानां दुष्कृतामसुभिस्तृप्तौ उदुम्बलौ । उरुशब्दस्य उदुम्भावः । 'टुदु उपतापे' इत्यस्य वा उकार उपजनः । मकारः प्रत्ययः अन्तर्भावितण्यर्थश्च । परेषां तापयितृबलौ । यमस्य दूतौ प्रेषकरौ जनान् सुकृतो दुष्कृतश्च अनु प्रति चरतः । यावेवंभूतौ तौ अस्मभ्यं मृतस्य पुत्रादिभ्यो दृशये दर्शनाय सूर्याय । षष्ठ्यर्थे चतुर्थी । सूर्यस्य दर्शनार्थम् । असुं प्राणमस्य मरणेन गतप्रायम् अद्य पुनर्दाताम् । द्विर्वचनप्रकरणे 'छन्दसि वेति वक्तव्यमि'ति वचनाद् द्विर्वचनाभावः । दत्ताम् । इह शरीरे भद्रं सर्वोपद्रवरहितमसुं दत्तामिति ॥

सव्यावृतो व्रजन्ति 'इमे जीवाः' ।

इमेजीवाविमृतैराववृत्रन्नभूद्भद्रादेवहूतिर्नोअद्य ।
प्राञ्चोअगामनृतयेहसायद्राघीयआयुःप्रतरंदधानाः ॥

(अष्ट० ७. अध्या० ६. व० २६. ऋ० ३.)

जीवन्तः इमे मृतस्य सम्बन्धिनः ज्ञातयो वयं मृतैः । पञ्चम्यर्थे तृतीया । मृतेभ्यः पितृभ्यो व्याववृत्रन् । व्याङ्पूर्वस्य वृतेर्लडर्थे लुङि उत्तमपुरुषबहुवचने छान्दसं रूपम् । व्यावर्तामहे । अतः परं च नः अस्माकं भद्रा देवहूतिः देवयज्या अभूत् भवतु । अद्य अतः प्रभृति प्राञ्चः प्राङ्मुखा वयमगाम । वर्तमाने लुङ् । 'इणो गा लुङि' (२-४-४५) । गच्छामः । किमर्थम् । नृतये । नृतिः नर्तनम् । हसो हासः । आभ्यां च स्वैरचेष्टा लक्ष्यते । नृतये हसाय च स्वैरचेष्टायै गच्छामः । द्राघीयो दीर्घतरम् आयुः प्रतरं प्रतरम् अतिशयेन दधानाः अस्मासु स्थापयन्तः ॥

सञ्चयने त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षति 'शीतिके शीतिकावती'ति ।

शीतिकेशीतिकावतिह्लादिकेह्लादिकावति ।

मण्डूक्या३सुसङ्गमइमंस्व१ग्निंहर्षय ॥

(अष्ट० ७. अध्या० ६. व० २२. ऋ० १४.)

दमन ऋषिः । प्रोक्षणोदकं वृष्टित्वेन रूप्यते । सन्ततवृष्टिः शीतिका[1]। हे शीतिके! शीतिकावति! । शीतिका कम्पव्याधिः अतिशैत्ये सत्युत्पद्यते । तद्वति! अत्यन्तशैत्यवति! । ह्लादिके! सर्वस्य ह्लादयित्रि! ह्लादिकावति! अत्यन्तं ह्लादनवति! । त्वमिमं प्रदेशं मण्डूक्या मण्डूकस्त्रिया सुसङ्गमः सुष्ठु सङ्गमय । इमं चाग्निं सुष्ठु हर्षय । अनेकार्थत्वाद् धातूनां हृष्यतिः शमनार्थः । सुष्ठु शमय । तथैव तैत्तिरीयकम्— "इमं स्वग्निं शमयेति" । इममग्निम् । शमयित्वा प्रदेशमिमं तथा कुरु, यथा जलेशया मण्डूक्यप्यागम्य शेते इति ॥

अस्थिकुम्भं भूमौ निदधाति 'उपसर्पेति' । पांसुभिः कुम्भं प्रच्छादयति 'उच्छ्वंचस्वे'ति । प्रच्छाद्य पठन्ति 'उच्छ्वंचमाने'ति । कपालेन कुम्भं पिदधाति 'उत्ते स्तभ्नामी'ति । चतस्रोऽपि दह्यमानानुमन्त्रणे गताः । कुम्भगतेऽस्थिरूपे यजमाने योज्याः ॥

शान्तिकर्मणि अग्निं दक्षिणा हरेयुः 'क्रव्यादमग्निमि'त्यर्धर्चेन ।

क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः ।

(अष्ट० ७. अध्या० ६. व० २२. ऋ० ९.)

क्रव्यं मांसं तस्य अत्तारमग्निम् औपासनवचनं प्रहिणोमि प्रगमयामि दूरं विप्रकृष्टदेशे चतुष्पथादौ निरस्यामि । निरस्तश्च सः यमराज्ञः यमराजस्य सकाशं गच्छतु । रिप्रवाहः रिप्रं पापं तस्य वोढा रिप्रवाहः क्रूरकर्मण्यस्माभिरुपयुक्तः ॥

अथाग्निं जनयेत् 'इहैवे'ति ।

इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ।

(अष्ट० ७. अध्या० ६. व० २२. ऋ० ९.)

---

1. 'ष्टि च' ख. ग. पाठः.

इहैव अस्मद्गृह एव अयं क्रव्यादोऽग्नेरितरः शान्तिकर्मार्थमुपात्तः जातवेदा अस्माभिः प्रत्तं हव्यं देवेभ्यो वहतु । प्रजानन् यद् यस्मै वोढव्यं तत् प्रजानन् ॥

उदकधारां हरेत् 'तन्तुं तन्वन्नि'ति।

तन्तुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ।
अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनम् ॥

(अष्ट० ८. अध्या० १. व० १४. ऋ० ६.)

अग्निं प्रति देवानां वचनम् । हे अग्ने ! यथा तन्तुवायस्तन्तून् प्रसार्य पटं वयति तद्वत् तन्तुं तन्तुस्थानीयमङ्गजातं तन्वन् विस्तारयन् । अर्थसङ्गत्या तृतीयेन पादेन सम्बन्धः । जोगुवाम् । 'गु शब्दे' । यङ्लुगन्तात् क्विप् । शब्दायितारः स्तोतारो जोगुवः । तेषां जोगुवां यजमानानाम् । अपः । कर्मनामैतत् । यज्ञाख्यं कर्म । अनुल्बणम् अविकृतमविगुणं वयत । वचनव्यत्ययः । वयनं निर्वर्तय । निर्वर्त्य च रजसोऽस्माल्लोकाद् भानुं दीप्तं देवलोकमन्विहि । अनुर्धात्वर्थानुवादी । इहि गच्छ । हविर्गृहीत्वा गच्छंश्च तव धिया प्रज्ञया कर्मणा वा कृतान् पथः स्वर्गमार्गान् ज्योतिष्मतः प्रकाशकान् रक्ष प्रहतान् कुरु । मनुर्भव मन्ता च भव । कस्य । यस्य देवस्य यो भागस्तस्य मन्ता । मत्वा च दैव्यं दिवि भवं जनं देवजनं जनय अमृतकल्पेन हविषा प्रोज्जीवय ॥

चर्मण्यमात्यानारोहयेत् 'आरोहतायुरि'ति ।

आरोहतायुर्जरसंवृणानाअनुपूर्वंयतमानायतिष्ठ ।
इहत्वष्टासुजनिमासजोषादीर्घमायुःकरतिजीवसेवः ॥

(अष्ट० ७. अध्या० ६. व० २७. ऋ० ६.)

संकुसुकस्यैषा । हे ज्ञातयः ! इदं चर्मारोहत आयुर्जीवितं जरसं च वृणानाः यावज्जरमायुः प्रार्थयमानाः । अनुपूर्वं ज्येष्ठक्रमेण वर्णक्रमेण च

१. 'शान्' ख. ग. पाठः.

यतमानाः । अन्येषु प्रेतकर्मसु कनिष्ठक्रमेण प्रवृत्तिः । अत्र तु शान्तिकर्माणि सर्व एव प्रयत्नोऽनुपूर्वं कर्तव्यः । यतिष्ठ यावन्तः स्थ । इह कर्मणि वष्ट हविषां पापानां वा तनूकर्ता अयमग्निः सुजनिमा सुजन्मा सजोषाः समानप्रीतिरन्यैर्हविर्भागिभिः दीर्घमायुः करति करोतु जीवसे चिरजीवनाय वो युष्माकम् ॥

मध्यमं परिधिं परिदधाति 'इमं जीवेभ्य' इति ।

इमंजीवेभ्यःपरिधिंदधामिमैषांनुगादपरोअर्थमेतम् ।

शतंजीवन्तुशरदःपुरूचीरन्तर्मृत्युंदधतांपर्वतेन ॥

(अष्ट० ७. अध्या० ६. व० २१. ऋ० ४.)

स एवर्षिः । इमं मध्यमं परिधिं जीवेभ्यः जीवतामेषामर्थाय दधामि मृत्योरेषां च मध्ये स्थापयामि तिरोधानार्थम् । तिरोधानेन किं प्रयोजनम् । एषां जीवतां मध्येऽपरो मृतादन्यः कश्चिदप्येतमर्थं मरणलक्षणं क्षिप्रकाल एव मा गात् । किन्तु सर्व एव शतं शरदो जीवन्तु पुरूचीः । पुरूणि बहून्यार्तवानि कुसुमादीन्यञ्चति । मृत्युं तु पर्वतेनाश्मनान्तर्दधताम् अन्तर्हितं कुर्वन्तु । अनेन पादेनोत्तरतोऽग्नेरश्मानं दधाति ॥

जुहोति 'परं मृत्यो' इति चतसृभिः ।

परंमृत्योअनुपरेहिपन्थांयस्तेस्वइतरोदेवयानात् ।

चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् ॥

(अष्ट० ७. अध्या० ६ व० २६. ऋ० १.)

संकुसुकस्यैव । हे मृत्यो ! येन पथा देवा यान्ति स देवयानः पन्थाः । तस्मादितरो यस्ते स्वभूतः पितृयानः पन्थाः तं परम् अन्यं पन्थां पन्थानम् अनुपरेहि अनुपरागच्छ तत्तद्गामिनं जनमनुवर्तस्व, मास्माननुपरागाः । किञ्च चक्षुष्मान् त्वं भवसि । ब्रुवतो मे श्रद्धां द्रष्टुं शृण्वंश्च भवसि, नानादरेण पराङ्मुखः । अतः चक्षुष्मते शृण्वते च ते ब्रवीमि । किं ब्रवीषि । नोऽस्माकं प्रजां दुहितृदौहित्रादिकां मा रीरिषः, मा उत वीरान् पुत्रपौत्रादिकान् ॥

मृत्योःपदंयोपयन्तोयदैतद्राघीयआयुःप्रतरंदधानाः।
आप्यायमानाःप्रजयाधनेनशुद्धाःपूताभवतयज्ञियासः॥

(अष्ट० ७. अध्या० ६. व० २६. ऋ० २.)

मृत्योः पदं मृत्योरागतस्य पदं पादं निधानस्थानं योपयन्तः संल्लोपयन्तः प्रमृजन्तः यद् यस्मात् ऐत गतवन्तो यूयम्। यस्मादिति वचनात् तस्मादिति गम्यते। तस्माद् द्राघीयः दीर्घतरमायुः प्रतरं प्रकृष्टतरं दधानाः युष्मासु स्थापयन्तः प्रजया धनेन चाप्यायमानाः वर्धमानाः शुद्धाः शरीरेण पूता मनसा भवत। लङि मध्यमपुरुषबहुवचने 'बहुलं छन्दस्यमाङ्योगेऽपि' (६-४-७५) इत्यडभावः। अभवत। कीदृशाः। यज्ञियासः यज्ञार्हाः। अनेन होमेन यूयमेवम्भूताः स्थेति ज्ञातीन् प्रति कर्तुर्वचनम्॥

'इमे जीवाः' 'इमं जीवेभ्यः' इति द्वे अपि गते॥

अमात्यानीक्षेत 'यथाहानी'ति।

यथाहान्यनुपूर्वंभवन्तीयथऋतवऋतुभिर्यन्तिसाधु।
यथानपूर्वमपरोजहात्येवाधातरायूंषिकल्पयैषाम्॥

(अष्ट० ७ अध्या० ६. व० २६. ऋ० ५.)

यथाहान्यनुपूर्वं क्रमेण भवन्ति आदित्यवारः सोमवार इति। यथा वा वसन्तादय ऋतवः ऋतुभिः ग्रीष्मादिभिः साधु अनुपूर्वं यन्ति, न कदाचिदन्यथा। यथेति वचनात् तथेति गम्यते। तथैषां ज्ञातीनां मध्ये पूर्वं पूर्वोत्पन्नम् अपरः अपरोत्पन्नः यथा न जहाति ज्येष्ठे जीवति कनिष्ठो न म्रियते, एव एवमेषामायूंषि कल्पय हे धातः! प्रजापते!॥

अङ्गाना ईक्षेत 'इमा नारीर'ति।

इमानारीरविधवाःसुपत्नीराञ्जनेनसर्पिषासंविशन्तु।
अनश्रवोनमीवाःसुरत्नाआरोहन्तुजनयोयोनिमग्रे॥

(अष्ट० ७ अध्या० ६ व० २७. ऋ० ७.)

इमाः नार्यः अविधवाः भर्तृमत्यः। सुपत्नीः सुपत्न्यः शोभनः पतिरासाम्। अविधवा इत्यनेनैव सिद्धे शोभनपतित्वविवक्षया पुनर्वचनम्।

आञ्जनेन ईषदञ्जनसाधनेन सर्पिषाज्येन संविशन्तु । अनेकार्थत्वाद् धातूनां संविशिरञ्जने वर्तते । अक्षिणी समञ्जन्ताम् । समज्य चानश्रवः अश्रुरहिताः अरुदत्यः । अनमीवाः अरोगाः शारीरमानसपीडारहिताः । सुरत्नाः शोभनाभरणाः । जनयः अपत्यजननयोग्याः योनिं गृहमारोहन्तु प्रविशन्तु अग्रे प्रथमं पुरुषेभ्यः ॥

'अश्मानमभिमृशेत् 'अश्मन्वती'ति ।

**अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः ।**

**अत्राजहामयेअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् ॥**

(अष्ट० ८. अध्या० १. व० १४. ऋ० ८.)

अग्निना यज्ञार्थमाहूता देवाः परस्परमाहुः । अश्मन्वती । 'अशू व्याप्तौ' । भावे मनिन्प्रत्ययः । व्याप्तिमती अप्रतिहतगतिः देवसेना रीयते । 'रीङ् गतौ' । लोडर्थे लट् । रीयतां गच्छतु । यूयमपि संरभध्वं यज्ञान् प्रति गन्तुं संरम्भं कुरुत । कोऽर्थः । उत्तिष्ठत प्रतरत चाध्वानं हे सखायः! । अत्रैषु मार्गेषु ये मार्गाः अशेवाः असुखाः असन् तान् जहाम परित्यजाम । ये तु शिवाः पन्थानः तान् वयमुत्तरेम अतिक्रामेम तैर्गच्छेम अभिवाजान् हविर्लक्षणान्यन्नानि प्रति । सैषा अश्मशब्दलिङ्गादस्मिन् कर्मणि विनियुक्ता । अथवा अस्मिन्नेवार्थे योज्यते—अश्मन्वती उत्तरतः स्थापितेनाश्मना तद्वती । एषा क्रिया रीयते गच्छति समाप्यते । हे अमात्याः! यूयं संरभध्वमित्यादि । गृहं प्रति गमनमार्गेषु शिष्टपदयोजना तुल्या ॥

गृहान् प्रति गच्छन्तोऽमात्या जपेयुः 'आपो हि ष्ठे'ति । तिस्रो गताः ॥

अत्र कर्तुर्जपः 'परीमे गामि'ति ।

**परीमेगामनेषतपर्यग्निमहृषत ।**

**देवेष्वक्रतश्रवःकइमाँआदधर्षति ॥**

(अष्ट० ८. अध्या० ८. व० १३. ऋ० ५.)

शिरिम्बिठस्यार्षम् । इमे अमात्याः गां पर्यनेषत परिणयन्ति परिगृह्य नयन्ति । अग्निं च परि अहृषत परिगृह्य हरन्ति । देवेषु च श्रवः हविराख्यमन्नम् अक्रत अकृषत यदहौषुः । एवं च क इमानादधर्षति आधर्षितुं प्रभवति ॥

उदित आदित्ये सौर्याणि स्वस्त्ययनानि च जपन्ति । उभयान्यपि व्याख्यातानि ॥

अन्नं संस्कृत्य जुहोति 'अप नः' इति ।

अप॑ नः॒ शोशु॑चद॒घमग्ने॑ शुशु॒ग्ध्या र॒यिम् ।

अप॑ नः॒ शोशु॑चद॒घम् ॥

(अष्ट० १. अध्या० ७. व० ५. ऋ० १.)

अत्र छन्दोगब्राह्मणाधीतमितिहासमाचक्षते — "कुत्सश्च लुशश्च युगपदिन्द्रं व्यह्वेताम्[1] । स इन्द्रः कुत्समुपावर्तत । स तं शतैः कुशाभिरण्डयोरबध्नात् मायं लुशं गमदिति । एतज् जज्ञिवान् लुश इन्द्रमुपालभत । प्रमुञ्चस्व । परिकुत्सादिहागहि । किमु त्वा वा मुष्कयोर्बद्ध[2] आसत इति । स कुत्सोऽबिभेत् इन्द्रं वाहमर्के[3]मिषमेनसा पर्यगृहिषीति । स तदेनोऽपनुनुत्सुः अग्निमस्तौदि"ति । हे अग्ने! नः अस्माकमघम् अपशोशुचत् अपनय । रयिं धनं च आशुशुग्धि । शाधीति याच्ञाकर्मसु पठ्यते । तस्यैवेदं विकृतं रूपम् । याच्ञया च तत्पूर्वकं दानं लक्ष्यते । आभिमुख्येन देहि । अप नः । अर्थभूयस्त्वार्थोऽभ्यासः । अभ्यासे हि भूयांसमर्थं मन्यन्ते यथाहो दर्शनीया अहो दर्शनीयेति ॥

सु॒क्षे॒त्रि॒या सु॑गातु॒या व॑सू॒या च॑ यजामहे ।

अप॑ नः॒ शोशु॑चद॒घम् ॥

(अष्ट० १. अध्या० ७ व० ५. ऋ० २.)

सुक्षेत्रिया । सर्वत्र तृतीयाया डादेशः । इह लोके तावच्छोभनक्षेत्रेच्छया परलोके सुगातुया सुगतीच्छया वसूया धनेच्छया च त्वां यजामहे । त्वं चाप नः शोशुचदघम् ॥

प्र यद्भन्दि॑ष्ठ ए॒षां प्रास्माका॑सश्च सू॒रयः॑ ।

अप॑ नः॒ शोशु॑चद॒घम् ॥

(अष्ट० १. अध्या० ७. व० ५. ऋ० ३.)

प्र यद् । यदिति पुल्लिङ्गेऽपि । 'सुपां सुलुक् —' (७ १-३९)इत्यादिना सोर्लुक् । योऽहं प्रभन्दिष्ठः । भन्दतिरर्चतिकर्मा । ततस्तृजन्तात्

---

१. 'ह्यताम्' ग., 'ह्येताम्' घ. पाठः. २. 'योर्लऽधबद्ध' ख. पाठः. ३. 'क' घ. पाठः.

'तुश्छन्दसि' (५-३-५९) इति इष्ठनि 'तुरिष्ठेमेयस्सु' (६-४-१५४) इति तृशब्दस्य लोपे रूपम्। प्रकर्षेण स्तोता। कस्य। एषाम्। पूर्वनिर्दिष्टस्याग्नेरयं प्रतिनिर्देशः। व्यत्ययेन बहुवचनम्। 'इदमोऽन्वादेशे —' (२-४-३२) इत्यन्वादेश उदात्तः। अस्याग्नेः। ये चास्माकासः आस्माकाः अस्माकं सम्बन्धिनः। सूरयो मेधाविनः। प्रशब्दश्रुतेर्भन्दिष्ठ इत्येतद्विपरिणामेनापेक्ष्यते। ये अस्मदीयाः सूरयः प्रभन्दिष्ठाः। तेषामिति गम्यते। तेषां सर्वेषां नः पापमपनयेति ॥

प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयम्।

अपनःशोशुचदघम् ॥

(अष्ट० १. अध्या० ७. व० ५. ऋ० ४.)

प्र यत्ते। (हे अग्ने!)। यदिति जसो लुक्। ये वयं ते तव प्रसूरयः। स्तोतृनामैतत्। प्रकर्षेण स्तोतारः। यच्छ्रुतेस्तदध्याहारः। ते वयं प्रजायेमहि प्रजाः प्राप्नुयाम। ते इति षष्ठीनिर्देशात् प्रसादेन स्वभूताः इति वा वाक्यशेषः, तव प्रसादेन तव वा स्वभूताः इति। किञ्चाप नः शोशुचदघम् ॥

प्रयदग्नेःसहस्वतोविश्वतोयन्तिभानवः।

अपनःशोशुचदघम् ॥

(अष्ट० १. अध्या० ७. व० ५. ऋ० ५.)

प्र यत्। यत्। षष्ठ्येकवचनस्य लुक्। यस्याग्नेः सहस्वतो बलवतः स्वभूता भानवः ज्वालाः विश्वतः सर्वतो यन्ति, स त्वमपनयाघम् ॥

त्वंहिविश्वतोमुखविश्वतःपरिभूरसि।

अपनःशोशुचदघम् ॥

(अष्ट० १. अध्या० ७. व० ५. ऋ० ६.)

त्वं हि। हिर्यस्मादर्थे। हे विश्वतोमुख! सर्वतोज्वाल! हे अग्ने! यस्मात् त्वं विश्वतः परिभूरसि। परिपूर्वो भवतिः परिग्रहे वर्तते। परिग्रहीतासि स्तोतृणां यष्टृणां च। तस्मादस्माकमपि अघमपनयेति ॥

द्विषोनोविश्वतोमुखातिनावेवपारय।

अपनःशोशुचदघम् ॥

(अष्ट० १. अध्या० ७, व० ५, ऋ० ७.)

द्विषो नः। हे विश्वतोमुख! नः अस्माकं द्विषः अतिपारय यथा वयं तानतीत्य गच्छेम तथा कुरु। नावेव। यथा कश्चिन्नाविकः सिन्धुं नावातिपारयति तद्वत्। किञ्च अप नः॥

सनः॒सिन्धु॑मिव॒नाव॒याति॑पर्षाः॒स्व॒स्तये॑।

अप॑नः॒शोशु॑च॒द॒घम्॥

(अष्ट० १. अध्या० ७. व० ५. ऋ० ८.)

स नः। यस्त्वमेवमुक्तगुणः स त्वं नः अस्मानतिपर्षाः अतिपारय स्वस्तये अविनाशाय सिन्धुमिव नावया नावा नाविकः कश्चित्। किञ्च अप नः शोशुचदघम्॥

श्राद्धमन्त्रा व्याख्याताः॥

शूलगवे 'रुद्राय महादेवाय जुष्टो वर्धस्वेति' वृषभस्याभिषेचनमन्त्रो निगदसिद्धः॥

'यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मी'ति नियोजनमन्त्रः। रुद्रदेवत्योऽयं पशुः। तथाच 'रुद्राय जुष्टो वर्धस्वे'त्यभिषेचनमन्त्रः। 'हराय कृथाये'त्यादिभिश्च द्वादशभिर्देवनामभिर्होमः। तस्मादयमपि मन्त्रस्तद्देवत्य एव। लक्षणतश्च तद्देवत्यत्वम्। इदं हि देवस्य लक्षणं 'यस्मै नमः' इति। तथाच शिंशुमारब्राह्मणे श्रूयते—'यस्मै नमस्तच्छिरो धर्मो मूर्धानमि'त्यादि। अत्र हि देवतान्तराणां स्वशब्देनोक्तत्वाद् 'यस्मै नम' इति देवस्य लक्षणतो निर्देशः॥

**हराय कृथाय शर्वाय शिवाय भवाय महादेवायोग्राय पशुपतये रुद्राय शङ्करायेशानायाशनये स्वाहा।**

हरेत्यादिस्वाहाकारान्तो द्वादशभिर्देवनामभिर्युक्त एको होममन्त्रः वपाया अवदानानां स्थालीपाकस्य च। नाम्नां निर्वचनं यथासम्भवं कर्तव्यम्। भक्तानामार्त्तिं हरतीति हरः। करोति कृथः कर्ता समस्तस्य। 'शॄ हिंसायाम्'। शृणाति सर्वमन्तकाल इति शर्वः। भवति सर्वत्रेति भवः। शिवं भद्रं, तत् सर्वेभ्यः करोतीति शिवः। 'शिव एको ध्येयः शिवङ्करः सर्वस्य। सर्वमन्यत् परित्यजे'त्यथर्वशिखा।

''शिवमिच्छन् मनुष्याणां तस्मादेष शिवः स्मृतः।''

१. 'स' ख. पाठः. २. 'पात्तस्वा' ख. ग. पाठः.

इति महाभारतम् । आकारप्रभावाभ्यामन्येभ्यो महानिति महादेवः । उग्रोऽनभिभवनीयः । 'उग्रं हास्य राष्ट्रमव्यर्थ्यं भवती'ति दर्शनात् । पशुपतिः[1] व्याख्यातम् । रोदयति सर्वमन्त्यकाल इति रुद्रः । रोदेर्णिलुक् चेति वैयाकरणाः । अशुभद्रावको वा रुद्रः । शं सुखं, तत् करोतीति ताच्छील्ये ट इति शङ्करः । ईशानः सर्वस्येश्वरः । अश्नोतेरशनिः सर्वव्यापी ॥

बलिं हरेद् 'यास्ते रुद्रे'त्यादिभिः ।

यास्तेरुद्रपूर्वस्यांदिशिसेनास्ताभ्यएतद् ।

नमस्तेअस्तुमामाहिंसीः ॥

हे रुद्र! यास्ते सेनाः पूर्वस्यां दिशि स्थिताः ताभ्यः एतद् बलिरूपेण मया दीयते । एनदिति पाठे अनन्वादेशेऽपि छान्दस एनदादेशः । शिष्टं स्पष्टम् । एतेन प्रतिदिशं बलिमन्त्रा व्याख्याताः । यास्ते रुद्र! दक्षिणस्यां दिशि प्रतीच्यां दिशि उदीच्यां दिशीति ॥

'कद्रुद्राय', 'इमा रुद्राय', 'आ ते पितः', 'इमा रुद्राय' इति चतुर्भिः सूक्तैरुपस्थानम् ।

कद्रुद्रायप्रचेतसेमीह्ळुष्टमायतव्यसे ।

वोचेमशन्तमंहृदे ॥

(अष्ट० १. अध्या० ३. व० २६. ऋ० १.)

कद्रुद्राय । कण्वस्यार्षम् । कत् कदा नु रुद्राय । तादर्थ्ये चतुर्थी । प्रचेतसे प्रकृष्टज्ञानाय । मीह्ळुष्टमाय व्यष्ट्या भूमेरतिशयेन सेक्त्रे । जगद्योनौ वा स्ववीर्यस्य सेक्त्रे । तव्यसे । तुरिति सौत्रो धातुर्वृद्ध्यर्थः 'तुरुस्तुशम्यमः —' (७-३-९५) इत्यत्र निर्दिष्टः । तस्य तृचि 'तुश्छन्दसि' (५-३-५९) इतीयसुनि कृते 'तुरिष्ठेमेयस्तु' (६-४-१५४) इति तृचो लुकि छान्दस ईयसुन ईकारलोपः । तवीयसे प्रवृद्धतराय । एवम्भूतं रुद्रमुद्दिश्य । हृदे शन्तमं हृदयस्यातिशयेन सुखतरं वचनं कदा नु वोचेम । वचेराशिषि 'लिङ्याशिषि'(३-१-८६) 'वच उम्' (७-४-२०) ॥

यथानोअदितिःकरत्पश्वेनृभ्योयथागवे ।

यथातोकायरुद्रियम् ॥

(अष्ट० १. अध्या० ३. व० २६. ऋ० २.)

१. 'तिः गतः । रो' क. पाठः.

यथा नः । दितिः खण्डनम् । तद् यस्य नास्ति सः अदितिरखण्डिताज्ञो रुद्रः । यथा स नोऽस्माकं सम्बन्धिने पश्वादिकाय रुद्रियं करत् करोति कुर्याद् वा । रुद्रस्येदं रुद्रियम् । तस्येदमित्यस्मिन्नर्थे रुद्रशब्दात् घश्छन्दसि बहुलमुपलभ्यते । यथा 'विदेहि रुद्रो रुद्रियं महित्वमि'ति । रुद्रो यादृशं पालनं करोति तादृशं यथा नः पश्वादिभ्यः कुर्याद् अखण्डिताज्ञो रुद्रस्तथा वोचेमेति पूर्वेणान्वयः ॥

यथानोमित्रोवरुणोयथारुद्रश्चिकेतति ।

यथाविश्वेसजोषसः ॥

(अष्ट० १. अध्या० ३. व० २६. ऋ० ३.)

यथा नः । यथा च नोऽस्मान् मित्रश्च वरुणश्च रुद्रश्च स्वयं चिकेतति जानाति अहो अभिरूपा स्तुतिरिति । यथा च विश्वे उक्ताश्चानुक्ताश्च सर्वे सजोषसः समानप्रीतयो भूत्वा चिकेतन्ति, तथा कदा नु वोचेमेति पूर्ववदन्वयः ॥

गाथपतिंमेधपतिंरुद्रंजलाषभेषजम् ।

तच्छंयोःसुम्नमीमहे ॥

(अष्ट० १. अध्या० ३. व० २८. ऋ० ४.)

गाथपतिम् । गाथानां लौकिकानां पतिं पालयितारं मेधपतिं मेधानाम् अश्वमेधादीनां पतिं रुद्रं जलाषभेषजम् । जलाषमिति सुखनाम । सुखरूपाण्यस्य भेषजानि, न दाहच्छेदादिवत् तीक्ष्णानि । तदिति प्रसिद्धिमाह । तदत्यन्तप्रसिद्धं सुम्नं सुखम् ईमहे याचामहे । 'दुहियाची'ति द्विकर्मकता रुद्रं सुम्नमीमहे इति । शं सुखं तदस्यास्ति काम्यतता इति शंयुः । 'कंशंभ्यां —' (५.२.१३८) इति युस् । सुखकामस्य यजमानस्यार्थाय सुम्नमीमहे इति ॥

यःशुक्रइवसूर्योहिरण्यमिवरोचते ।

श्रेष्ठोदेवानांवसुः ॥

(अष्ट० १. अध्या० ३. व० २९. ऋ० ५.)

यः शुक्रः । यो रुद्रः । कीदृशः । देवानां श्रेष्ठः ।

"अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः"

इति इह महाभारतम् । वसुः प्रशस्तश्च । एवंभूतो रुद्रः शुक्रो वर्ण इव सूर्यः हिरण्यमिव रोचते । यच्छब्दश्रुतेः क्रियापेक्षत्वात् तच्छब्दमध्याहृत्योत्तरयर्चैकवाक्यता । सः ॥

शंनः करत्यर्वते सुगं मेषाय मेष्ये ।

नृभ्यो नारिभ्यो गवे ॥

(अष्ट० १. अध्या० ३. व० २७. ऋ० ६.)

शन्नः । स रुद्रोऽस्माकम् अर्वते अश्वाय शं करति करोतु सुगं सुखेन गम्यम् । न च केवलायार्वते । किन्तर्हि । मेषादिभ्यश्च । उत्तरास्तिस्रः सोमदेवत्या अपि 'चतुर्भिः सूक्तैरि'ति कृत्स्नस्य सूक्तस्य विनियोगसामर्थ्याद् रौद्रेऽपि यज्ञे प्रयुज्यन्ते । सोमोऽपि देवस्याष्टासु मूर्तिष्वन्यतमा मूर्तिरिति । दिशश्चोपस्थीयन्ते, न देवः । ततः किम् । यथा रौद्रीभिर्दिशामुपस्थानं, तथा सौमीभिरपि ॥

अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् ।

महि श्रवस्तुविनृम्णम् ॥

(अष्ट० १. अध्या० ३. व० २७. ऋ० ७.)

अस्मे सोम । हे सोम ! अस्मे अस्मासु श्रियमधिनिधेहि । अधिः सप्तम्यर्थानुवादी । अस्मासु स्थापय । कियतीम् । शतस्य नृणां बहूनां पुरुषाणामुपभोगयोग्याम् । महि महत् । श्रवः अन्नं धनं वा । तुविनृम्णम् । तुवीति बहुनाम । नृम्णं बलम् । तयोर्बहुव्रीहिः । स्वरस्तु छान्दसः । बहुविधेन बलेनोपेतं श्रवश्चास्मे अधिनिधेहि ॥

मा नः सोमपरिबाधो मारातयो जुहुरन्त ।

आ न इन्दो वाजे भज ॥

(अष्ट० १. अध्या० ३. व० २७. ऋ० ८.)

मा नः । हे इन्दो ! सोम ! नोऽस्मान् सोमपरिबाधः सोमयागस्य परिबाधितारो[1] राक्षसादयो मा जुहुरन्त । ह्वृच्छेर्वा हुरतेर्वा संमोहनार्थस्यैतद्रूपम् ।

---

१. 'बाधयितारः' ख. ग. पाठः.

संमोहं मा प्राविपन् । (तथा अरातयः शत्रवो मा जुहुरन्त ।) त्वं च नोऽस्मान् वाजे सङ्ग्रामे यज्ञे वा आभज आभीक्ष्ण्येन स्वीकुरु ॥

यास्तेप्रजाअमृतस्यपरस्मिन्धामन्नृतस्य ।
मूर्धानाभासोमवेनआभूषन्तीःसोमवेदः ॥

(अष्ट० १. अध्या० ६. व० २७. ऋ० ९.)

यास्ते । हे सोम! अमृतस्यामरणधर्मणः । परस्मिन् धामन् परे धामनि स्थाने वेद्याख्ये । ऋतस्य प्राप्तस्य । ते याः प्रजाः परिचारकाः इत्यर्थाद् गम्यते । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ताः प्रजाः । मूर्धा मूर्धनि प्रधानभूते । सर्वस्य मूर्धस्थानीयो वा त्वम् । नाभा पृथिव्या नाभिस्थानीये उत्तरवेद्याख्ये स्थाने । वेनः । वेनतिः कान्तिकर्मा । कामयस्व अविच्छिन्नमेता निर्वर्तयन्तु यज्ञमिति । तथा हे सोम! आभूषन्तीश्च प्रजाः वेदः विद्धि । आभूषन्तीरित्याङ् मर्यादायाम् । 'भू सत्तायाम्' । श्रुतिस्मृत्युदीरितायां मर्यादायां या भवन्ति ताः विद्धि । विदित्वा च कामयस्वेति ॥

इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ।
यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरम् ॥

(अष्ट० १. अध्या० ८. व० ५. ऋ० १.)

इमा रुद्राय । कुत्सस्यार्षम् । तवसे । अन्तर्णीतमत्वर्थमिदम् । तवो वृद्धिः । तद्वते । कपर्दिने जटाबन्धवते । क्षयद्वीराय । 'क्षि निवासगत्योः' । यमाश्रित्य वसन्ति वीरभद्रादयो वीरास्तस्मै । रुद्राय । तादर्थ्ये चतुर्थी । एवंभूतं रुद्रमुद्दिश्य । इमा मतीः । मन्यतेरर्चतिकर्मणः । स्तुतिनामैतत् । स्तुतीः । प्रभरामहे । 'हृग्रहोर्भश्छन्दसि' (वा० ३-१-८४) । प्रहरामहे प्रोच्चारयामः । यथा प्रहरणे सत्यस्माकं द्विपदे चतुष्पदे च शं सुखमसत् । पञ्चमो लकारः । स्यात् । यथा च ग्रामेऽस्मिन् यत्राहं वसामि तत्र । यत् किञ्चित् प्राणिजातं तद्विश्वं पुष्टमनातुरं चासत् ॥

मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ।
यच्छंचयोश्चमनुरायजेपितातदश्यामतवरुद्रप्रणीतिषु ॥

(अष्ट० १. अध्या० ८. व० ५. ऋ० २.)

मृळानः। हे रुद्र! नोऽस्मान् (मृळ) मृलय सुखय। उत नः अपि च अस्माकं मयस्कृधि सुखं कुरु। ऐहिकामुष्मिकादिभेदेनापौनरुक्त्यम्। क्षयद्वीराय ते। द्वितीयार्थे चतुर्थी। क्षयद्वीरं त्वाम्। नमसा हविषा चरुपुरोडाशादिलक्षणेन, नमस्कारेण वा। विधेम परिचरेम परिचरन्तश्च। यच्छं शमनं रोगाणामुत्पन्नानाम्। योश्च। यौतेः पृथग्भावकर्मण एतद्रूपम्। यापनं चाभयानां सर्वप्राणिनाम्। पिता मनुः। 'मानव्यो हि प्रजाः' इति हि ब्राह्मणम्। आयेजे। यजिर्दानार्थः। आङ्पूर्वश्चादानार्थः। लिटि सम्प्रसारणे 'वा छन्दसि'(६-१ १०६)इति पूर्वरूपाभावे यणादेशः। द्विर्वचनमेत्वाभ्यासलोपौ। आप्तवान् स्वीकृतवान्। वयमपि तदश्याम अश्नुवीमहि। हे रुद्र! तव प्रणीतिषु शासनेषु वर्तमानाः॥

अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः।
सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः॥

(अष्ट० १. अध्या० ८. व० ५. ऋ० ३.)

अश्याम ते। हे रुद्र! मीढ्वः! वृष्ट्युदकेन सेक्तः! क्षयद्वीरस्य तव या देवयज्या त्वामुद्दिश्य कृता तया ते सुमतिं शोभनां मतिं भक्तेष्वनुग्रहात्मिकां बुद्धिं वयम् अश्याम अश्नुवीमहि। त्वं च अस्माकं या विशः पुत्रादयः मनुष्याः ताः सुम्नायन्। सुम्नमिति सुखनाम। 'छन्दसि परेच्छायामपि'(वा० ३-१-८) इति क्यच्। ताभ्यः सुखमिच्छन्। आचर अभिमुखं चर। इत् पदपूरणः। वयं च अरिष्टवीराः केनाप्यहिंसितपुत्रा भूत्वा ते हविर्जुहवाम। एषा नः प्रार्थना॥

त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे।
आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे॥

(अष्ट० १. अध्या० ८. व० ५. ऋ० ४.)

त्वेषं वयम्। त्वेषं दीप्तम्। यज्ञसाधं यज्ञस्य साधयितारम्। एष ह्येव साधुकर्म कारयति। वङ्कुं वञ्चितारं यज्ञद्रुहाम्। कविं क्रान्तदर्शिनं सर्वत्राप्रतिहतज्ञानम्। एवम्भूतं रुद्रं वयमवसे अस्मत्पालनाय निह्वयामहे नियमेन

ह्वयामहे । स च निहूतः दैव्यं हेळः देवानां सम्बन्धिनं कोपम् । अस्मत् अस्मत्तः आरे दूरे अस्यतु । अस्य देवस्य या सुमतिः तामेव वयम् आवृणीमहे ॥

दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ।

हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥

(अष्ट० १. अध्या० ८. व० ५. ऋ० ५.)

दिवो वराहम् । दिवः द्युलोकात् निह्वयामहे इति सम्बन्धः । वराहो मेघः तत्सदृशः ग्रीवा देवस्य नीला । तद्द्वारकोऽयं देवस्य मेघसादृश्यव्यपदेशः । अरुषं महान्तं कपर्दिनम् । त्वेषं रूपं रूपवन्तम् । नमसा नमस्कारेण हविषा वा प्रदेयेन निमित्तेन हविः प्रदातुं निह्वयामहे । स च वार्याणि वरणीयानि भेषजानि हस्ते बिभ्रदागत्य शर्म सुखम् । वर्म कवचं छर्दिः । रेफः छान्दसः । छदिः । शत्रुप्रयुक्तानामिष्वादीनां छादयितृ वर्म । अस्मभ्यं यंसत् यच्छतु ददातु ॥

इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनम् ।

रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥

(अष्ट० १. अध्या० ८. व० ६. ऋ० ६.)

इदं पित्रे । मरुतां पित्रे रुद्राय तुभ्यमिदं स्तुतिरूपं वचः उच्यते स्वादोः स्वादीयः । स्वादु मध्वादि । ततोऽपि स्वादुतरम् । वर्धनं वर्धयितृ । स्तूयमाना हि देवता वीर्येण वर्धते । त्वं च नः अस्मभ्यम् । रास्व देहि । चः पादपूरणः । अमृत ! हे अमरण ! अमरणधर्मन् !। मर्तभोजनम् । मर्ताः मनुष्याः तेषां यद् भोग्यमन्नपानादि तद् रास्व । त्मने । सर्वत्र द्वितीयार्थे चतुर्थी । आत्मानं माम् । तोकाय । तोकः पुत्रः । तनयाय । तनयः पौत्रः । उपलक्षणं चैतत् । सपुत्रबान्धवं मां मृळय ॥

मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमानउक्षितम् ।

मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥

(अष्ट० १. अध्या० ८. व० ६. ऋ० ७.)

मा नः । नः अस्माकं महान्तं विद्यादिभिर्वृद्धं ज्येष्ठं पुत्रं मा वधीः । एवमुत्तरेष्वपि योज्यम् । अर्भकः बालः । उक्षा सेचनसमर्थो युवा । उक्षितः सिक्तो गर्भस्थः । मातापितरौ प्रसिद्धौ । प्रियास्तन्वः तनूः । पुत्राद्यपेक्षं बहुवचनम् । सर्वेषाम् अस्माकं तनूः मा रीरिषः मा हिंसीः ॥

मा॒नस्तो॒के॒त॑न॑ये॒मा॒न॑आ॒यौ॒मा॒नो॒गोषु॒मा॒नो॒अश्वे॑षुरीरिषः ।

वी॒रान्मा॒नो॑रु॒द्रभा॒मि॒तो॒व॑धीर्ह॒वि॒ष्म॑न्त॒ःसद॒मित्त्वा॑हवामहे ॥

(ऋ० १. अध्या० ८. व० ६ ऋ० ८.)

मा नस्तोके । अस्माकं तोके पुत्रे तनये तत्पुत्रे च मा रीरिषः तद्विषयां हिंसां मा कार्षीः । द्वितीयार्थे वा सप्तमी । तोकादिकं मा हिंसीः । आयुश्शब्द उकारान्तोऽप्यस्ति 'छन्दसीण' इत्युण्प्रत्ययान्तः । वीरान् । पुत्राणामुक्तत्वात् परिचारकादयः शूराः । भामितः । 'भाम क्रोधे' । ण्यन्तः । अपराधेन क्रोधितोऽपि सन् । मा वधीः । वयं हि हविष्मन्तो भूत्वा सदमित् सदैव त्वा हवामहे आह्वयामहे हविरुपभोगार्थम् । अतः मा वधीरिति ॥

उप॑ते॒स्तोमा॑न्प॒शु॒पाइ॒वाक॑रं॒रास्वा॑पितर्मरुतांसु॒म्नम॒स्मे ।

भ॒द्राहि॒ते॒सु॒म॒तिर्मृ॒ळय॑त्त॒माथा॑व॒यम॑व॒इत्ते॑वृणीमहे ॥

(अष्ट० १. अध्या० ८. व० ६. ऋ० ९.)

उप ते । हे मरुतां पितः ! अहं ते स्तोमान् स्तोत्राण्युपाकरम् उपाकरोमि संस्करोमि । पशुपा इव । यथाग्नीषोमीयादीनां पशूनां पाता यजमानः पशून् पशुदेवताभ्य उपाकरोति तद्वत् । त्वं चास्मे अस्मभ्यम् । सुम्नं सुखं रास्व । या ते सुमतिः भक्तेष्वनुग्रहात्मिका बुद्धिः सा भद्रा कल्याणी । हिः प्रसिद्धौ । मृळयत्तमा अतिशयेन सुखयित्री च । अथातो वयम् अवः पालनम् । इच्छब्दोऽवधारणे । ते इत्यनन्तरं च द्रष्टव्यः । तवैवावो वृणीमहे ॥

आ॒रे॑ते॒गो॒घ्नमु॒तपू॑रुष॒घ्नंक्षय॑द्वीरसु॒म्नम॒स्मेते॑अस्तु ।

मृ॒ळाच॑नो॒अधि॑चब्रूहिदे॒वाधा॑चनः॒शर्म॑यच्छद्वि॒बर्हाः ॥

(अष्ट० १. अध्या० ८. व० ६. ऋ० १०.)

---

१ 'ब्र' ख. पाठः.

आरे ते । हे क्षयद्वीर! यत्ते गोघ्नं पुरुषघ्नं च घोरं रूपं तत् आरे दूरे अस्तु । यत्तु ते सुम्नं सुखकरं शिवं रूपं तदस्मे अस्माकमस्तु । समीप इत्यर्थाद् गम्यते । 'रुद्रो वा एष यदग्निस्तस्यैते तनुवो घोरान्ये शिवान्ये'ति तैत्तिरीयकब्राह्मणम् । हे देव! त्वं नो मृळ मृलय च अस्मभ्यमधिब्रूहि च । पक्षपातेन वचनमधिवचनम् । 'तमिद्धनेषु हितेष्वधिवाकाय हवन्ते येषामिन्द्रस्ते जयन्ती'त्यादौ दर्शनात् । अधा च अपि च । नोऽस्मभ्यम् । शर्म सुखम् । यच्छ देहि द्विबर्हाः । शर्मण एतद्विशेषणम् । छान्दसं पुंस्त्वम् । बृहिर्वृद्ध्यर्थः । द्वयोर्लोकयोरिह चामुत्र च प्रसिद्धम् ॥

अवोचामनमोअस्माअवस्यवंःशृणोतुनोहवंरुद्रोमरुत्वान् ।

तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥

(अष्ट० १. अध्या० ८. व० ६ ऋ० ११.)

अवोचाम । अवस्यवः । अवः पालनम् । तस्मात् क्यजन्तात् 'क्याच्छन्दसी'-त्युप्रत्ययः । अवस्यवः पालनकामाः वयमस्मै रुद्राय नमः नमोवाकमवोचाम उक्तवन्तः ब्रूमो वा । स च रुद्रः नः हवम् आह्वानं शृणोतु । मरुत्वान् । मरुतोऽस्य पुत्राः । तैस्तद्वान । तन्नोऽस्माकं तत्कर्म रुद्रस्तवाख्यम् । मित्रादयो मामहन्ताम् । 'मह पूजायाम्' । पूजयन्तु अहो अनेन सुस्तुतो रुद्रः इति । सिन्धुरन्तरिक्षं समुद्रो नदी वा ॥

आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ।

अभिनोवीरोअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः ॥

(अष्ट० २. अध्या० ७. व० १६ ऋ० १.)

आ ते पितः । गार्त्समदम् । हे मरुतां पितः! ते सुम्नं त्वत्कर्तृकं सुखमस्मान् आ एतु । नः अस्मान् सूर्यस्य संदृशः सन्दर्शनाद् मा युयोथाः । यौतिः पृथग्भावकर्मा । मा पृथक् कार्षीः । यावज्जीवं चक्षुष्मन्तो भूयास्म । नः वीरः पुत्रः अर्वति अश्वे अश्वपृष्ठे अभिक्षमेत सर्वप्रकारं समर्थोऽस्तु । प्रजाभिश्च वयं प्रजायेमहि पुत्रपौत्रादयो बहवो नः सन्तु ॥

त्वादत्तेभीरुद्रशन्तमेभिःशतंहिमाअशीयभेषजेभिः ।

व्य१स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीः ॥

(अष्ट० २. अध्या० ७. व० १६. ऋ० २.)

त्वादत्तेभिः । हे रुद्र ! त्वया दत्तैः शन्तमेभिः सुखतमैः भेषजैः शतं हिमाः शतं संवत्सरान् अशीय जीव्यासम् । द्वेषः । द्वितीयान्तमेतदनुसन्तम् । तच्चार्थाच्छत्रुसम्बन्धि । तदसत् अस्मत्तः । वीत्युपसर्गश्रुतेः सापेक्षत्वाच्चातयस्वेति वक्ष्यमाणमपेक्षते । विचातयस्व विगमय । न केवलं विचातयस्व । किन्तर्हि । वितरं चातयस्व व्यंहः । अंहः पापम् । तच्चापि विचातयस्व । व्यमीवाः रोगजातीश्च । कीदृशीः । विषूचीः । विष्वक् नाना अञ्चतीः सर्वशरीरव्यापिनीः ॥

श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसांवज्रबाहो ।

पर्षिणःपारमंहसःस्वस्तिविश्वाअभीतीरपसोयुयोधि ॥

(अष्ट० २. अध्या० ७. व० १६. ऋ० ३.)

श्रेष्ठः । हे रुद्र ! त्वं जातस्य सर्वभूतजातस्य श्रिया श्रेष्ठोऽसि । तवसाम् । तवो वृद्धिः । मतुपो लुग् द्रष्टव्यः । तवस्वताम् । तवस्तमः । अत्रापि मतुपो लुक् । तवस्वत्तमः । वृद्धिमतां मध्ये अतिशयेन वृद्धिमान् । हे वज्रबाहो ! । वज्रमायुधम् । पिनाकाद्यायुधहस्तः । एवंभूतस्त्वं नः अस्मान् अंहसः पारं पर्यन्तं पर्षि प्रापय स्वस्त्यविनाशं यथा तथा । रपः पापं तज्जन्योऽनर्थो वा । तस्य या अभीतीः अभिगमनानि ताश्च विश्वाः अस्मत्तो युयोधि पृथक् कुरु ॥

मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती ।

उन्नोवीराँअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमि ॥

(अष्ट० २. अध्या० ७. व० १६. ऋ० ४.)

मा त्वा । हे रुद्र ! त्वा त्वाम् । वयं नमोभिर्मा चुक्रुधाम । यथा राज्ञो वा राजमात्रस्य वा पृथग्जनेन कृतो नमस्कारः प्रत्युत क्रोधाय भवति तद्वत् सर्वदेवं प्रति इति मन्यमानो गृत्समद एवमाह । क्षुद्रस्यापि मे नमस्तव महेश्वरस्य क्रोधाय मा भूदिति । मा दुष्टुती । तृतीयैकवचनस्य पूर्वसवर्णः । मा च दुष्टया स्तुत्या त्वां चुक्रुधाम । हे वृषभ ! वर्षितः ! वृषभवत् प्रसह्यकारिन् ! । मा सहूती मा देवतान्तरैरस्मीन्द्रादिभिः सहाह्वानेन चुक्रुधाम । नः अस्माकं वीरान् भेषजैः उदर्पय सम्बन्धय । त्वां अहं भिषजां मध्ये भिषक्तमं शृणोमि ॥

हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥

(अष्ट० २. अध्या० ७. व० १६. ऋ० ५.)

हवीमभिः । हवनयोग्यैर्हविर्भिः । हवते । व्यत्ययेनायं भावे कर्तृप्रत्ययः । हूयते । यः । चतुर्थ्यर्थे प्रथमा । यस्मै हवीमभिः हविर्भिः हूयते । तं रुद्रम् । स्तोमेभिः स्तोत्रैः अवदिषीय । 'दैप् शोधने' इत्यस्याशिषि लिङ् । छान्दसमात्मनेपदमित्वं च । अवदातं कृषीय । स च रुद्रः । ऋदूदरो मृदूदरः । ऋजूदरो वा । मलोपो जकारो वा छान्दसः । तथावग्रहाभावः । सुहवः स्वाह्वानः । बभ्रुः बभ्रुवर्णः भर्ता वा जगताम् । सुशिप्रः । शिप्रे हनू नासिके वा उत्तरोष्ठस्योपरि श्मश्रुश्रेणिर्वा । 'पीत्वी शिप्रे अवे वय' इत्यादौ दर्शनात् । मृगयादिव्यापारे हिरण्मयी केशनियमनरज्जुर्वा शिप्रा । दृश्यते च 'शिप्राः शीर्षसु वितता हिरण्मयीरि'ति । ताः शोभना अस्येति सुशिप्रः । एवम्भूतो रुद्रः नः अस्मान् । अस्यै प्रसिद्धायै मनायै । 'अनभिमानुको हैष देवः प्रजा भवति यस्य रुद्रः प्रजां पशून् वाभिमन्यते' इत्यादावभिपूर्वको मन्यतिः कोपदृष्टौ दृष्टः । स एवायमभिरहितः । भिदादिषु दर्शनात् स्त्रियां भावे अङ् । मा रीरधत् । रन्धयतिर्वशीकरणकर्मा । दृश्यते हि 'द्विषन्तं मह्यं रन्धयन्निति'[1] । स्वस्यै शत्रूणां वा कोपदृष्ट्यै मास्मान् वश्यान् कार्षीदिति ॥

उन्मा ममन्द वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥

(अष्ट० २. अध्या० ७. व० १७. ऋ० १.)

उन्मा । वृषभो मरुत्वांश्च रुद्रः । त्वक्षीयसा । 'तक्षू त्वक्षू तनूकरणे' । तृजन्तादीयसुन् । अत्यन्तं तनुभूतेन वयसोपलक्षितम् । नाधमानं याचमानं, वय इति गम्यते । एवम्भूतं माम् । उन्ममन्द । 'मदि स्तुतिमोदस्वप्नगतिषु' । अन्तर्भावितण्यर्थः, ण्यन्त एव वा । लोडर्थे लिट् । उन्मादयतु उत्कृष्टमोदं करोतु । उन्मोदितश्चाहं अरपाः अपापः अनर्थरहितो वा भूत्वा अशीय अश्नुवीय । किम् । तमेव रुद्रम् । घृणीव छायां यथा घर्माभितप्तश्छायामश्नुते तद्वत् ।

1. 'वे आकारः' ख. ग. घ. पाठः.

प्राप्य च रुद्रस्य यत् सुम्नं स यद् भक्तेभ्यः करोति तद् आविवासेयं तेनात्मानं-माच्छादयेयं तदनुभवेयम् ॥

क्व१स्यतेरुद्रमृळयाकुर्हस्तोयोअस्तिभेषजोजलाषः ।
अपभर्तारपसोदैव्यस्याभीनुमांवृषभचक्षमीथाः ॥

(अष्ट० २. अध्या० ७. व० १७. ऋ० ७)

क्व स्यः । हे रुद्र ! क्व ते स्यः सः हस्तः । कीदृशः । मृळयाकुः सुखयिता । यो वा जलाषः भेषजः । तद्वत्ययं तदुपचारः । सुखरूपेण भेषजेन तद्वान् । दैव्यस्य देवसम्बन्धिनस्तैः क्रियमाणस्य तेषां वासुरैः क्रियमाणस्य रपसः अनर्थस्यापहर्त्ता । एवम्भूतस्ते स हस्तः क्व । नाहं तेन स्पृश्ये । तेन मां स्पृश, येन स्पृष्टोऽहमपापः स्याम् । यथोक्तं महाभारते—

"स्पृष्टस्य त्र्यम्बकेनाथ फल्गुनस्यामितौजसः ।
यत्किञ्चिदशुभं देहे तत् सर्वं नाशमेयिवत् ॥"

इति । स्पृष्ट्वा च नु क्षिप्रं मां हे वृषभ ! अभिचक्षमीथाः । अभिः सर्वतोभावे । सर्वत्र समर्थं कुरु । सर्वपुरुषार्थक्षमं कुरु ॥

प्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि ।
नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम ॥

(अष्ट० २. अध्या० ७. व० १७. ऋ० ८.)

प्र बभ्रवे । बभ्रुः कपिलपिङ्गलः । स्वभावतस्तद्वर्णाय । वृषभाय वर्षित्रे वृषभवत् प्रसह्यकारिणे वा । श्वितीचे । श्वेतो वर्णः श्विती । तामञ्चति गच्छति इति श्वित्यङ् । दृश्यते चान्यत्रापि —'श्वित्यञ्चो मा दक्षिणतस्कपर्दाः' 'शुक्रा कृष्णादजनिष्ट श्वितीचि' इति । तस्मै । भस्मोद्धूलनेन श्वेतवर्णभाजे । एवंभूताय रुद्राय । महो महीं महतोऽप्याकाशादेर्महतीं सुष्टुतिं शोभनां स्तुतिं प्रेरयामि उच्चारयामि । नमस्य नमस्कुरु हे मदीयान्तरात्मन् ! कल्मलीकिनम् । ज्वलतो नामधेयमिदम् । तेजसा ज्वलन्तम् । रुद्रस्य त्वेषं दीप्तमतिप्रसिद्धं नाम शिवो रुद्र इत्यादि नमोभिर्नमस्कारैः सह गृणीमसि गृणीमः उच्चारयामः नमो रुद्राय नमश्शिवायेति ॥

